# अथ द्वितीयोऽध्यायः ।

श्रीगणेशाय नमः ।

भावार्थः ॥ एवं धर्माधर्मप्रमाणेषु निरूपितेषु अधुना तत्स्वरूपं निरूप्यते । यद्यपि च तदपि एतावत्प्रमाणप्रतिपाद्यत्वेन रूपेण युक्तमेव, तथापि एकत्वानेकत्वादिरूपेणाबुद्धत्वादिह तेन रूपेण निरूप्यते । अत्र च शब्दान्तराद्विषट्प्रमाणकभावनाभेद एवाध्यायार्थः । धात्वर्थभेदस्तु तत्सिद्ध्यर्थं क्वाचित्को निरूप्यते, अपूर्वभेदोऽपि फलत्वेनेति न तावध्यायार्थौ ।

फलीभूतापूर्वभेदोऽपि अपूर्वसाधनभेदाधीन इति तत्साधनजिज्ञासायां स्वर्गादिसाधनस्यैवावान्तरव्यापाररूपापूर्वं * प्रति साधनत्वात् स्वर्गादिफलं प्रति किं धात्वर्थस्य करणत्वं उतोपपदार्थस्य सोमादेरपीति चिन्तायां प्राथमिकभावनान्वयस्य तावत् सिद्धान्तिनोऽपि सम्मतत्वादौत्तरकालिकफलान्वयोऽपि सर्वेषामेवेति प्राप्ते। सर्वथा करणत्वे अनेकादृष्टकल्पनाप्रसङ्गादेकस्यैव फलनिरूपिता करणता, अन्येषान्तु दृष्टविधयैव करणार्थत्वम् । तदत्र धात्वर्थस्यैव करणत्वे सोमादीनां तज्जनकत्वेनैव दृष्टार्थता । सोमादीनां करणत्वे धात्वर्थस्याश्रयविधयैव दृष्टार्थतेति नानेकादृष्टकल्पना ।

---

* व्यापारापूर्वं – इति ख० ग० पुस्तकयो पाठ ।

सन्दिग्धेषु ॥ अक्ताः शर्करा उपदधातीत्यत्र अक्ता इत्यनेनाविशेषाद् यत्किञ्चिदञ्जनसाधनद्रव्यस्य विधिना निर्णीतत्वादुपसंहारस्थेन तेजो वै घृतमित्यर्थवादेन सङ्कोचानुपपत्तेः नार्थवादस्य सन्दिग्धार्थनिर्णये प्रामाण्यमिति प्राप्ते । विधेरविशेषप्रवृत्तत्वेनैव घृतमात्रग्रहणेनाप्युपपत्तेरितराक्षेपकाले प्रमाणाभावादुपक्रमस्याविरोधेनोपपत्तौ उपसंहारस्थस्यार्थवादस्योपलक्षणत्वे प्रमाणाभावाद्विध्यर्थवादयोरेकवाक्यत्वेनैकविषयकत्वस्यावश्यकत्वाच्च युक्तं वाक्यशेषस्य सन्दिग्धार्थनिर्णयेऽपि प्रामाण्यमिति घृतेनैवाञ्जनम् ॥१९॥२५॥

अर्थाद्वा ॥ स्रुवेणावद्यति, स्वधितिनाऽवद्यति, हस्तेनावद्यति इत्यादौ विधेरवदेयद्रव्यविषये सन्देहस्य सामर्थ्यान्निर्णयः । स्रुवेण द्रवमेवाज्यादि । स्वधितिना मांसादि । हस्तेन संहतं* पुरोडाशादि । अतश्च सामर्थ्यसहकृतावद्यतिपदेनैव लक्षणया द्रव्यावदानस्य उद्देश्यत्वाभावादनुवादेन स्रुवादिविधौ न किञ्चिद्बाधकम् । एवं अञ्जलिना सक्तून् जुहोतीत्यादावपि न संपुटाकारोऽञ्जलिः, अपि तु व्याकोशात्मक एव । सामर्थ्यात् । तदेवं विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यरूपाण्यष्टौ प्रमाणानि धर्माधर्मयोर्निरूपितानि । अतः परं भेदादिना तत्स्वरूपं निरूपयिष्यते ॥ २०॥२६॥ ग्रन्थसङ्ख्या ६५० ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां

प्रथमाध्यायस्य चतुर्थपादः ॥०॥

---

* हस्तेनासंहतं, — इति ख॰ ग॰ पुस्तकयोः पाठः ।

नन्विह धात्वर्थातिरिक्तभावनासत्त्वे* भवेन्न तु तस्यां प्रमाणमस्ति, धातूनामेव विकृत्यादिफल इव† तदनुकूलव्यापारमात्रे फूत्कारादौ यत्नादौ च शक्तत्वात्। अतो यत्नादिरूपभावनाया अपि धातुवाच्यत्वाद्धात्वर्थ एव क्रियारूपे सकलकारकान्वयो न तु यागस्य पदश्रुत्या फलकरणत्वमिति चेत्।

पचति, पाकं करोति पाके यतते इति पाकात् पृथक् विनीयमानयत्नादेः पच्यर्थत्वानुपपत्तेः। न च घटमनपाकशब्दस्य फल एव शक्तत्वात् पृथक् विवरणोपपत्तिः। व्यापारविगमेऽपि फलसद्भावात् पाको विद्यते इति प्रयोगापत्तेस्तथापि व्यापारवाचित्वावश्यम्भावात्। अतो भावना यत्नादिर्लिङ्वाच्य एव। अतएव धातुवाच्यमपि साक्षात् फलजनकफूत्कारादिव्यापारवृत्तिपाकत्वादिकमेव। तच्च जातिरखण्डोपाधिर्वेत्यन्यदेतत्।

तज्जनकयत्नादिकन्तु आख्यातवाच्यमेव। तच्च शक्यतावच्छेदकन्तु करोतिविनीयमाणतिप्रादिकं, लाघवात् तिप्रादिकमेव वा। न तु स्थानित्वं, तदुपस्थापकादेशविशेषाणां पदज्ञाननिष्ठकारणतावच्छेदककोटौ प्रवेशे गुरुभूतकारणतावच्छेदकघटितानन्तकार्यकारणभावकल्पनापत्तेः। अप्रवेशे यथाकथञ्चिदुपस्थितणकारादपि भावनोपस्थित्यापत्तेः। शक्यतावच्छेदकन्तु फलोद्देश्यकधात्वर्थातिरिक्तव्यापारत्वम्। फलञ्च क्वचिद्धात्वर्थं क्वचिच्च स्वर्गादीति यथाविवक्षम्।

---

* सत्त्वे एव, — इति ख० ग० पुस्तकयोः पाठः।

† विक्रियादिफलइव, — इति क० पुस्तके पाठः।

एवं स्थिते विशेषजिज्ञासायां सोमादेरेव फलकरणत्वं* तस्य सिद्धत्वेन योग्यत्वाल्लिङ्गात्। तृतीयायाः करणत्वे शक्तत्वेन कारकश्रुतेरेकपदोपात्तत्वरूपपदश्रुत्यपेक्षया बलीयस्त्वाच्च। फलान्वये पदश्रुतेरप्यभावाच्च। अतएव यागादिधात्वर्थः सोमाद्यर्थ एव। न च तदर्थत्वे अदृष्टकल्पना। अग्निहोत्रहोमेन दधिनिष्ठकरणता†सम्पादनवद्यागेनादृष्टमन्तरेणैव सोमनिष्ठकरणतासम्पादनेन यागस्य सोमाङ्गत्वोपपत्तेरिति प्राप्ते।

पदश्रुत्या यागस्यैव फलकरणत्वम्*। यद्यपि च फलान्वयेन सा, तथापि प्राथमिकभावनाऽन्वये यस्य यत् प्रमाणं तद्गतबलवत्त्वस्य तस्यामवस्थायामकिञ्चित्करत्वेऽपि पाष्ठिकफलान्वये तस्य निर्णायकत्वात्। अतश्च प्राथमिकभावनाऽन्वये विद्यमाना पदश्रुतिः फलान्वये निर्णायिका। न च तस्याः कारकश्रुत्यपेक्षया दौर्बल्यम्। लाघविकत्वेऽपि यागकरणत्वस्य सोमकरणत्वान्वयात् प्राग्भावनायामन्वितत्वेन तदन्वयस्य आद्यत्वात्। अन्यथा तिङन्तपदस्य परिपूर्णत्वाभावेन तदुपस्थापितभावनायां सोमस्याप्यन्वयानुपपत्तेः। परिपूर्णं पदं पदान्तरेणान्वेतीति‡ न्यायात्। न च प्रथमावगतस्यापि करणस्य श्रौतस्यार्थिकेन बाधः उपजीव्यत्वादिति यागः फलसाधनं सोमो यागार्थ इति सिद्धम्। प्रयोजनं, सोमापचारे न प्रतिनिध्युपादानं पूर्वपक्षे, सिद्धान्ते तु तत्॥

---

* करणत्वं, — इति ख॰ ग॰ पुस्तकयोः पाठः।

† दधिकरणता, — इति ख॰ ग॰ पुस्तकयोः पाठः।

‡ पदार्थान्तरेणान्वेतीति, — इति ख॰ ग॰ पुस्तकयोः पाठः।

पार्ष्ठिकान्वयबोधवेलायामवगम्यमाना कौस्तुभ एव द्रष्टव्या । तस्मात् सिद्धमाख्यातवाच्या आर्थी भावना, तस्याश्च स्वर्गादि भाव्यम्, धात्वर्थश्च करणम्, सोमादिकन्तु करणानुग्राहकत्वादितिकर्त्तव्यतेति ॥१॥

चोदना ॥ धात्वर्थादेवापूर्वमिति स्थिते ऽपूर्वमेवास्ति न वेति चिन्तायां, क्रमयागध्वंसद्वारेणैव क्षणिकस्यापि यागस्य स्वर्गसाधनत्वोपपत्तौ नापूर्वकल्पने गौरवापत्तेः । न च भिन्नत्वाद्धर्मस्य,

————धर्मं क्षरति कीर्त्तनात् ।

प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि ॥

इति कीर्त्तनप्रायश्चित्तनाश्यत्वानुपपत्तिः । कीर्त्तनादेः पापोत्पत्तिप्रतिबन्धकत्वान्नोक्तरेण तन्नाशकत्वात् । कीर्त्तनात्यन्ताभावविशिष्टज्योतिष्टोमव्यक्तित्वेन कारणत्वकल्पनाद्वा न कश्चिद्दोषः । अतो नापूर्वं किञ्चित् प्रमाणमस्ति इति प्राप्ते ।

चरमिमग्न्योर्नाशवाधिन्याभवन्मते क्षणमयपत्तेभव्ययोग्यमपूर्वमेव कल्प्यते । गौरवस्य फलमुखत्वेनादोषत्वात् । अतश्च प्रधानेन स्वर्गादिफले जननीये अपूर्वं तदवान्तरव्यापारः* । च फलवत्ता दात्मनिष्ठ । अवान्तरव्यापारत्वादेव च न यागादेरन्यथासिद्धिः ।

[illegible]† यत्रैकमेव प्रधानं, तत्र पूर्वोत्तराङ्गसहितात् तस्मादपूर्वोत्पत्तेः प्रधानाव्यवहितमेकमुत्पत्त्यपूर्वं, तेन च सर्वाङ्गान्ते परमापूर्व-

---

* अपूर्वमवान्तरव्यापारः — इति ख० पुस्तके पाठः ।

† तदत्र, — इति ख० ग० पुस्तकयोः पाठः ।

एवञ्च रथो गच्छतीत्यादौ न लक्षणा, गमनानुकूलव्यापारस्यै-वाख्यातार्थत्वात् इति पार्थसारथिः। वस्तुतस्तु यत्नत्वमेव शक्यता-वच्छेदकं, लाघवात्। तद्बाधे तु सर्वत्राश्रयत्वे लक्षणा। यत्नस्यैव चाख्यातोपात्तस्य नित्यं कर्माकाङ्क्षत्वं, करोतिपर्यायत्वादेकैककर्मकत्वं, फलभावनानुकूलत्वाच्च अर्थभावनात्वं द्रष्टव्यम्।

इयञ्चाख्यातोपात्ता भावनैव मुख्यविशेष्या। तद्व्यतिरेकेणेतरपदा-र्थान्वयापर्यवसानात्। तस्यामेव चाख्यातोपात्तायां क्त्वाप्रत्ययाद्युपा-त्तायां वा योग्यताद्यनुसारेण निपातोपसर्गप्रातिपदिकातिरिक्तशब्द-गम्यो यः सुबुपात्तलिङ्गसङ्ख्यातिरिक्तोऽर्थस्तस्य सर्वस्यापि प्रकारतया ऽन्वयः। निपातोपसर्गयोस्तु क्रियासमभिव्याहारादौ सति तयाऽन्वयो-ऽन्यसमभिव्याहारादावन्येनापि। प्रातिपदिकार्थोऽपि सुबर्थे करण-त्वादौ। तद्धितसमासादिघटकप्रातिपदिकावयवार्थानान्तु यत्र कार-कतासम्बन्धेन तद्धितसमासादिवृत्तिर्यथा आग्नेय इत्यादौ, तत्राग्नेर्दे-वतात्वाख्यभावनायामेवान्वयो न तु तद्धितोपात्ते द्रव्ये। स तु पारिभाषिक-एव। यत्र तु कारकातिरिक्तसम्बन्धेन सा, तत्र परस्परान्वयोऽपि। यथाऽश्वाभिधानीमित्यादौ। एवं सुबुपात्तलिङ्गसङ्ख्ययोः समानाभि-धानश्रुत्या सुबर्थे करणत्वादावेवान्वयः। तद्व्यतिरिक्तपदार्थमात्रस्य च सुवर्थकरणत्वादेर्धात्वर्थस्य कर्तृत्वदेकत्वादेश्च कालादेर्लडाद्यर्थस्य विध्यादेर्लिङाद्यर्थस्य च सर्वस्यैव लिङ्गानन्वयिभावनावाचिपदोप-स्थाप्यायां भावनायामेवान्वयः। अतएव भावनादिपदोपस्थापितायां तस्यां नान्वयः। आख्यातेन क्त्वादिना वोपस्थितायान्तु भवत्ये-वान्वयः प्रकारतया। प्रकारताघटकाः सम्बन्धाश्च सर्वे यथायथं

पक्षे दलनादेरप्यर्थप्राप्तत्वेन तद्व्यावृत्तिफलको नियमः । तथापि
वैफल्यात् । न च तस्यादृष्टार्थत्वम् । अदृष्टस्यावश्यकल्पनीयत्वे प्राप्ता-
वघातादेव तत्कल्पनौचित्यात् । अतोऽदृष्टार्थमेवावघातः । तदपि
चादृष्टं न व्रीहिनिष्ठम् । तत्रावच्छिन्नं प्रति आत्मत्वेन समवायिका-
रणत्वात् । अतः पूर्ववदेव व्रीहय एवावघातादौ इति व्रीहिविशि-
ष्टावघात एवादृष्टार्थमारादुपकारकत्वेन विधीयते इति प्राप्ते ।

दृष्टसम्भवे अदृष्टस्यान्याय्यत्वाद्वितुषीभाव एवावघातफलम् । न च
तस्याक्षेपादेव प्राप्तत्वेन विधिवैयर्थ्यम् । दलनाद्युपायान्तरव्यावृत्ति-
फलकनियमस्यैवावघाताभिमतस्यादृष्टार्थं विधेयत्वात् । अत एव कृष्ण-
लचरौ अवघाताभावेन* तस्य लोपः । वस्तुतस्तु व्रीहमावघातस्यैवा-
क्षेपतः पूर्वप्राप्त्या वितुषीभावार्थं विधेयत्वम् । अतस्याक्षेपप्रतिबन्धा-
द्दलनादिव्यावृत्तिफलको नियमः फलम् । वैतुष्यस्य च दलनेनापि
साध्यमानत्वाद्वैयर्थ्यशङ्का तु, अवघातादेव व्रीहिनिष्ठादृष्टस्याप्युत्पत्ति-
कल्पनान्निराकर्तव्या । तददृष्टस्य च अन्यत्वमपि लाघवात् कल्प्यते
न प्रयोजकत्वमपि । दृष्टरूपे वैतुष्य एव तत्कल्पनात् । अतः कृष्ण-
लचरौ वैतुष्याभावेऽपि तल्लोपः । आर्थिकविध्यन्तरकल्पनायां नानेको-
द्देश्यता । तददृष्टस्य च द्वितीयादिधर्मिग्राहकप्रमाणेन व्रीह्यादि-
निष्ठत्वस्यैवावगतेस्तत्त्वेनैव समवायिकारणता नात्मत्वेन । अतस्साव-
घातस्यादृष्टवितुषीभावोभयद्वारा अपूर्वसाधनीभूतव्रीह्युद्देशेन विधा-
नात् सिद्धं संस्कारकर्मत्वम् । प्रयोजनं, यागार्थव्रीह्यपेक्षया व्रीह्य-
न्तरमवघातार्थमुपादेयं पूर्वपक्षे, सिद्धान्ते नेति ॥२॥

* अवघाताभावे, — इति क० पुस्तके पाठ ।

मपरमिति द्वे अपूर्वे । एवं प्रधानभेदेऽपि प्रतिप्रधानं उत्पत्त्यपूर्वभेदः परमापूर्वं त्वेकमिति ज्ञेयम्* । दर्शपूर्णमासयोस्तु पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेतेति वाक्यद्वयेन यागत्रयकरणतानां त्रिकान्तरनिरपेक्षाणां साहित्यावगतेः साहित्यस्य चैककार्यनिरूपितत्वं विनाऽनुपपत्तेः प्रतिसमुदायं समुदायापूर्वमपरं तेन च परमापूर्वमिति† तथापूर्वसिद्धिः । एवमन्यत्रापि चातुर्मास्यद्वादशाहादिषु अपूर्वकल्पना ज्ञेया ।

अङ्गेषु तु सन्निपत्योपकारकाङ्गजन्यापूर्वाणां प्रधान एवोत्पत्त्यपूर्वजननानुकूलयोग्यताजनने उपयोगः । अस्मिन्प्रधानगतयोग्यतया च नाशः । आरादुपकारकाङ्गजन्यानां तु उत्पत्त्यपूर्वनिष्ठतदव्यवहितकार्यजननानुकूलयोग्यताजनने उपयोगः । अव्यवहितस्य कार्यं समुदायापूर्वत्वे तदेव, तदभावे परमापूर्वं स्वर्गादेव वेति ज्ञेयम् । अस्मिन्योग्यतोत्पत्तौ च नाशः । यदि तु परमापूर्वं न तथा किञ्चित्प्रमाणमित्याग्रहोऽस्ति, तदा माऽस्तु तत् । अङ्गानां तु आरादुपकारकाणामुत्पत्त्यपूर्व एव समुदायापूर्वाभावे फलानुकूलयोग्यताजननमेव कार्यमस्तु । सर्वथा सिद्धमपूर्वम् ॥१॥

तानि द्वैधम् ॥ ब्रीहीनवहन्तीत्यादौ पूर्ववदेवावघातस्य फलभावनाकरणत्वमविवादम् । तत्र फलं न ब्रीहयः । अनन्यत्वात् । नापि वैतुष्यम् । तज्जनकत्वस्य लोकसिद्धत्वेनाविधेयत्वात् । नापि

* स्थितम्, — इति ख॰ ग॰ पुस्तकयोः पाठः ।

† प्रतिसमुदायं परमापूर्व्वमपरं तेन च परमापूर्व्वमपरमिति, — इति ख॰ ग॰ पुस्तकयोः पाठः ।

स्तुतशस्त्रयोः ॥ आज्यै स्तुवते, प्रउगं शंसतीत्यादिस्तोत्रशस्त्राणां यागीयदेवतादिप्रकाशकतयाऽन्यमन्त्रवदेव दृष्टार्थत्वादवघातादिवदेव सन्निपत्योपकारकत्वमिति प्राप्ते। लोके गुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तुतिपदवाच्यत्वेन प्रसिद्धत्वात् प्रगीताप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणतात्पर्यकाभिधानस्य च स्तोत्रशस्त्रपदवाच्यत्वात् तेषां गुणिप्रकाशनतात्पर्यकत्वावश्यम्भावेन नैषां मन्त्राणां गुणिप्रकाशनार्थत्वम्। अपि तु गुणप्रकाशनरूपाणां स्तोत्रशस्त्राणामात्मनिष्ठादृष्टार्थतया आरादुपकारत्वमेव। न च प्रयाजशेषाभिघारणन्यायेन दृष्टार्थत्वानुरोधेन लक्षणया गुणिप्रकाशनरूपत्वम्। लिङ्गादेव तादृक्त्वोपपत्तौ विधिवैयर्थ्यात्। एवञ्च माहेन्द्रग्रहविधौ ऐन्द्री स्तुतिरुपपन्ना भवति। इतरथा शब्दसमवायिनी देवता विधिगतशब्देनैव निगमेषु वक्तव्येति महेन्द्रो नेन्द्रशब्देन शक्यते प्रकाशयितुम्। अतो यदीन्द्र एव देवता तथोत्कर्षापत्तिः। सामान्यसम्बन्धबोधकप्रमाणाभावेन वा मनोतास्वाग्निशब्दवल्लक्षणया इन्द्रपदेन महेन्द्रस्यैव प्रकाशनापत्तिः। तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे ॥५॥

विधिमन्त्रयोः ॥ गुणकर्मप्रधानकर्मविधायकाख्यातद्वये निरूपिते प्रसङ्गादभिधायकं तृतीयमाख्यातं निरूप्यते। मन्त्रगतानां ब्राह्मणगतानाञ्च यजत्यन्तादिसमभिव्याहृतानामाख्यातानामपि विधायकत्वम्। सत्यामपि च प्रमाणान्तरेण प्राप्तौ अभ्यासात् कर्मभेद इति प्राप्ते। देवांश्च याभिर्यजते, ददाति अथ हविरग्निमाद्धे-दित्यादौ यजन्त्य* साभिधानकत्वेन स्वविषये अज्ञातज्ञापनरूप-

* यजन्त्यस्य,—इति ख॰ ग॰ पुस्तकयोः पाठः ।

धर्ममात्रे॥ व्रीहीन् प्रोक्षति, स्रुचः सम्मार्ष्टीत्यादौ दृष्टोपकारकत्वासम्भवात् द्वितीयायाश्च साध्यत्ववत्करणत्वेऽपि सक्तून् जुहोति, सत्वभान् पिष्टपक्कान् कुर्यादित्यादौ प्रयोगदर्शनात् पूर्वाधिकरणपूर्वपक्षवदर्थकर्मत्वमेव। वस्तुतस्तु हि करोतेर्द्विकर्मकत्वापत्तेर्न* साध्यत्वम्। अतः करणत्वमपि द्वितीयार्थः। अतश्च व्रीहिकरणकं प्रोक्षणमेवादृष्टार्थत्वेन विधीयते इति प्राप्ते।

कर्मणि द्वितीयेत्यनुशासनात् घटं करोतीत्यादिप्रयोगाच्च साध्यत्वमेव द्वितीयार्थो न करणत्वम्। अनेकशक्तिकल्पनप्रसङ्गात्। कर्मत्वञ्च कर्तुरीप्सिततमं कर्मेतिसूत्रोक्तेप्सिततमत्वरूपमेव। अपि तु तथायुक्तञ्चानीप्सितमिति सूत्रादीप्सितानीप्सितसाधारण साध्यत्वमेव। यथा चैवं सति न सूत्रद्वयवैयर्थ्यं तथा कौस्तुभ एव प्रदर्शितम्। अतश्च व्रीहीणां द्वितीयया साध्यत्वाभिधानात् यागाङ्गत्वावगतेश्च चेप्सितत्वप्रतीतेस्तदुद्देशेन प्रोक्षणं विधीयते। दृष्टद्वारासम्भवेऽपि यावदुक्तमेव द्वारं व्रीहिनिष्ठं कल्प्यते। अतएव यत्र नोपयोगः क्लृप्तः, न वा कल्पयितुं शक्यः, यथा सक्तुषु, तत्र द्वितीयया करणत्वलक्षणामङ्गीकृत्य सक्तुविशिष्टहोमस्यैव अदृष्टार्थं विधानम्। न चानीप्सितकर्मत्वेनाप्यन्वयोपपत्तेर्न करणत्वलक्षणेति वाच्यम्। तथा सति अदृष्टोपकारस्यापि भावनायां कर्मत्वेनान्वयावश्यम्भावे तस्य द्विकर्मकत्वापत्त्योद्देश्यानेकत्वनिमित्तकवाक्यभेदापत्तेः। अतः सक्तुकरणकहोमद्वारादुपकारकत्वेऽपि प्रोक्षणादेः सन्निपत्योपकारकत्वमेव। प्रयोजनं पूर्ववत् ॥४॥

---

* करोतेर्द्विकर्मकत्वावगतेर्न, — इति ख॰ ग॰ पुस्तकयोः पाठः।

शेषे ॥ ऋक्सामभिन्नमन्त्रत्वं यजुष्ट्वम्। स्तोभाक्षरेष्वपि तत्त्वा-त्वातिव्याप्तिः ॥१२॥

निगदो वा ॥ निगदसंज्ञकानां मन्त्राणां संज्ञाभेदादुपांशु यजुषा उच्चैर्निगदेनेति विप्रतिषिद्धधर्मभेदाच्च भेदो यजुर्भ्य इति प्राप्ते। उच्च सामानि यजूंषीति वेदे यथागानमेव मन्त्रभेदानां सङ्कीर्तनमात्मन एव तत्त्वत निगदभूतो भवति। तस्माद्यजुरिति च शिष्टा निगदाख्या यजुष्ट्वमेव। संज्ञा तु ब्राह्मणपरिव्राजकन्याये-नाभेदेऽप्युपपन्ना।

निगदत्वस्य यजुष्ट्वावान्तरधर्मो न नितरां उपांश्वक्षराति-रिक्तस्वरेण गद्यमानत्वम्। मम मवन्तु इत्यादिनिगदेषु उपांशु पठ्यमानेष्वव्याप्तेः। न च धर्मभेदाद्भेदः। विशेषविहितेनोच्चैष्ट्वेन सामान्यविहितस्योपांशुत्वस्यान्यपरत्वावधारणात्। उपांशु यजुषेत्यस्य वेदोपक्रमानुरोधेन यजुर्वेदविहितकर्ममात्रे उपांशुत्वविधायकत्वस्य वक्ष्यमाणत्वेन भवन्मतेऽपि सङ्कोचस्यावश्यकत्वात्। न चैवमुपक्रम-वशेन यजुःपदे वेदलक्षणावन्निगदपदेऽपि यजुर्वेदलक्षणापत्ते-रेकस्मिन् कर्मण्यपि धर्मद्वयविकल्पापत्तिः। वायोर्यजुर्वेद इत्युपक्रमस्य यजुःपद एव लक्षणातात्पर्यग्राहकत्वात्। अन्यथा वायोर्निगदवेद इत्यपि किमावक्ष्यत्। अतएवोच्चैर्निगदेनेति स्वतन्त्र एव निरर्थवाद-कोऽप्युच्चैष्ट्वनियमविधिर्विशेषविहितातिरिक्तनिगदोद्देशेन। तेषु हि परप्रत्यायनरूपकार्यवशेनोपांशुत्वनिवृत्तावपि मन्द्राद्यनेकस्वर-प्राप्तौ उच्चैष्ट्वनियमो नानुपपन्नः। अतो निगदभेदे यजुर्भेद-प्रायश्चित्तम्, आश्विनादौ पारिप्लवशंसनं वा ॥१३॥

विधिप्रतिबन्धकत्वं स्पष्टम्। एवं अग्नीदग्नीन् विहरेत्यादौ सम्बोधनविभक्तेरभिमुखश्रोतृमात्रविषयाया अभिमुखानभिमुखसाधारणविधिविरोधित्वम्। इमौत्यादेरुत्तमपुरुषस्य च परप्रवर्त्तनारूपविधिविरोधित्वम्। अतो विधायकत्वासम्भवात् मन्त्रगतानां स्मारकत्वं, ब्राह्मणगतानां निमित्तप्रतिपादकत्वं लक्षणयेति द्रष्टव्यम् ॥६॥

तच्चोदकेषु ॥ मन्त्रप्रसङ्गादेवुद्भिय मन्त्रं मे गोपायेति वेदप्रयुक्तमन्त्रशब्दार्थनिर्णयाय तल्लक्षणमुच्यते। यत्राभियुक्तानां मन्त्रपदवाच्यत्वप्रकारिकोपस्थितिर्विषयत्वाख्यसम्बन्धेन, स मन्त्रः। वाच्यतावच्छेदकञ्च मन्त्रत्वमखण्डोपाधिर्वेद्यत्वादेतत् ॥७॥

शेषे ॥ एतद्ब्राह्मणानि पञ्च हवींषीति वेदप्रयुक्तब्राह्मणशब्दार्थपरिज्ञानार्थं* तल्लक्षणमपि प्रसङ्गादेव। मन्त्रातिरिक्तवेदत्वमेव ब्राह्मणत्वम् ॥८॥

अनाम्नातेषु ॥ ऊहप्रवरनामधेयानां सत्यपि प्रयोगकाले अर्थस्मरणार्थत्वसाधर्म्ये मन्त्रपदैकवाच्यत्वे च स्वरूपेण वेदे ऽपठितत्वादभियुक्तप्रसिद्धविषयत्वेन नैषां मन्त्रत्वम्। अतश्च नैषां भ्रेषे मन्त्रभ्रेषनिमित्तं प्रायश्चित्तम्। अपि तु अङ्गभ्रेषनिमित्तकमेव ॥९॥

तेषामृक् ॥ मन्त्रत्वादौ व्यापकधर्मे निरूपिते तत्प्रसङ्गादेव तदवान्तरधर्मो ऋक्त्वादिः, ऋचः सामानि यजूंषीति वेदप्रयुक्तऋगादिपदार्थपरिज्ञानार्थं निरूप्यते। पादव्यवस्थावन्मन्त्रत्व ऋक्त्वम् ॥१०॥

गीतिषु ॥ मन्त्रत्वसमानाधिकरणगीतित्वं सामत्वम् ॥११॥

---

* ब्राह्मणपदार्थनिर्णयाय, — इति ख० ग० पुस्तकयोः पाठः।

वाचयतीति बहुवचनात् श्रुतिभेदावगमेनार्थभेदः। अतश्चात्र यजुर्भेद इति पूर्वोक्तप्रत्युदाहरणलाभम् ॥१५॥

अनुषङ्गो ॥ यत्र बहूनां शेषापेक्षिणामाद्यस्यानन्तरं शेषः समाम्नायते, यथा याते अग्ने अयाशयेत्यस्यानन्तरं तनूर्वर्षिष्ठेत्यादिः शेषः। उत्तरौ मन्त्रौ, याते अग्ने रजाशया, याते अग्ने हराशयेति। तत्रोत्तरयोः शेषापेक्षिणोरयमेव शेषोऽनुषज्यते, न तु लौकिकोऽध्याह्रियते, अक्लृप्तत्वात्।

न चासामेकत्र निबद्धोऽन्यत्र नेतुं न शक्यः। सर्वार्थत्वेनाम्नानात्। न चाद्यस्यानन्तरमपेक्षितदेशे पठितत्वात् तदर्थमात्मानं लब्धम्। आकाङ्क्षायोग्यतयोरविशिष्टत्वादासत्तेरपि अनन्वितपदाव्यवधानरूपायाः सर्वत्राविशिष्टत्वाच्च। न हि आनन्तर्यमेव सन्निधिकारणं, तदभावेऽपि शाब्दबोधस्यानन्वितपदव्यवधानाभावे आनुभविकत्वात्। सर्वाव्यवधानस्य सकृत् पाठे अशक्यतया आकाङ्क्षादित्रयेणैव च सर्वार्थत्वज्ञानोपपत्तेरावृत्तपाठस्य सर्वान्तपाठस्य वापादयितुमशक्यत्वादपेक्षितदेशपाठस्य च लिङ्गेनैव ज्ञातुं शक्यत्वादाम्नानस्य सर्वार्थत्वावगतेरनुषङ्ग एव। न चैवमव्यवधानस्याकारणत्वे पदश्रुत्या यागस्यैव कारणतानुपपत्तिः*। तस्याकारणत्वेऽपि सन्देहे नियामकत्वमात्राङ्गीकारात्। प्रकृते तु आकाङ्क्षादिवशेन सर्वार्थत्वस्यैव प्रतीतेर्नियामकाकाङ्क्षाऽभावेनानुषङ्ग एव युक्तः। अतश्च तद्भेदेऽपि यजुर्भेदप्रायश्चित्तम् ॥

---

* कारणत्वानापत्तिः, — इति ख॰ ग॰ पुस्तकयोः पाठः।

अर्थैकत्वात् ॥ यदुक्तं यावत्सु पदेषु वाक्यत्वं पर्याप्तं तावत्सु पर्याप्तं* न तु वाक्यसमूहे, तस्य विनियोगानर्हत्वात्। वाक्यत्वञ्च यथार्थैकत्वं विभज्यमानसाकाङ्क्षत्वञ्च तावत्सु। अर्थैकत्वञ्च भिन्नप्रतीतिविषयाऽनेकमुख्यविशेष्यराहित्यम्†। अन्यथा दुर्वचत्वात्। अस्ति च गामानयेत्यादौ मुख्यविशेष्यभूताया भावनाया एकत्वात्। दर्शपूर्णमासाग्निहोमादिवाक्येषु च भावनानामनेकासामपि भिन्नप्रतीतिविषयत्वाभावात्, मौद्रियववाक्ययोर्भर्गोवां विभजस्वित्यादौ च सत्यपि भिन्नप्रतीतिविषयत्वे मुख्यविशेष्याया भावनाया एकत्वादर्थैकत्वम्। अतस्तथैकवाक्यत्वव्यावृत्त्यर्थं द्वितीयं अन्वीयमानयोः पदार्थयोरन्वये अनिवृत्तसाकाङ्क्षत्वरूपं विशेषणम्। स्योनं ते सदनं कृणोमि, तस्मिन् सीदेत्यत्रान्वये साकाङ्क्षत्वेऽपि भिन्नवाक्यत्वादाद्यं विशेषणम् ॥१४॥

समेषु ॥ यत्र गौणविधं विभज्यमानसाकाङ्क्षत्वं, यथेषे त्वा ऊर्जे त्वेत्यनयोः, यथा वा आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामित्यादौ, तत्र सत्यप्यर्थैकत्वे भर्गोवामित्यादिवन्मन्त्रभेदः। किन्तु यदा विनियोगानुसारेणार्थभेद एव प्रमाणवान्, तदा मन्त्रैकत्वे प्रमाणाभाव एव। अत्र हि इषे त्वेति शाखां छिनत्ति, ऊर्जे त्वेत्युन्मार्ष्टीति विनियोगभेदादिषे त्वा छिनद्मीति क्रियापदाध्याहारेण भिन्नमेव मुख्यविशेष्यम्। एवमूर्जे त्वोन्मार्ज्मीति। एवं तृती-

---

* पर्याप्तं, — इति नास्ति ख॰ ग॰ पुस्तकयोः।

† विशेष्यराहित्यम्, — इति ख॰ ग॰ पुस्तकयोः पाठः।

शब्दान्तरे ॥ भावनाभेदफलीभूतापूर्वभेदोपयोगिभावार्थाधिकरणरूपोपोद्घातप्रसङ्गानुप्रसक्तादौ समाप्तेऽधुना शब्दान्तराद्भेदोऽभिधीयते। ज्योतिष्टोमादिप्रकरणस्थाना, सोमेन यजेत, हिरण्यमात्रेयाय ददाति, दाक्षिणानि जुहोतीत्यादीनां विभिन्नधात्वर्थानां भावनाभेदबोधकत्वमस्ति न वेति चिन्तायां, ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यनेन स्वर्गकर्मकभावनामात्रे आख्यातात् विहिते तदनुवादेन सोमादिवाक्ये सोमादिविशिष्टयागादिविधानात् सर्वेषां धात्वर्थविशिष्टत्वेन गुणत्वाभावाच्च भावनाभेद ।

न चानेकधात्वर्थानामेकजातीयत्वत्वमन्यत्वाभाव । बाधकाभावात्। न च प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वात् प्रत्ययानां फलवाक्यस्थेनाख्यातेन धात्वर्थावच्छिन्नगुणभावनाविधानानुपपत्ति आख्यातेन धात्वर्थावच्छिन्नभावनाभिधानेऽपि तदंशे विधिव्यापाराभावात्। अतएव गुणफलसम्बन्धस्थले धात्वर्थानुवादेऽपि भावनामात्रविधानम्। अतएव च फलवाक्ये यजि प्रकृतसर्वधात्वर्थोपलक्षणम्। ज्योतिष्टोमपदञ्च ऋचिन्यायेन सर्वनामधेयमिति प्राप्ते।

कार्यैकाग्रहनिधर्मस्य विजातीयव्यापकत्वादे किञ्चित् प्रति कार्यतावच्छेदकत्वावश्यकत्वेन तदवच्छिन्नं प्रति उपस्थितस्य धात्वर्थस्यैव वैजात्यपरिकल्पनया विजातीयत्वत्वेनैव कारणत्वम्। अतश्च प्रतिधात्वर्थवैजात्यं भावनावैजात्यसिद्धिः। विभिन्नधात्वर्थकत्वमेव च शब्दान्तरत्वम्। अतएव तिस्र आहुतीर्जुहोतीत्यत्र सङ्ख्या होमभेदे सिद्धे शब्दान्तरादेवोक्तविधानात्भावनाभेद। न तु सूक्तोक्तादिति ध्येयम्।

एवं यत्र निराकाङ्क्षाणामेव शेषिणां बहूनामन्ते सापेक्षः शेषः समाम्नातो यथा चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वित्येतेषामन्ते, अच्छिद्रेण पवित्रेणेति। तत्रापि सन्निधियोग्यत्वयोरविशेषात् सर्वेषामनुषङ्गः। न चास्याप्याकाङ्क्षाया एकमन्त्रेणैव चरितार्थत्वादानन्तर्य्यस्य नियामकत्वोपपत्तिः। शेषाकाङ्क्षया आकाङ्क्षोत्थापनेऽपि प्रधानत्वाच्छेषिणां विनिगमनाविरहेण सर्व्वेषामेव शेषापेक्षत्वावगतेरानन्तर्यस्यानियामकत्वात्। अतएव अनेकपशुविषयकविहितसविधिपठितोपहोमानां सर्वार्थत्वमेव। अतश्च मुखनाभिगुल्फप्रदेशपावनार्थेषु एतेषु मन्त्रेषु शेषोऽनुषज्यते प्रतिप्रधानावृत्तिन्यायात् ॥१६॥

व्यवायात्॥ यत्र तु असम्बन्धिपदव्यवधानं, यथा सं ते वायुर्वातेन गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषेति। अत्र गच्छतामित्यस्याशिषेत्यत्र नानुषङ्गः। अङ्गानीत्यत्र एकवचनान्तस्यानन्वयेन बहुवचनान्तस्यैव गच्छन्तामित्यस्याध्याहारावश्यम्भावात्। वस्तुतस्तु बहुवचनस्यैवाध्याहारेण अभिधानादनुषङ्ग एवेति एकवचनस्यैवानुषङ्गप्रत्युदाहरणमिदम् ॥१७॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां द्वितीय-
स्याध्यायस्य प्रथमः पादः ॥०॥

देवताप्राप्तिपक्षद्वयेनैतेषां नियमविधित्वोपपत्तेः। अतश्चानन्यपरगुणश्रवणाभावाच्च कर्मभेद इति प्राप्ते।

उभयाकाङ्क्षासत्त्वस्थ्याज्याभ्यामन्त्राणामेव देवताकल्पकत्वस्य पुरःस्फूर्तिकत्वेनान्यतराकाङ्क्षासत्त्वस्थ्यानुमन्त्रणमन्त्रेभ्यो देवताकल्पनानुपपत्तेर्न समिदादिपदानां देवतानियामकत्वम्। अतश्चोपपदार्थस्य सम्भवत्प्राप्तिकत्वात् यदाग्नेय्यादिना विधेर्धात्वर्थभावनाविषयत्वप्रतीतेर्विहितविधानायोगाद्विधेयताच्छेदकतया वैशिष्ट्यसिद्धिः। न चैवं तत्प्रख्यन्यायेन समिदादिपदानां नामधेयत्वात् सञ्ज्ञयैव भेदसिद्धिः। तत्प्रख्यन्यायेन गुणविधित्वनिराकरणेऽपि नामधेयत्वस्यैकेनैवैकस्मिन् कर्मणि सिद्धेरनेकेषां नामधेयानां वैयर्थ्यप्रसङ्गेन समिदादिपदानां गुणानुवादकत्वेनैवोपपत्तेर्नामत्वानिर्णयात्। सिद्धे तु अभ्यासेन कर्मभेदे एकैकस्य कर्मण एकैकं नामधेयं सार्थकमिति नामत्वनिर्णयः। प्रयोजनमुत्तराधिकरणप्रयोजनम्। प्रयोजनान्तराणि कौस्तुभे स्पष्टानि ॥२॥१।८॥

प्रकरणात्तु ॥ तथाच य एवं विद्वान् पौर्णमासीं यजते स यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति य एवं विद्वानमावास्यां यजते स यावदतिरात्रेणेत्यादिवाक्येऽपि अभ्यासात् कर्मभेदः। न चात्र लट्, लेट्त्वेऽपि वा यच्छब्देन विधिप्रतिबन्धाद्विधिपुनःश्रुत्यभावः। समिधो यजतीतिवल्लेट्त्वावगतेर्यच्छब्दस्य योदीक्षित इति वदेदनक्रियामात्रविधिप्रतिबन्धकत्वात्। अतएव पौर्णमास्यमावास्यापदमपि नामधेयम्। पौर्णमास्यां पौर्णमास्येति वाक्यद्वयेनैतद्वाक्यविहितकर्मणोरेव कालविधानात्। न च रूपाभावः। सार्घौ

किञ्च प्राप्तभावनाऽनुवादेन सोमयागाद्यनेकविधाने वाक्यभेदापत्तेस्तत्तद्गुणधात्वर्थोभयविशिष्टभावनाविधानमेव तत्तद्वाक्ये अङ्गीकर्त्तव्यम् ।

तत्र च चातुर्थिकन्यायेन ज्योतिष्टोमपदाभिधेयस्य सोमयागस्यैव स्वर्गवाक्येन फलसम्बन्धोऽन्येषान्तु तदङ्गत्वम् । न च स्वर्गवाक्य एव यागभावनोत्पत्तिपूर्वकं फलसम्बन्धः सोमवाक्येन च सोममात्रविधानमिति वाच्यम् । स्वर्गवाक्ये राजसूयन्यायेनेष्टिपशुयागानामेव फलसम्बन्धापत्तौ यागान्तरविधाने प्रमाणाभावात् । ततश्च पश्वाद्यवरुद्धे सोमविध्यनुपपत्तेः सोमवाक्ये कर्मान्तरविधेरवश्यम्भावः । प्रयोजनं सोमयागमात्रप्राधान्यम् ॥१॥१८॥

एकस्यैवम् ॥ दर्शपूर्णमासप्रकरणस्थे, समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति, इत्यादौ यागस्यापि प्रत्यभिज्ञायमानत्वेनाभेदाच्च भावनाभेदः । न चाभ्यासाद्भेदः, यागस्याभ्यासस्यैकत्वसाधकत्वेन विरुद्धत्वात् । न च विधिपुनःश्रवणरूपस्याभ्यासस्य विधेययागादिभेदकत्वम् । दध्ना जुहोतीतिवद्विधेर्देवताद्रूपगुणसङ्क्रान्तशक्तिकत्वेन यागविषयत्वाभावात् । न च यागोत्पत्तिवाक्यस्य गुणानवरोधात्तदुत्पन्नवाक्येन गुणविधिः । अगत्या आख्यातिकवाक्यस्य समिदादिपदस्य तत्प्रख्यन्यायेन नामधेयत्वाङ्गीकारात् ।

वस्तुतस्तु यदि याज्यामन्त्रवर्णात् प्रमितप्राप्तिस्तदा सा तनूनपादादीनामप्यविशिष्टा । अत उपांशुयाजानुवादेन विधिवाक्यविहितकर्मानुवादेन वा पञ्चस्वपि देवताविधिः । न च मन्त्रवत्प्राप्तिकता, याज्यामन्त्रवर्णवदनुमन्त्रणमन्त्रेभ्योऽपि विकल्पेन वसन्तादि-

क्षितगौरवापादकविदद्वाक्यविहितकर्माङ्गताबोधकत्वम् । अतएव च कारकद्वारेण कर्मद्वारेण वा व्यवस्थापरत्वमेव तद्धितेति वक्ष्यते । अतश्च न तावदनेन देवताप्राप्तिः । आग्नेयादिवाक्येन । प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदात् । विधिफलस्य हि अज्ञातज्ञापनस्यैकविषयत्वमेव सर्वत्र दृष्टम् । तस्यानेकविषयत्वे बाधप्रसङ्ग । न च विशिष्टविधानादवाक्यभेद, विशिष्टस्याव्युत्पन्नत्वात् । उक्तं ह्येतत् । कारकान्तरसम्बन्धेन यत्र तद्धितादिवृत्तिर्न तत्र परस्परान्वयोऽपि तदर्थाभिधानीमित्यादौ तदतिरिक्तसम्बन्धेन वृत्तिस्तत्रैव च इति । अतश्च प्रकृते देवतायाश्च सम्प्रदानकारकत्वात् परस्परसम्बन्धानुपपत्तेरुभयविशिष्टकर्मान्तरविधानमेवावश्यकम् । अतश्च रूपाभावकद् वश्य एव ।

अस्तु वा कथञ्चिद्रूपलाभस्तथापि न विदद्वाक्ये कर्मविधि । यच्छब्देन विधिप्रत्ययप्रतिबन्धेन विधिप्रत्ययस्यैवाभावात् । न च तस्य वेदनक्रियाभावविधिप्रतिबन्धकत्वम् । यच्छब्दादेस्तच्छब्दाद्यधिकप्रतिबन्धकत्वस्यैव व्युत्पत्तिसिद्धत्वात् । किञ्च अन्यपरत्वादपि नाभ्यासस्वरूपसिद्धिः । तथाहि तत्तद्विदद्वाक्यस्थडत्तपजिना प्रकृतत्वादाग्नेयाद्यस्यैव तत्सम्बन्धयोगिनस्तन्नामधेयत्वमादृयन्ते । तत्प्रयोजनञ्च तत्त्वेन यजिनाऽनेकोपादानात् समुदायस्य सिद्धिः । तथा अपि प्रयोजनं फलवाक्ये यथासेव फलसम्बन्धसिद्धिः । प्रातिपदिकस्य घटस्य कार्ययोगेन प्रसिद्धत्वात् । द्विवचनस्य च स्वगताश्रयसमुदायघटकसमुदायि वृत्तिसम्बन्धेन बहुत्वस्य ख्यापनात् । लक्षणातात्पर्यग्राहकमेव च प्रकाशसम्बन्धघटकसमुदाय

पौर्णमास्यामनूच्येते वृधन्वतीममावास्यायामिति वचनेन आध्वभागकमाम्नातानामपि ऋचां क्रमं बाधित्वा एतद्वाक्यविहितकर्माङ्गत्वेन विधानात्सान्नर्णिकाग्निषोमदेवतायाः सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमितिवचनेन च द्रव्यस्य प्राप्तत्वात् ।

अथवा, आग्नेयादिवाक्यैरेव पौर्णमास्यमावास्यादिपदोपस्थापितैतद्वाक्यविहितकर्मानुवादेन द्रव्यदेवताविधानाद्रूपलाभोपपत्तिः । न चानेकविधानाद्वाक्यभेदः । लक्षितेन देवताविशिष्टद्रव्यवाचिनापदस्यान्वयस्य युक्तत्वेन विशिष्टविध्युपपत्तेः । प्रकारान्तरेण रूपलाभस्तु कौस्तुभ एव द्रष्टव्यः । सर्वथा विधिवाक्ये कर्मान्तरविधिः ।

एवं च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति फलवाक्येन प्रयाजादिव्यावारणेन सर्वेषामाग्नेयादीनां एतद्वाक्यविहितकर्मणोश्च प्रथमपक्षे फलसम्बन्धो द्वितीये तु तद्व्यावारणेन तयोरेव । दर्शपूर्णमासप्रातिपदिकस्य कालयोगिषु प्रसिद्धत्वेऽपि द्विवचनस्याप्रसिद्धत्वात् । आज्यभागादिषु तस्य प्रसिद्धत्वेऽपि प्रातिपदिकस्याप्रसिद्धेः । अतो राजसूयन्यायेन नावः बहोचकत्वानुपपत्तेः प्रकरणात् सर्वेषामेव यागानां फलसम्बन्धः । पाशाधिकरणन्यायेन द्विवचनस्याप्रसिद्धत्वेऽपि प्रातिपदिकमात्रप्रसिद्ध्या कालयोगिनामेव वा अनयोरेव वा द्वित्वस्यापि कथञ्चिदुपपत्तेः फलसम्बन्धः । न तु षण्णामेवाग्नेयादीनामिति सारं ।

लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेन वार्त्रघ्नीवृधन्वतीमन्त्राणां प्राप्तानामपेक्षितव्यवस्थाविधायकत्वेन वार्त्रघ्नीवाक्यस्योपपत्तौ नापे-

उपक्रमोपसंहारयोरेकविषयत्वेनैकवाक्यत्वप्रतीतेर्न तद्धितप्रत्ययान्तवाक्यैः कर्मविधिः। अन्तरावाक्य एव तु कालोपांशुत्वविशिष्टैककर्मविधिः। तदर्थवादश्चायं पूर्वोत्तरभावेन सर्वोऽपि। अन्यथा वाक्यभेदापत्तेः। अत एव तद्धितप्रत्ययान्तैर्देवतामात्रविधिरन्तरावाक्यस्थकर्मणीत्युपपादनम्। न च तत्र देवताऽलाभः। शाखाभेदेन वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलाना*मेतद्यागक्रमे समाम्नातानां विकल्पेन तत्तद्देवताकत्वकल्पनोपपत्तेः। तस्य च तावभूतामित्यनेन कालसम्बन्धात् फलसम्बन्धः।

न चोत्पत्तिशिष्टकालसम्बन्धानामेवाग्नेयादीनां झटित्युपस्थितत्वेन फलसम्बन्धापत्तेरुत्पत्तिशिष्टकालसम्बन्धस्योपांशुयाजस्य फलसम्बन्धानापत्तिः। अन्यथा पुरोडाशान्तरालकालसम्बन्धान्यथानुपपत्त्यैव पौर्णमास्यादिकालसम्बन्धेनोपांशुयाजस्य फलसम्बन्धापत्तौ तावभूतेत्यस्यापि तत्फलत्वानुपपत्तेरिति वाच्यम्। तावभूतामित्येतदनन्तरमेवोपांशुयाजमन्तरा यजतीति पठितमिति वार्त्तिकदर्शनादस्यापि कालस्योत्पत्तिवाक्येनैव विधेयतया भिन्नवाक्यत्वाभावेन तुल्यबलत्वात्‡ फलसम्बन्धोपपत्तेः। अतो नायं समुदायानुवाद इति सिद्धम्। प्रयोजनं स्पष्टम् ॥४।२।१॥

आघारा ॥ तत्रैवाघारमाघारयतीति श्रुते अग्निहोत्रं जुहोतीत्यत्र च पूर्ववद्वाक्यभेदस्य दूषकत्वाभावादृजुमाघारयति, सन्त-

* पुरोडाशाभ्या, — इति क० पुस्तके पाठः।

† सिद्ध, — इति ख० ग० पुस्तकयोः पाठः।

‡ तुल्यबलात्, — इति क० पुस्तके पाठः।

सिद्धिद्वारा विद्वद्वाक्यद्वयम् । अन्यथा हि विद्वद्वाक्याभावे आग्नेयद्वयस्यैवैकवाक्योपादानावगतद्वित्वयोगिनः कालद्वययुक्तस्य च फलसम्बन्धापत्तिः । यथा च यदाग्नेयोऽष्टाकपाल इत्यत्राग्नेयद्वयसिद्धिस्तथा कौस्तुभ एव प्रपञ्चितम् । अतः यथां फलसम्बन्धसिद्धिरेवोक्तविधया विद्वद्वाक्यप्रयोजनमित्यन्यपरत्वादपि न वैश्वदेवेन यजेतेतिवदभ्यासरूपसिद्धिः । न चैव पौर्णमास्यां पौर्णमास्येति वाक्यद्वयवैयर्थ्यापत्तिः । तस्य समुदितयागविषयप्रयोगविधित्वेन सार्थक्यस्यैकादशे वक्ष्यमाणत्वात् । अन्यथा ह्युत्पत्तिवाक्येषु प्रत्येककालसंयोगात् प्रत्येकमेव पूर्वोत्तराङ्गसहितैकैकप्रधानप्रयोगाभवेयुः । एवञ्चोत्पत्तिवाक्ये कालश्रवणमपि विद्वद्वाक्याधिकारवाक्यस्थयजिपद* सङ्कीर्त्यार्थमेवेति समुदायसिद्ध्यर्थं समुदायिनामनुवादकत्वेनैतौ न कर्मान्तरविधिः— इति सिद्धम् ॥१॥२०॥

पौर्णमासीवत् ॥ नन्वेव, जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वायेति श्रुते अन्तरावाक्ये पूर्ववदेव न कर्मान्तरविधिः । अपि तु तथ्यप्रत्ययान्तवाक्यैर्विहितानां देवतोपांशुत्वविशिष्टयागानां समुदायसिद्ध्यर्थमनुवाद एव तत्प्रयोजनश्चान्तरालकालविधिः । तथाप्यसत्येषां प्रागभूतानामग्नीषोमावाज्यस्यैव नानुपांशु पौर्णमास्यां यजन्तीति कालसम्बन्धात् तात्पर्य्यपदद्वाराफलसम्बन्धसिद्धिर्वा । अन्यथा ह्यग्नीषोमदेवत्यस्यैव कालसम्बन्धात् फलसम्बन्धः स्यादिति प्राप्ते ।

* यदिमद, — इति ख० ग० पुस्तकयो पाठ ।

विजातीयहोमत्वावच्छिन्नस्य विधानेऽवगते वाक्यान्तरेण रूपलाभेऽपि न काचित् क्षतिः। प्रयोजनं दध्यादिद्रव्यसमुच्चयविकल्पाभ्यां स्पष्टम् ॥५।२२॥

द्रव्यसंयोगात् ॥ अग्नीषोमीयं पशुमालभेतेति श्रुतम्। तथा, सोमेन यजेतेति च। तत्राद्यविधिप्रकारस्यासम्भवाच्च पूर्ववत् कर्मविधित्वम्। अपि तु समुदायानुवादत्वमेव। कर्मप्राप्तिस्तु पशौ हृदयस्याग्रेऽवद्यति अथ जिह्वाया इत्यादिभिः। उत्पत्तिशिष्टपश्वसाध्ये यागे हृदयादीनां साधनत्वानुपपत्तेश्च तदुद्देशेनावदानाख्यसंस्कारविधिः। अतो विहितानां हृदयाद्यवदानानां पशुप्रभवद्रव्यद्रव्यवदानत्वसादृश्यात् सान्नाय्यावदानप्रकृतिकत्वावगतेः सान्नाय्यवदेव हृदयादीनां यागसाधनत्वस्य पूतीकवदनुमानाद्यावद्धृदयादियागा एव विधीयन्ते। तेषु च लक्षणया आलभतिना अग्नीषोमौ देवता विधीयते। पशुपदस्य हृदयादीनां छागप्रकृतिकत्वस्य सम्बन्धपरम्परात्मकलक्षणया हृदयादिपरम्।

अथवा, हृदयादिवाक्यविहितावदानाक्षिप्तस्पर्शनैवालभतिना* मत्वैवानूद्य पशुपदोपस्थितहृदयादीनां प्रत्येकं देवतासम्बन्धे कृते तावन्तो यागा देवतासम्बन्धकल्पितास्तेनैव विधिना विधीयन्ते। सर्वथा पशुपदं समुदायानुवादः।

यथा सोमेऽपि, ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णातीत्यादिवाक्यैर्द्रव्यदेवतासम्बन्धानुमितयागविधानम्। ग्रहणे देवतान्वयानुप-

* स्पर्शमेवालभतिना, — इति ख॰ ग॰ पुस्तकयोः पाठः।

† पशुप्रभव, — इति क॰ पुस्तके पाठः।

समाघारयति, दध्ना जुहोति, पयसा जुहोतीत्यादि*वाक्यविहित-कर्मणां यथायोगं समुदायानुवादकत्वोपपत्तिः। दध्यादिवाक्यानां मिथ्यापरे गुणमात्रे विध्यन्वयासम्भवेनावश्यं गुणविशिष्टकर्मविधायकत्वात्। अतश्च रूपाभावाद्भेदकप्रमाणाभावादग्निहोत्रवाक्ये आघारवाक्ये वा न कर्मान्तरम्। अपि तु तेषामेव समुदायसिद्ध्यर्थमनुवादः। तत्प्रयोजनञ्च सर्वेषामेवाग्निहोत्रसञ्ज्ञकत्वेन फलसम्बन्धसिद्धिः। इतरथा अग्निदेवत्यहोमस्यैव तदापत्तिः। आघारवाक्ये समुदायानुवादप्रयोजनन्तु कौस्तुभे द्रष्टव्यम्। न च दध्यादिहोमेषु देवताद्यभावः। समुदायानुवादत्वेनैकप्रयोगविधिपरिग्रहादवगतेः सकृदनुष्ठानेनाग्न्यादिहोमाङ्गभूतदेवतायाः प्रसङ्गेन दध्यादिहोमोपकारकत्वोपपत्तेरिति प्राप्ते।

सर्वत्र गुणमात्रविधानेन तृतीयविधिप्रकारोपपत्तौ पञ्चमविधिप्रकाराङ्गीकरणस्यान्याय्यत्वान्न दध्यादिवाक्येषु विशिष्टकर्मविधानम्। न च गुणे विध्यन्वयानुपपत्तिः। होमकर्मकगुणकरणकभावनायामेव विध्यन्वयेऽपि प्राप्ताप्राप्तविवेकेन विधिफलस्याज्ञातज्ञापनरूपस्य भावनायाः स्वरूपेण प्राप्ततया गुणमात्रविषयत्वोपपत्तेः। अतएव सर्वत्र प्रातीतिके विशिष्टभावनाविधानेऽपि फलमादायैव षड्विधिप्रकारास्तेषां चोत्तरोत्तरस्य दौर्बल्यं पूर्वमुक्तम्। अतश्च प्राप्तभावादेव समुदायानुवादत्वासम्भवादाद्यविधिविधया कर्मविधौ एवाघाराग्निहोत्रवाक्ये। न च रूपज्ञानाभावात्कर्मविध्यनुपपत्तिः। तस्यानुष्ठानं प्रति कारणत्वेऽपि शाब्दबोधं प्रत्यकारणत्वात्। अतश्च

* दध्ना जुहोतीत्यादि, — इति ख० ग० पुस्तकयोः पाठः।

सोमेऽपि नैन्द्रवायवादिवाक्यैर्यागविधिर्गौरवात्। किन्तु देवता-विशिष्टग्रहणस्यैव तद्भिन्नोपात्तद्रव्योद्देशेन विधिः। सम्भवति च देवतात्वस्य निरूपकतासम्बन्धेन ग्रहणैर्विशिष्टायोगेऽपि ग्रहणकालीनोच्चारणकर्मीभूतशक्तिमत्त्वसम्बन्धेन ग्रहणे वैशिष्ट्यम्। अतश्च देवताया ग्रहणाङ्गभूताया अपि यागापेक्षाया सोमवाक्यविहितयागस्यैव देवतापेक्षयोपपादकत्वमकल्पनालाघवम्। सोमपदन्तु संस्कार-विध्यन्यथानुपपत्त्या सम्भवत्प्राप्तिकत्वेऽपि मतुब्व्यावृत्तिफलकसोमनियमार्थं न विरुध्यते। यथा चैव सति ग्रहणानां समुच्चयो यागस्य च प्रतिग्रहणमावृत्तिस्तथा सर्वं कौस्तुभ एव निरूपितम्। प्रयोजनं पशुविकारे हृदयादियागोद्देश्यसमवेतैकत्वस्यैकादशावदानगण-प्राप्तिः पूर्वपक्षे। सिद्धान्ते तु नेति द्रष्टव्यम्। सोमे वाक्यफलसिद्धि-रेव ॥६॥२२॥

पृथक्त्वनिवेशात् ॥ आमनमस्यामनमस्य देवा इति तिस्र आकूतीर्जुहोति, आज्यभागौ यजतीत्यादौ एकत्वातिरिक्तसङ्ख्याया आश्रयप्रतियोगिक-आश्रयवृत्तिभेदव्याप्यत्वेन न तावत् साक्षाद्भावना-भेदबोधकत्वम्। तस्या उक्तसङ्ख्याश्रयत्वाप्रतीतेः*। नापि धात्वर्थ-भेदबोधकत्वम्। तस्य पूर्वप्रमितैकत्वसङ्ख्याऽवरुद्धत्वेनैकादशप्रयाजान् यजति विराट्सम्पन्नमग्निहोत्रं जुहोतीत्यादिवत्सङ्ख्यान्तरसम्बन्धानुपपत्तेरेतत्सङ्ख्याया अभ्यासविषयत्वप्रतीतेरकर्मान्तरत्वमिति प्राप्ते।

नात्र सङ्ख्यान्तरावरोधः। सा हि न तावत्तिङुपात्ता। तस्याः

* तस्या उक्तसङ्ख्याश्रयत्वातिरिक्तसङ्ख्याया प्रतीतेः, — इति क॰ पुस्तके पाठः।

पत्तेः। द्रव्यं चाराण्वा धारया गृह्णातीति प्रकृतं धारासमर्थं द्रव सद्भिरोपात्तम्। सोमवाक्ये तु तत्प्रकृतित्वेन सोमलताविधिर्नीहिविधिवत्। सोमं अभिषुणोतीत्यादिसंस्कारविध्यन्यथानुपपत्त्यैव वा अध्वर्युं वृणीत इतिवत्सोमप्राप्तेः सोमपदं नामधेयम्। सर्वथा यजिः समुदायानुवादः। तत्प्रयोजनं चास्मिन् पक्षे सोमद्रव्यकयागमात्रानुवादादन्तर्गतानामपि फलसम्बन्धः। ज्योतिष्टोमपदस्य वैश्वदेववद्गौणम्। समुदायानुवादाभावे हि तद्यागात् अन्तर्गतानामेव यागानां फलसम्बन्धापत्तिः। तेषामेव ज्योतीरूपस्तोमसम्बन्धात्। सिद्धान्ते तु यागस्यैकत्वात् फलवाक्यस्य त्रिकाऽभ्यासलक्षणापत्तेर्विजातीययागमात्रावच्छिन्नस्यैव फलसम्बन्धः। ज्योतिष्टोमपदे यज्ञमौषधंस्तु स्वसम्बन्ध्यभ्यासघटितसमुदायाश्रयलक्षणः। अतः समुदायानुवादावेव तावदिति प्राप्ते।

यज्ञुपदे दध्यादिलक्षणायां प्रमाणाभावात् तत्रैव विशिष्टयागविधिः। दध्यादिवाक्येषु दध्याद्युद्देशेन संस्कारमात्रम्। पयोऽपि न धात्वाद्युद्देशेन विधानम्। किन्तु विधानवदामादिविधिरूपतात्पर्यग्राहकानुरोधेन दध्यादिप्रकृतित्वेनैव। करणत्वस्य* धात्वादिना परम्परयाऽपि तात्पर्यग्राहके सत्युपपत्तेः। अतएवातिदेशमासावदानसम्बन्धोऽपि दध्यादीनां सविद्धसिद्धार्थाख्यादिमरांगानां सविद्धपरिसिद्धार्थस्येत्यादि कौस्तुभे द्रष्टव्यम्।

---

* कारणत्वस्य, — इति क॰ पुस्तके पाठः।

† सिद्धार्थं सन्, — इति ख॰ ग॰ पुस्तकयोः पाठः।

अतो लाघवाद् देवतात्वान्वयात् पूर्वमेव सङ्ख्यान्वय । तदा हि यजत्यावच्छिन्न एवैकदेवतासम्बन्धादेकयागादिकल्पनालाघवम् ।

न च प्रकृतिप्राप्तैकपशुनिष्पन्नैकावदानगणैकत्वानुरोधेन सङ्ख्याया देवतात्वान्वयोत्तरमन्वय । पशुगतैकत्वस्य श्रुतत्वप्रसङ्गत्वेन बाधात् । अवदानगणैकत्वस्य च प्राकृतावार्थिकत्वेनेहानतिदेशात् । अतो देवतासम्बन्धभेदे प्रमाणाभावान्न यागभेद ।

अस्तु वा समासाभिधानयुक्त्या यजत्यान्वयात् प्राग् देवतात्वान्वयेन सम्बन्धभेदस्तथापि लाघवाद् यागैकत्वम् । यथैव हि सिद्धान्तेऽनेके यागा यजत्युपात्तेनोपपाद्यन्ते, तथा अस्मतेऽप्येकेन यागेनानेके देवतासम्बन्धा इति प्राप्ते ।

समासाभिधानयुक्त्या देवतात्वस्यान्तरङ्गत्वात् सङ्ख्यान्वयात् पूर्वान्वयित्वम् । पशूनां प्रत्येक प्रत्याश्रयत्वेन स्वत्वध्वंसानुकूलव्यापारात्मकयागकरणकत्वपदनिरूप्य प्रत्येकवृत्तितया सूर्यावितयोरित्यादिग्रन्थानुसारेण द्विदेवत्यैकपश्ववच्छेदेनैव देवतासम्बन्धोऽभिधानात् । अतश्च यजत्यावच्छिन्नस्यैव प्रतिसम्बन्धित्वात् प्रतिसम्बन्धितावच्छेदकस्य प्रत्येकवृत्तित्वेन प्रतिसम्बन्धिभेदप्रतीतेरुद्देश्यभेदेन सम्बन्धभेदसिद्धिः । न च सम्बन्धभेदेऽपि यागैकत्वम् । सम्बन्धानां यागैकत्वानेकत्वाभ्यामुभयथाप्युपपत्तौ लाघवापेक्षया दैवतस्यापि चोदकस्य प्राप्ततया बलवत्त्वेन नियामकत्वात् । अतस्तदनुरोधेन सर्वत्र यागभेदो भावनाभेदश्चेति सिद्धम् । प्रयोजनं, यागैकत्वे एकपशुविनाशेऽपि तत्र जातमात्र पुनर्यागकरणं, सिद्धान्ते तु नेति ॥७॥१॥

कर्त्तृत्वात् । न चानवच्छिन्नसंख्यान्वयानुपपत्तेः प्रथमातिक्रमे [illegible] कारणाभावाद्धात्वर्थे एकत्वसंख्यानुमानमिति वाच्यम् । श्रुतसंख्यासत्त्वे कारणाभावस्यासिद्धत्वेनानुमानाप्रसरात् । अतएव प्रयाजैकादशत्व-स्थले पञ्च प्रयाजा अनुमानप्रसरस्याभावात् विषयत्वम् । न चैवं विराट्सम्पत्तिवाक्यादावपि सम्पत्तिवाक्ये एकत्वानुमानापत्तिः । तादृशस्थले स्वोपजीव्योत्पत्तिवाक्यजन्यशाब्दबोधनिर्वाहार्थं पूर्वंसंख्या-स्यानुमानस्योत्तरकालिकेन संख्याश्रवणेन यथायोगात्तस्याभास-विषयत्वप्रतीतेः । प्रकृते तु शाब्दबोधात् पूर्वमेवेतरपदार्थवत्संख्याया-अपि प्रतीतेर्युक्तः शाब्दबोधोत्तरकालीनानुमानप्रतिबन्ध इति कौस्तुभे विस्तरः । अतश्च सिद्धमुत्पत्तिवाक्यगतकर्मसमानाधिकरण-विधेयसंख्यायाः कर्मभेदकत्वम् । भावनाभेदस्तु शब्दान्तरादेव । प्रयोजनं, वेदिप्रोक्षणमन्यवत् पूर्वपक्षे सकृदन्ते, सिद्धान्ते तु सदा-वृत्तिरिति ।

भाष्यकारेण [illegible] षड्दश प्राजापत्यान् पशूनालभेतेति वाक्ये यागभेदाभेदचिन्ता कृता । तत्र यद्यपि देवतात्वविशिष्टद्रव्यविशेष-वाची सद्धित', यद्यपि च प्राजापत्यपद एवैकत्वोपस्तथापि तदुत्तर-विभक्त्युपात्तायाः संख्यायाः प्रकृत्यर्थे विशेष्यत्वेनान्वय* स [illegible] विशिष्टे, द्वौ चाय इत्यादौ तथैव व्युत्पत्तेरिति तावदविवादम् । सोऽपि च न द्रव्ये देवतात्वान्योपारम् । तथा सति देवतात्वप्रतिसम्बन्धिनि द्रव्ये षाडिश्याणनसेन प्रत्येकशक्तिपर्याप्तावच्छिन्न यत्र तत्सम्बन्ध-प्रतीतेरनेकत्वावगमात् समस्तभेदेनानेकयागादिकल्पनागौरवापत्तेः ।

---

* प्रकृत्यर्थविशेष्यत्वेनान्वयः, — इति क० पुस्तके पाठः ।

तदनुवादेन वाजिभ्यो वाजिनमित्यत्र न गुणमात्रविधिः। प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदापत्तेः। न च वाजसक्षमामिक्षारूपं विद्यते येषामिति व्युत्पत्त्या विश्वदेवान् तद्विशिष्टयागं चोद्दिश्य वाजिनमात्रस्य विकल्पेन समुच्चयेन वा विधिरस्त्विति वाच्यम्। वाजिशब्दस्य रूढत्वेन विश्वदेवानुवादानुपपत्तेः। उत्पत्तिशिष्टद्रव्यावरोधे द्रव्यान्तरस्य निवेशानुपपत्तेश्च। एतेनामिक्षानिष्पन्नवाजिनसम्बन्धप्राप्त्या वाजिपदं* आमिक्षायागनामधेयमङ्गीकृत्य तदुद्देशेन वाजिदेवताविधिरित्यप्यपास्तम्। उत्पत्तिशिष्टदेवताऽवरोधे देवतान्तरस्य निवेशानुपपत्तेः। किञ्चामिक्षायाः पार्ष्टिको देवतासम्बन्धः पदश्रुत्या, वाजिनस्य तु वाक्येनेति दौर्बल्यम्। तद्धितस्य हि देवतात्वविशिष्टे द्रव्यविशेषे शक्तिः आमिक्षापदस्य तात्पर्यग्राहकमिति प्राहुः।

आमिक्षादौ द्रव्ये देवतात्वे च भिन्ना शक्तिर्निरूपकत्वन्तु संसर्गः। देवतात्व एव वा शक्तिर्द्रव्ये लक्षणा। द्रव्यविशेषे एव वा शक्तिर्देवतात्वे लक्षणा। द्रव्यसामान्य एव वा शक्तिरामिक्षापदेन तु विशेषनिर्णयः। इत्येते पक्षाः कौस्तुभ एवोपपादिताः। सर्वथा आमिक्षाद्रव्यस्य देवतासम्बन्धः पदश्रुत्येति सिद्धम्।

किञ्च विश्वेषां देवानां तद्धितेन देवतात्वं प्रतीतम्। अनुप्रासमस्मात्। वाजिभ्यस्तु सम्प्रदानत्ववाचिन्या चतुर्थ्या साम्प्रतिकलक्षणया। त्यज्यमानद्रव्योद्देश्यत्वविशिष्टप्रतियोगित्वरूपसम्प्रदानत्वे-

---

* वाजिनपदे, — इति ख॰ ग॰ पुस्तकयोः पाठः।

मन्त्रा च ॥ ज्योतिष्टोमे अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेति श्रुतेषु ज्योतिरादिपदानां गुणविशेषे प्रसिद्ध्यभावात् स्तोमात्मकत्वेन प्रसिद्ध्युपपादने कर्माण्यपि तदायत्तेरेतच्छब्देन च तद्विधाने वाक्यभेदाद्यापत्तेरेषां नामत्वं तावदविवादम्। तच्च न प्रकृतस्य यागस्य। ज्योतिष्टोमनामावरोधात्। मन्त्रार्थवादस्यैकत्वेन सिद्धेरितरवैयर्थ्याच्च। न च विधिनामकाभावादिकल्प्यं। अथ शब्दस्य पूर्वकर्माधिकारविच्छेदकस्य नियमवत्त्वात्। अतएव वसन्ते वसन्ते ज्योतिषेत्यत्राप्यधिकारत्वाशङ्का। तस्याविच्छेदेऽधिकारे समाख्यानेन तथाऽङ्गीकारात्। न चैवमधिकारविच्छेदाभावे उद्भिदादिसञ्ज्ञानां भेदाभावापत्ति, ज्योतिष्टोमसञ्ज्ञाया उत्पत्तिशिष्टत्वाभावेन द्वयोरपि विकल्पो वैपरीत्यं वा किं न स्यादिति वाच्यम्। सोमयागे क्लृप्तप्रवृत्तिनिमित्तकज्योतिष्टोमसञ्ज्ञावरुद्धे उद्भित्सञ्ज्ञाया अपत्यपि निवेशानुपपत्तेस्तस्या भेदकत्वात्। अतएव यत्र न किञ्चिन्नियामकमस्ति तत्र सहस्राढी सञ्ज्ञयोर्विकल्प एव। प्रकृते चाथशब्देन विच्छेदाद्भेदकत्वमेव सञ्ज्ञायाः। सहस्रदक्षिणेन यजेतेत्येतावतैव प्रकृतयागानुवादेन गुणविध्युपपत्तौ एतच्छब्दानां ज्योतिरादिवाक्यानां वैयर्थ्यप्रसङ्गाच्च। अतो धात्वादियोगेन ज्योतिरादिसञ्ज्ञा कर्मान्तर सोमयागप्रकृतिक तत्प्रकाशकमपूर्व सहस्रदक्षिणाक, एतेन षट्कामो यजेतेति वाक्येन फले विधीयते इति सञ्ज्ञया कर्मभेदः ॥२।२।७।५॥

गुणश्च ॥ वैश्वदेव्यामिक्षेत्यत्र द्रव्यदेवतासंबन्धिष्टे यागे विहिते

उत्पत्त्यन्वयित्वेन प्राप्तोत्पत्त्यनुवादेन गुणविधि फलविशिष्टविनि-
योगविधिश्चेति वैरूप्याभावाद्वाक्यभेदः । अतो गुणात् कर्मभेदः । दधिविशिष्टस्य तत् फलोद्देशेन विधीयते । न दधिमात्रम् । भावार्थाधिकरणविरोधापत्तेः । यद्यपि दर्विहोमत्वे दधिद्रव्यकहोमत्वमादृश्याच्च * अग्निहोत्रहोमातिदेशेन रूपलाभः ।

सिद्धान्तस्तु यत्र द्वयोरपि धात्वर्थगुणयोरप्राप्तिः सम्भवत्प्राप्तिरेव वा धात्वर्थस्यैव वा अप्राप्तिः यथा सोमेन यजेत, उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयति, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् कामयेत यथा पूर्वं प्रजाः कल्पेरन्, अग्निहोत्रं जुहोतीत्यादौ, तत्र भावार्थाधिकरणन्यायः । यत्र तु गुणस्यैवाप्राप्तत्वाद्विधेयत्वं, तत्र तस्यैव फलसम्बन्धः । न च दध्नोऽपि नियता प्राप्तिरपि तु विकल्पेन । अतः पक्षिकानुवादत्वपरिहाराय तस्यैव विधेयत्वात् फलसम्बन्धः । कारणीभूतगुणत्वेन वचनं विनाऽपि फलोत्पत्तिसम्भवाद्वचनवैयर्थ्यप्रसङ्गेन स्वकृतिसाध्यधात्वर्थस्य दृष्टविधया गुणसम्बन्धिनं आश्रयसापेक्षायां प्रकरणाद्धोमस्याश्रयत्वलाभाज्जुहोति साधुत्वार्थमनुवादः । दधिकरणक भावनान्तरमेव तु फलोद्देशेन विधीयते । प्राप्तभावनानुवादेनोभयकरणे वाक्यभेदात् ।

केचित्तु करणत्वविशिष्टं दधि, दधिकरणत्वं वा तृतीयोपात्तफलकरणत्वेन विधीयते । तृतीयार्थकरणत्वस्य निरूपकापेक्षैव चाश्रयापेक्षेत्याहुः । तन्न यागवैषम्ये प्रमाणाभावात् । सर्वथा सिद्धो-

---

* दधिद्रव्यकहोमत्वसादृश्याच्च — इति ख० ग० पुस्तकयोः पाठः ।

कदेशत्वाद्देवतात्वस्य । तस्याः प्रतिग्रहीतृत्वाभावात् । निरूढधर्म-समनियतसम्प्रदानत्वव्यापकदेवतात्वरूपाखण्डोपाधिस्वीकारे * तु स्व-रसं लक्षणा । अतोऽपि दुर्बलत्वम् । तस्मादाश्विनवाक्येऽपि गुणात् द्रव्यदेवताविशिष्टं कर्मान्तरमेव वाजिनप्रतिपत्त्यर्थमामिक्षायागाङ्ग-त्वेन विधीयते । गुणस्य च पूर्वमनिविशमानत्वेन भेदकता । सा च क्वचिद्वाक्यभेदापत्त्या क्वचित् प्रधानगुणावरोधात् क्वचिदेकप्रसर-ताभङ्गादित्यनेकप्रकारिकेति ध्येयम् ॥९॥२६॥

अगुणे तु ॥ यत्र तु नोत्पत्तौ गुणश्रवणं, यथाऽग्निहोत्रं जुहो-तीति । तत्र तदनुवादेन दध्ना जुहोति, पयसा जुहोतीत्यादिभिः सर्वैरेव गुणविधानं विकल्पेन । तत्र स्वस्वैकपदोपन्यासेन सर्वेषामेव युगपत् प्रवृत्तेरेकावयवतुल्याभावादिति प्रत्युदाहरणमात्रम् ॥१०॥ ॥२७॥

फलश्रुतेः ॥ अग्निहोत्रं प्रकृत्य दध्नेन्द्रियकामस्य जुहुयादिति श्रुतेः, स एव होमो दधिविशिष्टः फलोद्देशेन विधीयते । न च प्राप्तकर्मानुवादेन गुणसम्बन्धः फलसम्बन्धश्चेति वाक्यभेदः । प्राप्ता-नामपि कर्मणां राजकर्तृविशिष्टानां फलोद्देशेन राजसूयवाक्ये विधानवदिहापि तदुपपत्तेरिति प्रथमः पक्षः ।

द्वितीयस्तु नात्र राजसूयन्याय । कर्तुर्हि प्रयोगान्वयित्वात् फलस्य च विनियोगान्वयित्वादुत्पन्नस्यापि कर्मणः प्रयोगविधौ फलविशिष्टविनियोगस्य कर्तुश्च वैशिष्ट्योपपत्तिः । प्रकृते तु दध्न-

* देवतात्वरूपाखण्डधर्मस्वीकारे, — इति ख० ग० पुस्तकयोः पाठः ।

तेन रेवतीविशिष्टवारवन्तीयनिर्देशेऽपि दाशायणयज्ञन्यायेनाप्राप्तरेवतीमात्रस्यैव फलसम्बन्धोपपत्तेः । अतोऽधिन्यायेन गुणफलसम्बन्ध एव युक्तः ।

सिद्धान्तस्तु साम्न आश्रयलाभः शक्यते वक्तुम् । यागस्य तावत्प्रकृतत्वेऽपि अग्निष्टोमसामेत्यनुवादानुपपत्तेर्न साक्षादाश्रयत्वम् । अग्निष्टोमस्तोत्रद्वारा तस्यैव वा साक्षादाश्रयत्वं तु अग्निष्टोमस्तोत्रस्यातिदेशतः स्तोत्रान्तरमाधारत्वेनोपस्थितत्वादनाशङ्क्यम् । न च वायव्यवाक्येन तस्यौपदेशिकी विशिष्योपस्थितिः । आतिदेशिकसंबाधसम्भवे औपदेशिकाद्बाधस्यान्याय्यत्वेन विशिष्योपस्थितेराश्रयत्वाबाधकत्वात् । न च साम्नो गायतिधातुवाच्यत्वेन क्रियारूपत्वादाश्रयालाभेऽपि न क्षतिः । साम्नोऽध्यात्मकस्वरसमाहाररूपत्वेन वाक्यगेयादौ प्रसिद्धस्य सिद्धरूपतया धातुवाच्यत्वस्याप्रयोजकत्वात् । अन्यथा सौभरस्यापि स्तोत्राश्रयत्वानुपपत्तेः । वारवन्तीयमात्र आश्रयानपेक्षत्वे अग्निष्टोमसामेत्याद्यनुवादानुपपत्तेश्च ।

अतः साम्न आश्रयसापेक्षत्वात् तावत्प्रकरणेनाश्रयलाभः । न च वारवन्तीयमग्निष्टोमसाम कार्यमिति प्राकरणिकेन वाक्येनैव गौरवभिया अङ्गत्वविधानादाश्रयसमर्पणमिति वाच्यम् । साम्नोगुणत्वपक्षे तल्लाभोपपत्तावपि रेवतीमात्रस्य गुणत्वे तद्योगात् । साम्नोऽगुणत्वे तु विधेरप्राप्तरेवतीमात्रपरत्वादेवासम्भवि । फलपदाभावे हि विधिर्यद्विषये अप्राप्ततया व्याप्रियते तस्यैव प्रयोजनाकाङ्क्षया फलसम्बन्धो यथा गोदोहनादेः ।

तच्च पशुपदाभावे वारवन्तीयस्य प्राकरणिकवाक्येनैव प्राप्त-

गुणफलसम्बन्धः । प्रयोजनं, दध्नो न प्रतिनिधिरुल्लेखविशेषो वा सिद्धान्ते द्रष्टव्यम् ॥११॥२८॥

रेवतीषु ॥ त्रिवृदग्निष्टुदग्निष्टोम इत्यनेन विहितस्याग्निष्टुद्यागस्य फलसम्बन्धे, तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेतेत्यनेन कृते पश्चादाम्नातम् । एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेति ।

तत्रापि पूर्ववदाद्यः पूर्वपक्षः । राजसूयन्यायेन स्वकारकविशिष्टाग्निष्टोमस्तोत्रभावनाविशिष्टकामतयार्थभूतकालकर्त्रादिरूपप्रयोगान्वयिगुणसत्त्वेन विनियोगविशिष्टप्रयोगविधिसम्भवात् । दृश्यते चायमेव प्रकारो वायव्यवाक्ये* सिद्धान्तिनाऽपि ।

द्वितीयस्तु नाम राजसूयन्यायः । प्रयोगस्य अग्निष्टोमस्तोत्रोत्तरकालत्वस्य च वायव्यवाक्येनैव प्राप्ततया तदनुवादेन रेवतीविधिः फलोद्देशेन चाग्निष्टुद्विनियोगविधिश्चेति वाक्यभेदात् । वायव्यवाक्ये हि अतिदेशेन सम्भवत्प्राप्तिकमप्यग्निष्टोमस्तोत्रोत्तरकालत्वादि ततः पूर्वप्रवृत्त्यङ्गीकारेण प्रयोगविशेषणतया विहितम् । न त्वत्र । वायव्यवाक्यस्यापि कृत्स्नेनास्य पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेः । न च विनिगमनाविरहः । प्राथम्यस्यैव नियामकत्वात् । अतोऽलाघवाद्गुण एव रेवत्यधिकरणकवारवन्तीयाख्यो रेवत्याख्य एव वा अप्राप्तत्वात् फलोद्देशेन विधीयते । वारवन्तीयमग्निष्टोमसाम कार्यमिति प्राकरणिकेन वाक्येन वारवन्तीयस्यापि प्राप्तत्वात् । न चान्यपक्षे तृतीयान्तेनैतच्छब्देन विशिष्टमङ्गान्तराद्रेवतीमात्रनिर्देशानुपपत्तिः ।

* वायव्यावाक्ये, — इति क॰ पुस्तक पाठ ।

विकारि*त्वेनैतस्याग्निष्टुद्यागविकारत्वादारवन्तीय प्राप्तमेवानूद्यते । केवलं रैवतीविशिष्टस्तोत्रभावनोत्तरकालता विशिष्टयागान्तरभावनेव फलोद्देशेन विधीयते । यद्यप्येतच्छब्दः प्रकृतिविकारभावानुवा-दकः । तृतीयान्तैतच्छब्दः प्रस्तोष्यमाणकर्मवचनो न दुष्यति । अन्त-रङ्गाश्रयत्वाद्गुणस्य प्रयोगान्वयित्वाद्वैष्टिवद्यद्यपि तद्भेदमेवापादयेत्, तथापि कालस्यात्र समव्याप्तिकतया वाक्यभेदपरिहारार्थं विधे-यत्वेऽपि तात्पर्यगत्या यागे परम्परासम्बन्धेन विधेयस्य रैवत्याख्यस्य गुणस्योत्पत्त्यपेक्षितात्मकभेदबोधकत्वाविघात ॥१२॥१८॥

सौभरे ॥ बृहत्सामाख्यस्तोत्रं प्रकृत्य समाम्नातैर्यो वृष्टिकामो यो-ऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीतेत्येतैर्वाक्यैरेकस्तोत्रा-श्रितं सौभरं साम फलत्रयोद्देशेन विधीयते । उद्देश्यानेकत्वेन स्तुवीतेत्यस्यानुषङ्गेण वाक्यभेदप्रतीतेः । सौभरे च शाखाभेदेन निधनाख्यान्तिमभागावयवाधारतया हीष् ऊ ऊर्क् इत्यादीन्यव-राण्याम्नातानि ।

तदेव सौभरं प्रकृत्य हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊ इति स्वर्गकामाय, ऊर्गित्यन्नाद्यकामायेति श्रुतम् । तत्र वृष्टि-कामादिशब्दानां फलपरत्वात्तदुद्देशेनैव हीषादयो गुणा विधीयन्ते । सौभरस्य प्रकृतत्वाद्यूपादिवदाश्रय । निधनाधारतया हीषादिपा-ठस्यैव नियामकत्वाद्भागान्तरे लोभाद्यक्षरान्तरबाधापत्तेश्च न निध-नातिरिक्तभागाश्रयत्वापत्तिः । न च लाघवादृष्टिसाधनसौभरी-

* विकारि, — इति ख॰ ग॰ पुस्तकयोः पाठः ।

त्वाद्विधिरयं रेवतीमात्रविषयः सम्पद्यत इति तस्यैव फलसम्बन्धो वाच्यः । न चास्याश्रयः केनापि प्रकारेण लब्धुं शक्यः । न च प्रकारान्तरेणालाभेऽपि अनेनैव वाक्येन आश्रयविशिष्टगुणविधानादाश्रयगुणोभयविशिष्टभावनाविधानाद्वा तल्लाभोपपत्तिः, कृतप्रयोजनत्वात्साधनत्वेनाश्रयतासम्बन्धेनैव वैशिष्ट्याङ्गीकाराच्च न गुणान्तरतापत्तिरिति वाच्यम् । आश्रयस्य गुणान्वयानुपपत्तेः । कर्मत्वातिरिक्तस्याश्रयत्वस्य दुर्वचत्वेन भावनायाः फलाश्रयरूपोभयकर्मकत्वाङ्गीकारे एककर्मकत्वभङ्गापत्तेश्च ।

न च तत्वाभ्दीकायामाश्रयस्य अग्निष्टोमस्तोत्रस्य कर्मत्वात्तदुत्तरकालताविशिष्टगुणभावनाया आख्यातोपात्तायाः एककर्मकत्वैकस्या भावनाया द्विकर्मकतापत्तिरिति वाच्यम् । गुणभावनायाअवच्छेदकीभूतधात्वर्थापेक्षायां यागस्यावच्छेदकत्वाङ्गीकारे रेवतीनां यागकरणत्वापत्त्या स्तोत्रं प्रति करणत्वानापत्तेः । स्तोत्रस्यैवावच्छेदकत्वाङ्गीकारे तु धात्वर्थद्वयावच्छिन्नभावनाद्वयाभावात् स्वामत्यथानुपपत्तिः ।

न च रेवतीविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालविशिष्टरेवतीकरणकयागाश्रयिकभावनैव फलोद्देशेन विधीयतामिति वाच्यम् । आख्यातोपात्तभावनाया द्विकर्मकत्वापत्तेस्तदवस्थत्वात् । न च प्रकरणाद्यागस्याश्रयत्वोपपत्तेर्न द्विकर्मकत्वम् । तथात्वेऽपि तृतीयान्तेतच्छब्दस्य धात्वर्थपरत्वभयेन यागपरामर्शित्वस्यैवापत्तौ रेवत्यादिपरामर्शकत्व एव प्रमाणाभावात् ।

अतस्तदपेक्षया लघुभूतकर्मान्तरविधानमेव न्याय्यः । तदा हि

## अथ तृतीयः पादः ।

श्रीगणेशाय नमः ।

गुणस्तु ॥ ज्योतिष्टोमे, यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रानिति श्रुतम् । तत्र यदि-शब्दोपादानान्निमित्तत्वस्य च तावद्रथन्तरे इति वाक्यार्थः । तच्च विशेषणत्वेन सम्पन्नार्थत्वात् । साध्यत्वपदार्थे, तस्य कादाचित्कत्वाभावात् । नापि विशिष्टे ज्योतिष्टोमे, सामान्तराणामपि नियतत्वेन बृहद्रथन्तरयोरन्ययोगव्यावृत्त्या विशेषणत्वासम्भवात् । ज्योतिष्टोमत्वावच्छेदेनायोगस्यापि व्यावर्तयितुमशक्यत्वाच्च । अतः समासार्थस्य केवलरथन्तरसामकत्वस्य प्रकृते कर्मणि ग्रहाप्राप्तानिमित्तत्वेन निवेशायोगादुभयविशिष्टं कर्मान्तरमेव विधीयते । यदि-शब्दस्तु विशेषितार्थ इति प्राप्ते ।

बृहद्रथन्तरयोर्ज्योतिष्टोमे पाक्षिकत्वात्तस्यायोगव्यावृत्त्या परस्परयोगव्यावृत्त्या वा विशेषणत्वोपपत्तिः । न च ज्योतिष्टोमत्वावच्छेदेन तदभावः । स्तोत्राकारकार्थं पृष्ठ्यस्तोत्रत्वावच्छेदेन तदुपपत्तेः । अन्यथा, तवापि सान्नाय्ययागे प्रोक्षणावघातादौ तदयोगव्यवच्छेदाभावात् । अतोऽत्रैव रथन्तरविशिष्टस्य क्रतोर्निमित्तता ।

वस्तुतस्तु न क्रतोर्निमित्तान्तर्भावः । प्रयोजनाभावात् । प्रकरणावगतक्रतुकर्तृत्वेनान्यपदार्थसम्बन्धस्यानुवादत्वात् । अन्यथा ज्यो-

यन्निधने अनियमेन प्राप्तानां हीषादीनां नियममात्रकरणाल्लाघवं स्वार्थत्वं यदुक्तम्। तथात्वे वृष्टिकामादिपदैः तत्तत्साधनीभूतसौभरलक्षणापत्तेः*। तस्य च निधनविशेषणत्वे विशिष्टोद्देशापत्तेश्च। अतः सौभरफलात् फलान्तरार्थानि हीषादीनीति प्राप्ते।

नियमविधित्वलाघवानुरोधाद्वृष्टिकामादिपदैर्वृष्टिसाधनसौभरलक्षणामङ्गीकृत्यापि हीषादिनियमविधिरेवाश्रीयते। पक्षप्राप्तिश्च पाठान्निधनस्थान एवेति नियमस्यापि तत्स्थानफललाभः। वस्तुतस्तु नियमविधित्वलाघवानुरोधेन हीषादेर्वृष्ट्याद्यर्थत्वेनैव तत्साधनसौभराधारत्वसम्बन्धेनाश्रीयत इति न लक्षणाऽपि। सम्बन्धघटकीभूतञ्च सौभरं न सौभरत्वावच्छिन्नम्। अपि [illegible] सौभरविशेष एव। शाखाभेदेन हि कतिचिद्विजातीयानि सौभराणि निधनान्तरयुक्तानि समाम्नातानि। तत्र च हीषः पक्षेऽप्यप्राप्तत्वान्न तस्य सौभरस्य सम्बन्धघटकत्वम्। अपि तु यज्जातीयसौभरे हीषादीन्यनियमेन समाम्नातानि तज्जातीयस्यैव तत्। अतश्च वृष्ट्यर्थं निरुक्तसम्बन्धेन हीषेवेति नियमकरणात् सम्बन्धघटकीभूतसौभरे निधनान्तरव्यावृत्तिवद्विजातीयसौभरान्तरस्यापि वृष्ट्याद्यर्थत्वव्यावृत्तिसिद्धिः। अतश्च तन्नित्यप्रयोगविषयमेव सम्पद्यते इति विवेकः ॥१३।३०॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
द्वितीयस्य द्वितीयः पादः ॥०॥

---

* तत्तत्साधनीभूतलक्षणापत्ते, — इति ख॰ ग॰ पुस्तकयोः पाठः।

प्रत्येकप्रयोगाश्च पश्चानुलोमविषया* इति बोध्यम् । एतयाऽन्नाद्यकामं याजयेदित्यनेन चोभयोरपि नित्यनैमित्तिकप्रयोगयोः फलार्थं बहिःक्रत्वनुष्ठानमिति न ब्राह्मणादिगुणस्य भेदकत्वमिति प्राप्ते ।

राजानमभिषिञ्चेदिति श्रुतौ† राजोद्देशेनाभिषेकविधानादभिषेकाधिकारिकराज्ययोगात् प्रागेव राजशब्दस्य क्षत्रियवाचित्वप्रतीतेस्तस्य कर्मणोऽप्यधिकाराय पर्यन्तपुरोहितादिभ्योऽपक् इति सत्या पुरोहितादिगणपठिताद्राजशब्दाद्यगादिविधानेन च राज्यशब्दस्य राजशब्दप्रसिद्धिपूर्वकत्वावगतेः द्रविडप्रयोगानुसारेण राजशब्दः क्षत्रियवचन एव ।

अतश्चैतौ ब्राह्मणादीनां प्राप्त्यभावाद्विधेयत्वापत्तेः कर्तृरूपगुणाद्वेष्टिप्रयोगान्तरमेव पञ्चविश्वेष्टिरूपं सगणगुणविशिष्टं बहिःक्रतु विधीयते । तस्य चोक्तवचनेनान्नाद्यं फलम् । अतः क्रतुप्रत्येकं पञ्च प्रयोगा एव । यद्यपि च पूर्वपक्षसिद्धान्तयोः पञ्चविध्वेष्टिप्रयोगसङ्ख्यायामपि ब्राह्मणादिगुणस्य पूर्वपक्षे न भेदकत्वं सिद्धान्ते तु तदिति विशेषः । तत्प्रयोजनञ्च, पञ्चदशोपपादनेनैवोक्तम् ।

न चैवं राजन्यवाक्ये तस्य प्राप्तत्वाद्विधेयत्वाभावेन भेदकत्वानापत्तिः । राजन्यपदस्याभिषिक्तक्षत्रियमात्रवाचित्वेन राजसूये अप्राप्तस्यैव तस्य विधेयतया भेदकत्वोपपत्तेः । राजसूये हि राजपदस्य क्षत्रियमात्रशक्तस्यापि, राजेत्येतानभिषिक्तानाचष्टे इति निरूढत्व-

---

* विषया एव, — इति ख० ग० पुस्तकयोः पाठः ।

† श्रुतौ, — इति ख० ग० पुस्तकयोः पाठः ।

तिष्टोमस्थान्यपदार्थस्य विकृतावभावेन शुक्राग्रहादेरनापत्तेः । अतो-ऽत्रापि रथन्तरमेव निमित्तम् । नैमित्तिकन्तु अपरविशेष प्रकृतापूर्वसाधनीभूतपशोरुद्देशेन विधीयते । न च पाठादैन्द्रवाय-वाग्रस्यानियमस्य प्राप्तेर्विधिवैयर्थ्यम् । तत्र पूर्वमेव नैमित्तिकतया विधानात् । तत्प्रयोजनञ्च, निमित्ताभावे प्रकृतौ विकृतौ च लोप । यद्यपि च सर्वत्र निमित्तस्य सत्त्वे नैमित्तिकावश्यकत्वाच्च प्रमेय, तथापि तस्याच पाठादेव सिद्धेस्तदभावे तदभाव एव प्रमेय बोध्यम्* । तस्मान्न कर्मान्तरविधि ॥१॥३१॥

अवेष्टौ । राजसूये राजकर्तृके प्रत्येकद्विकामनादवेष्टिमध्यका पञ्चेष्टय पृथक्प्रयोगा समाम्नाता । तदवान्तरप्रकरणे, यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघार-येत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवमिति श्रुतम् ।

तथापि पूर्ववद् ब्राह्मणकर्तृकत्वादि निमित्तमेव, यदि-शब्द-श्रुते । राजसूयस्य त्रैवर्णिककर्तृकत्वेन ब्राह्मणादे प्राप्तत्वाच्च । राज-शब्दस्य प्रजापालनकर्तरि सर्वलोकप्रसिद्धेः । क्षत्रियमात्रे द्रविड† प्रसिद्धेस्तु एकदेशस्य प्रसिद्धित्वेनाबाधकत्वात् । व्याकरणप्रसिद्धे-रप्यनुशासकत्वेनानियामकत्वाच्च । सर्वलोकप्रसिद्धेः श्रौत यदि शब्दश्रुत-कत्वाच्च ।

अतो ब्राह्मणादिकर्तृकत्वे निमित्ते मध्येनिधानपूर्वकप्रत्याहु-त्यभिघारणविशिष्टपश्वविध्येकेष्टिप्रयोगो राजसूयान्तर्गतो विधीयते ।

---

* बोध, — इति क० पुस्तके पाठ ।

† द्रमिड, — इति क० पुस्तके पाठ । स च परम ।

पुत्रवाक्ये वयोऽवस्थाविशेषणवत्त्वाऽपि नापद्यते । सर्वथा आधानप्राप्तैर्निमित्तार्थानि ब्राह्मणादिश्रवणानि न भेदकानि । तथा विद्यासाधनतया अध्ययनं तत्साधनत्वेनोपनयनस्यार्थप्राप्तम् । अध्ययनस्य तु स्वाध्यायोऽध्येतव्य इत्यनेन नियमोऽपि । अत सर्वसाधारण्येन * प्राप्तोपनयनोद्देशेन ब्राह्मणकर्तृकत्वे निमित्ते वसन्त कालो विधीयत इति प्राप्ते ।

सर्वकर्तृकत्वात् सर्वकालकत्वस्यापि आधानादौ प्राप्तिसम्भवेन ब्राह्मणकर्तृकत्वे निमित्ते कालविधिः काले वा निमित्ते कर्तृविधिरित्यत्र विनिगमनाविरहादुभयविशिष्टाधानादिविधिरेव । उपनयनस्य च पक्षे सम्भवत्प्राप्तिकत्वेन सुतरां विध्युपपत्तिः । अतएव विनिगमनाविरहात् कर्तृकालादिरूपस्य प्रयोगान्वयिगुणस्य प्रयोगविधापादकत्वासम्भवे एतद्विधिविहितप्रयोगानुवादेनैव जातपुत्रादिवाक्येषु वयोऽवस्थाविशिष्टकर्तृविधिः । आत्मनेपदार्थस्य चोत्पत्त्यान्वयिनो गुणस्य अश्वत्वादुत्पत्त्यादिकमप्येव, न तु जातपुत्रादिवाक्ये वाक्यभेदापत्तेः । प्राप्तत्वाद्वा ब्राह्मणवाक्ये एवोत्पत्त्यादि, इतरयोस्तु प्रयोगमात्रम् । तेन सिद्धोऽस्यापि गुणात्प्रयोगभेदः । एतयोश्चाधानोपनयनयोरग्निविद्याफलत्वेऽपि प्रकरणे प्रयाजादिश्राणाश्रितत्वमपि । एवञ्च स्वविधिप्रयुक्ताधानोपनयनजन्याग्निविद्यालाभे क्रतुविधयो नाग्निविद्ये तदुपायान्वा प्रयुञ्जत इति तद्रहितस्य शूद्रादेरनधिकार इति प्रयोजनं षष्ठे वक्ष्यते ॥३।६।१॥

अयनेषु ॥ दर्शपूर्णमासयोर्दाक्षायणयज्ञेन स्वर्गकामो यजेतेति

* साधारण्येन, — इति ख० ग० पुस्तकयोः पाठः ।

वणतात्पर्यग्राहकाल्लिङ्गादभिविक्रमचित्यमात्रस्यैवाधिकारः । अतः सिद्धं त्रिष्वपि वाक्येषु कर्तृरूपस्य गुणस्य प्रयोगभेदकत्वम् । यदि-शब्दस्याभिघारयेदिति लिङः प्रयोक्तृत्वापरपर्यायहेतुमदर्थकत्वे चाख्यातद्वयैकवाक्यत्वे च तात्पर्यग्राहकः । तेन मध्ये निधानपूर्वक-प्रत्यासत्त्यभिघारणप्रयोजकीभूतैर्ब्राह्मणादिकर्तृकैर्यागैरिष्टं भावये-दिति वाक्यार्थो बोध्यः ॥१॥२१॥

आधाने ॥ वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति श्रुतम् । तथा, वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमिति च । तत्र सर्ववर्णसाधारणानां क्रतूनामग्निविद्या-साध्यत्वादग्नेश्च उपायभूतस्याधानस्य, य एव विद्वानग्निमाधत्ते इत्यनेनानन्याचिन्नवनिकेनाप्युद्देशेनाधानविधायिना प्राप्तत्वादाधाने ब्राह्मणादीनां प्राप्तेर्निमित्तार्थं श्रवणम् । ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः काल आधानाङ्गत्वेन विधीयते । अथ वा उत्त्वेतस्याथ सम्भारान् सम्भरतीति विध्यन्तरप्रेषस्य वर्त्तमानापदेशत्वं, तथापि सम्भारेष्वग्निमादधातीत्ययमाधानप्रापको विधिः । अत्र हि न सम्भा-राविधेयाः, प्रमाणान्तरप्राप्तत्वात् । नापि तदधिकरणत्वं, तस्मि-न्नाधीयतामग्निमिति मन्त्रवर्णादेव प्राप्तत्वात् । अत आधानमात्र-विधिरयम् ।

अथ वा, प्राप्ताधानानुवादेन कालविधिरात्मनेपदार्थस्यात्माधा-नुराहवनीयत्वाभावरूपस्य च विधिरिति वाक्यभेदापत्तेः जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्ययमाधानप्रापको विधिः । उभवाक्ये तु अभ्यु-दयशिरस्कतया मन्त्रवर्णात् पूर्वमेवाधिकरणत्वविधिः । एवञ्च जात-

रभ्याधीताभ्यां, वायव्यं श्वेतमालभेत भूतिकाम', सौर्यं चरुं निर्वपेद्-ब्रह्मवर्चसकाम इत्येताभ्यां श्वेतचरू गुणौ विधीयेते। आलम्भकर्मी-भूता ईदृशा श्वेता कर्त्तव्येति। निर्वापश्च चरुशब्दलक्ष्यस्थाल्यां कर्त्तव्य इति। सर्वेषाणाञ्च वायुसम्बन्धाद्वायव्यमित्यनुवादः। सौर्यमिति चाग्नेयवदेव। तेजोदेवत्यत्वसामान्यात्। न तु देवताविधियोगा-श्रवणात्। उभयत्रापि फलपदं भार्वकाम्ववाययमात्रफल*प्रयोजक-त्वानुवाद इति प्रथमः पक्षः। द्वितीयस्तु फलपदवैयर्थ्यप्रसङ्गात् प्राकरणिकाश्रयालाभेन च गुणफलसम्बन्धानुपपत्तेः गुणविशिष्टं यागयुक्तं आलम्भनिर्वापाख्यं कर्मान्तरमेव फलोद्देशेन विधीयते इति।

सिद्धान्तस्तु। वायव्यं सौर्यमित्यादितद्धितान्तपदवैयर्थ्या-पत्तेर्द्रव्यदेवतासम्बन्धानुमितो याग एवालभति-निर्वपति-धातुलक्षितो-द्रव्यदेवताविशिष्टः फलोद्देशेन विधीयत इति। अतिदेशप्राप्तौ चालम्भनिर्वापौ न विधीयेते ॥५॥२४॥

विधाने ॥ यत्र तु न देवताश्रवणं तत्र न यागकल्पना, अपि तु संस्कारमात्रविधानम्। यथाऽग्निहोत्रे वत्समालभेतेत्यत्राल-म्भमात्रं वत्ससंस्कारकत्वेन विधीयते। आलभतेः स्पर्शमात्रवाचि-त्वात् ॥६॥२५॥

मधुश्चास्तु ॥ अग्नौ श्रुते चरुमुपदधाति बृहस्पतेर्वा एतदन्नं यन्नीवारा इत्यत्र यजमानस्याग्नि बृहस्पतेः कथं स्याद् यदि न बृहस्पतिर्देवतेत्यर्थाद् बृहस्पतेर्देवतात्वगतेस्तैत्तिरीयशाखायां बा-र्हस्पत्यो भवतीति तद्धितपदयुक्तवाक्यशेषश्रवणाच्च द्रव्यदेवतासम्-

* फल, — इति ख॰ ग॰ पुस्तकयो पाठ।

श्रुतम् । तथा साकं प्रस्थायीयेन यजेत पशुकाम इति श्रुतम् । लोके अप्रसिद्धत्वादुद्भिदादिवन्नामधेयत्वावगतेः अन्यथा अभ्यासाद्वा कर्मान्तरं विधीयते । फलसम्बन्धस्यापि सार्वकाम्यवाक्यवशादेव प्राप्तत्वेनान्यपरत्वाभावादिति प्राप्ते ।

यद्यपि लोके गुणो न प्रसिद्धस्तथापि द्रव्यस्य यजमानस्यैते द्वाभ्यां ऋत्विग्भ्यां फलैकमयन प्रयोगावृत्तिर्यत्र यज्ञस्येति व्युत्पत्त्या-ऽऽवृत्तिपरत्वावगतेः साकं सह प्रस्थाय यजेति व्युत्पत्त्या च सहत्वपरत्वावगतेर्नातिरिक्तशक्तिकल्पनया नामधेयपरत्वाध्यवसानम् । अतोऽत्राह आवृत्तिरूप सहत्वरूपश्च गुण एव फलोद्देशेन विधीयते । आवृत्तिश्च कियतीत्यपेक्षायां द्वे पौर्णमास्यौ द्वे अमावास्ये यजेतेति वाक्येन विशेषविधानाद्द्विरावृत्तिरेव । सहत्वञ्च प्रस्थाने केनेत्यपेक्षायां सह कुम्भीभिरभिक्रामेदिति वचनात् कुम्भीभ्याम् । अनेनैव च वचनेन सहत्वाश्रयत्व अभिक्रमणस्य विदधता अत्रान्तर-प्रकरणाभावेऽपि तस्याश्रयत्वसिद्धिः । आवृत्तेस्तु प्रकरणाद्दर्शपूर्ण-मासावेवाश्रय । अतोऽत्र अन्यत्वाभावात् फलसम्बन्धपरत्वेन चा-भ्यासाभावाच्च कर्मान्तरम् । वस्तुतस्तु पूर्वपक्षात् अन्यायासत इति स्मृत्या सक्तात्वाभावे एलानापत्तेर्वायपदे सत्वात्वाद्यभावेऽपि अवयवार्थप्रतीत्या योगरूढिस्वीकारादवयवार्थरूपावृत्तिराप्तत्वात् फलोद्देशेन विधीयत इति न विरोध ॥४।१२॥

गस्कारम ॥ ईयामालभेत, चतुरोमुष्टीर्निर्वपतीत्येताभ्यां विदि-त्रयोर्दर्शपूर्णमासयोः* सौमारुणमभिमृष्टिर्निर्वपतोरनुवादेन यना-

* विहितयोर्दर्शपूर्णमासयोः — इति ख० म० पुस्तकयोः पाठः ।

भावः । वृत्तपर्य्यग्निकरणस्यैव क्तप्रत्ययान्तार्थस्य विधेयत्वात् । तस्य च गृहमेधीयाज्यभागन्यायेन प्राकृतस्यैवातिदेशतः पूर्व्वप्रवृत्त्या विधेयत्वात् क्लृप्तोपकारकत्वेन च तेनैव नैराकाङ्क्ष्यादतिदेशाकल्पनेनोत्तराङ्गानामर्थादेव निवृत्तौ त्रैदोष्यानापत्तेः । वृत्तपर्य्यग्निकरणस्य च पूर्वाङ्गव्यवहितेष्वसम्भवात्तान्यप्याक्षिप्यन्ते । न च क्तप्रत्ययवत्त्वेन प्रमाणान्तरप्रमितत्वावगमादतिदेशप्रतिबन्धकत्वम् । प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यादाविव प्रमाणान्तराभावेऽपि एतद्विधिविधेयस्यापि क्तप्रत्ययोपात्तत्वेन बाधकाभावात् ॥८।२।७॥

अद्रव्यत्वात् ॥ अनारभ्य श्रुतं, एष वै हविषा हविर्यजति योदाभ्यं गृहीत्वा सोमाय यजते इति । तथा, परा वा एतस्यायुः प्राण एति योंऽशुं गृह्णातीति । अत्र हविः सोमः स एव देवता स एव द्रव्यमिति प्रथमार्थवादस्यार्थः । प्राण आयुर्यदामभिषवन्त- इति द्वितीयस्य। तत्र न तावद्ग्रहणमेव ज्योतिष्टोमे विधीयते। संस्काररूपस्य ग्रहणस्यावघातादिवददाभ्यनामकत्वानुपपत्तेः । द्वितीयान्तयोस्तयोः संस्कार्यद्रव्यनामत्वाङ्गीकारे तु अव्यभिचरितक्रतुसम्बन्धाभावाय द्रव्यनामोद्देशेन ग्रहणविधिसम्भवः । अतो द्रव्यदेवताविशिष्टयागान्तरविधानमेवेदम् । अदाभ्यपदेन विभाऽनर्ध्वसोमाख्यद्रव्यस्यांशुपदेन च निर्यासद्रव्यस्याभिधानात् । द्वितीया चोभयत्र सक्तुन्यायेन । देवता त्वेकत्र सोमोऽन्यत्र प्रजापतये त्वा इति मन्त्रवर्णात् प्रजापतिः । गृह्णातियागोऽनुवादो द्वितीये यागलक्षकः । तयोश्च यागयोः प्राकरणिकैतत्समानजातीयतैत्तिरीयशाखास्थाम्नापाठाज्ज्योतिष्टोमाङ्गत्वमिति प्राप्ते ।

•न्वानुमितयागविधानमेवेदम्। तस्य चौषधद्रव्यकत्वेनाग्नेयातिदेशतः खिष्टकृदादिप्रतिपत्तिप्राप्तौ चरुमुपदधातीत्यनेनोपधानं प्रतिपत्तित्वेन विधीयत इति प्राप्ते।

यद्यपि तैत्तिरीयशाखायान्तद्धितश्रवणं, तथापि विध्यभावाद्विध्यन्तरैकवाक्यत्वभङ्गापत्तेश्च नायं देवतातद्धितः। चरुमुपदधातीत्यनेन च स्थण्डिलनिष्पादकचरुसंस्कारकतयोपधानविधानात् देवतानाकाङ्क्षतया नार्थवादोक्तोऽप्ययं देवताविधे कल्पकम्। अतएव चर्वपेक्षितप्रकृतिद्रव्यस्यैव नीवारकपस्य विधिकल्पकम्। अतश्च बृहस्पतेर्ब्राह्मणस्यास्य नीवारा इत्येवं सम्प्रुपत्तेर्न बृहस्पतेर्वा द्रव्यं देवताकल्पनद्वारा यागकल्पक इति सिद्धम् ॥७॥१६॥

पात्नीवते ॥ त्वाष्ट्रं पात्नीवतमालभेतेत्यनेन द्रव्यदेवताविशिष्टं यागं विधाय पर्यग्निकृतं पात्नीवतमुत्सृजन्तीति श्रुतम्। तयोभयदेवत्यस्य पूर्वयागस्य आग्नेय चतुर्धा करोतीतिवत् केवलपात्नीवतपदेनानुवादायोगात्पर्यग्निकरणादेश्च विधेयस्य गुणस्यानिर्देशेन प्राकृतादितराङ्गपरिसङ्ख्यायाश्च दोषत्रयापत्तेः पर्यग्निकृतपदस्यानुवादत्वमङ्गीकृत्य कर्मान्तरविधिरेवायमिति प्राप्ते।

प्रत्यभिज्ञानाच्च कर्मान्तरम्। न चानुवादानुपपत्तिः। यत्थग्नीषोमादिवत्त्वष्टृपत्नीवतोर्यास्यव्यासक्तिदेवतात्वे यथोतात्ययाग्निशब्दवत्तत्पदयाऽभिधानोपपत्ते। वस्तुतस्तु पृथक्तद्धितश्रवणाद्देवताद्वयमेवेदम्। एकवाक्योपादानाच्च समुच्चयः। अतो डित्थडवित्थयोर्माता डित्थस्य मातेतिवल्लक्षणयैव केवलेन पात्नीवतपदेनानुवादः। अत पूर्वकर्मानुवादेन गुण एव विधीयते। न च विधेया-

पञ्चमनुभुङ्क्ते इत्यादौ तुल्यक्रियायोगाभावेऽप्यनुशब्ददर्शनाच्च तदनुरोधेनाग्निशब्दस्य चयनशब्दस्य च यागपरत्वकल्पना युक्ता । अतोविदग्धाक्ये चयनमेवाग्निसंस्कारार्थं विधीयते । अग्निशब्देन च यद्यपि शक्त्या ज्वलन एवाभिधीयते, तथापि तदर्थत्वे वैयर्थ्यापत्ते-र्निरूढलक्षणया आहवनीयादिपरत्वावसायात्तदुद्देशेनैव चयनं संस्कारकतया विधीयते । *संस्कारस्य सामर्थ्याच्चयनमिष्टकादिसञ्चित-स्थापनरूपः । स्थापितस्याग्नेरुपयोगापेक्षायामसत्यात इति वाक्येन तस्य ज्योतिष्टोमाङ्गत्वेन विधानम् । तत्र हि अग्निशब्देन चयन-मिष्टकादिसञ्चितस्थापितोऽग्निश्चयनमेव वा लक्षणयाऽभिधीयते* । अग्निष्टोमशब्दस्य जातिन्यायेन संस्थावचनोऽपि यतिन्यायेन ज्योति-ष्टोममेव प्रचुरप्रयोगादभिधत्ते । पार्थशब्द इवार्जुनम् । अतश्च ज्योतिष्टोमस्यैव लाघवादुद्देश्यतावच्छेदकं न त्वग्निष्टोमसंस्थावत्त्व-मपि ।

यद्यपि च चयनस्य ज्योतिष्टोमप्रयोगमध्यवर्तित्वादनुष्ठानसा-देश्यादेव तदङ्गत्वसिद्धिस्तथापि पशुकामश्चिन्वीतेत्यादिवाक्यैरग्नेः काम्यत्वावगमात् तदङ्गत्वप्रतिपत्त्यर्थं तत्र विरुध्यते । अयञ्चाग्निः प्रकृतौ अग्निः सोमानां चेष्टकामित्यादिवचनाद्वैकल्पिकः । अग्निपक्षे सोत्तरवेदौ ह्यग्निश्चीयत इति वचनादुत्तरवेद्या समुच्चयः । तद-

* * एतच्चिह्नान्तर्वर्त्तिपाठस्थले, संस्कारस्य सामर्थ्याच्चयनमिष्टकादिसञ्चि-तस्थापितोऽग्निश्चयनमेव वा लक्षणयाऽभिधीयते,— इति ख॰ ग॰ पुस्तकयोः पाठः ।

गृह्णातौ यागलक्षणायां प्रमाणाभावादाद्यवाक्ये गुणफलान्तर-श्रितेन विधिना ग्रहणस्यैव विधेयत्वावगमात्तोभयत्रापि ग्रहणमेवोप-भञ्जकं प्रकाश्यकद्रव्यसंस्कारकत्वेन वा विधीयते । एवं च विनि-योगभङ्गोऽपि द्वितीयाया न कश्चित्तोभवति । देवता तु सोमरूपा आद्यवाक्ये ग्रहणे एवान्वेतीति देवताविशिष्टं ग्रहणमेव तत्र विधी-यते । द्वितीये तु उपयाम गृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णा-मीतिमन्त्रवर्णाद् ग्रहणाङ्गतया देवताप्राप्तिर्द्रष्टव्या । होमसम्बन्धस्त्व-र्थाविद्यमानोपकारकत्वमादाय ज्ञेयः । देवताविशिष्टग्रहणद्वये च प्राकरणिकवाक्येन ज्योतिष्टोमाङ्गत्वस्य तदुपपादकत्वस्य च बोधोप-पत्तेर्न कश्चिद्विरोधः । प्रयोजनं, पूर्वपक्षे यागस्याङ्गत्वाद्यथाग्नि-न्यायविषयत्वं, सिद्धान्ते प्रधानत्वाच्चेति ॥८॥१८॥

अग्निश्च ॥ अनारभ्यैवं श्रुतम् । य एवं विद्वानग्निं चिनोतीति । तत्र चिनोतिना नाग्निसंस्कारार्थत्वेन चयनविधिरपि तु अग्निचय-नस्य यागस्यैव विधिः । यथातोऽग्निमग्निष्टोमेनानुयजन्ति, तमुक्थ्ये-न, तमतिरात्रेण, तं द्विरात्रेणेत्याद्युत्तरवाक्येषु अग्निष्टोमादियज्ञा-नामग्न्यनुयजनत्वरूपगुणाधानात् । न हि अन्वनुयजनत्वमग्नेरया-गत्वेऽवकल्पते । देवदत्तमनुगच्छति यज्ञदत्त इत्यादौ तुल्यक्रिया-योगे एवानुशब्ददर्शनात् । अतश्चाग्निसंज्ञकस्य यागस्य तस्मिन्नेव वाक्ये विधौ गौरवापत्तेर्विद्वद्वाक्य एव चिनोतिना लक्षणया तद्वि-धानम् । स चाव्यक्तत्वात् ज्योतिष्टोमविकारः । उत्तरवाक्येषु तस्य फलसम्बन्धसिद्धिः । इष्टकाभिरग्निं चिनुते इत्यनेन चयनस्य प्राप्तत्वा-चिनोतिर्निर्वपतिवदनुवादश्चयनस्येति प्राप्ते ।

कर्मणि च प्राप्तेऽप्युपादेयत्वमिति वैयधिकरण्यमप्याश्रीयेत । न त्वेतदस्ति । न च सन्निध्याद्यभावेऽपि नाम्न एव पूर्वकर्मोपस्थापकता । अग्निहोत्रं जुहोतीत्यनेन जुहोतिना हि यादृशी विजातीयहोमत्व-प्रकारिका होमोपस्थितिस्तादृश्येव सन्निधिनोपनीता । एवं चक्षार्थं जुहोतीत्येतदाक्यस्थजुहोतेरपि स्वविषयविषयत्वमापादयन्ती भवति तद्गतविधेयार्थैकत्वप्रतिबन्धिका ।

अग्निहोत्रादि नाम तु अग्निदेवताकहोमत्वप्रकारकहोमविशेष्य-कबोधं जनयत् जुहोतेर्न पूर्वकर्मोपस्थापकत्वमापादयितुं क्षमम् । न हि अग्निदेवताकं पूर्वं कर्मैवेत्यत्र प्रमाणमस्ति । विजातीयहोमत्वस्य नाम्नाऽनुपस्थितेः । अन्यथा पर्यायत्वेन सह प्रयोगाभावापत्तेः । अति-प्रसङ्गनिराकरणस्य प्राचीनप्रयोगाभावेनैवोद्भिदधिकरणे स्थापितत्वेन योगरूढत्वाङ्गीकाराच्च । अन्यथा मत्वर्थलक्षणादिभिया अतिप्रसङ्ग-भङ्गार्थमपि रूढ्यङ्गीकारे सोमादावपि तदापत्तेः । अतो न नाम्ना तदुपस्थितिः । अतएव यत्र नाम्नैवानुपादेयगुणयोगेन श्रुतं न च धातुः यथा सर्वेभ्यो दर्शपूर्णमासावित्यादौ, तत्र नामार्थस्यैवोपादेय-त्वसामानाधिकरण्येन विधेयत्वप्रसक्तौ नामजन्योपस्थित्या तत्प्रति-बन्धाच्च कर्मान्तरम् । अस्तु वा तदाक्यस्य प्राकरणिकत्वात्कर्मान्तर-त्वम् । अतः प्रकृते नाम्ना विधेयार्थकत्वस्य जुहोतौ प्रतिबन्धायोगा-दनुपादेयगुणयुक्तानुपस्थितिरूपप्रकरणान्तरात् सिद्धं कर्मान्तरत्वम् ।

अथ अनुपादेयगुणयोगस्य स्वदृश्युपादेयत्वाश्रयणद्वारा पारि-शेष्याद्धात्वर्थस्योपादेयत्वापादकं व्यापारः । अनुपस्थितेरुपादेय-त्वसामानाधिकरण्येन विधेयत्वाप्रतिबन्धः सः । अतएव च प्राची-

भावे चोत्तरवेदिमाचम् । उत्तरवेद्यामग्निं निदधातीति वचनात् । अतश्च तमुकृष्येनेत्यादिवाक्यानि वैकल्पिकत्वात् विकृतिविशेषे तन्नियमार्थानि, चयनाश्रितश्येनाकारत्वादिफलार्थगुणानां प्राप्त्यर्थानि चेति दशमे वक्ष्यते ॥ १०॥३९॥

प्रकरणान्तरे ॥ कौण्डपायिनामयने उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति मासं दर्शपूर्णमासाभ्यामित्यादि श्रुतम् । तत्र जुहोतिना अग्निहोत्रादिपदैश्च दूरस्थस्यापि कर्मण उपस्थितत्वात् तदनुवादेन यदाहवनीये जुहोतीतिवन्मासादिरूपगुणविधिः । उपादेयवदनुपादेयस्यापि दूरस्थकर्मानुवादेन विधाने बाधकाभावात् । कर्तव्यत्वकालादिरूपानेकगुणविशिष्टप्रयोगविधानाच्च न वाक्यभेदः । अतो न कर्मान्तरविधिः इति प्राप्ते ।

सर्वत्र प्रवर्तकस्य विधेः कृतिविषयत्वापरपर्याय उपादेयत्वं प्रमाणत्वाच्चाज्ञातज्ञापकत्वाख्यं विधेयत्वं च प्रमेयम् । तदुभयमप्येकवृत्ति । समानाभिधानश्रुत्यादिना च धात्वर्थगतत्वमस्यौत्सर्गं । योग्योपपदसत्त्वे तु विशिष्टविधिगौरवभिया तन्नानावृत्ति । यथा-यदाहवनीये जुहोतीत्यत्राहवनीयस्योपादेयत्वविधेयत्वोभयाश्रयत्वायोग्यत्वम् । अतएव तत्र धात्वनुवादापेक्षायां दूरस्थानामपि सर्वहोमानां कथञ्चिदनुवादः ।

प्रकृते तु मासस्यानुपादेयत्वादुपादेयत्वं धात्वर्थ एव वाच्यम् । अतस्तत्सामानाधिकरण्येन विधेयत्वमपि तत्रैवेति विशिष्टस्य विधानायोगाद्भेदः । एवं सत्यपि, यदि मासजुहोतीत्यादिवत् प्रत्यभिज्ञापक सन्निध्यादि प्रमाणं भवेत्ततोऽन्यथा कालादौ विधेयत्वं

स्यैव कर्मणः कालदेशविशिष्टप्रयोगविधिमात्रं विधिर्बोधयतीत्यनु-
मन्यते न तु कर्मोत्पत्तिमपि विधत्ते। यत्र तु प्रयोगोऽपि प्राप्तो-
यथा य इष्ट्येत्यादौ, तत्र प्राप्तप्रयोगानुवादेन कालादिमात्रविधिः।
सम्भवति देशकालयोरुपादेयत्वासम्भवेऽपि यागाङ्गत्वेन विनियोग-
विधिः। निमित्तस्थले तु मिथो निमित्तनैमित्तिकयोरङ्गाङ्गित्वा-
सम्भवात् प्राप्तस्यापि कर्मणो निमित्तसम्बन्धानुमितपापक्षयार्थत्वेन
विनियोगविधिरिति वक्ष्यते। फलसंस्कार्ययोश्च तदुद्देशेन प्राप्त-
कर्मविनियोगविधिः स्पष्ट एव। अतो न सन्निधिसत्त्वेऽनुपादेय-
गुणयोगेऽपि कर्मान्तरम् ॥१ २॥४ ९॥

आग्नेयस्तु* ॥ कालद्वययोगेनाग्नेयं विधाय, यदाग्नेयोऽष्टाकपा-
लोऽमावास्यायां भवतीति श्रुतम्। तत्र कालद्वययुक्तादाग्ने-
यात् कर्मान्तरविधानमिदम्। प्रकरणान्तरादभ्यासाद्वा भेदोपपत्तेः।
अनेनैव विहितस्येतरेण पौर्णमासीमात्रविधिस्तु उत्पत्तिशिष्टका-
लावरोधान्निराकर्तव्यः। न चैकस्यैव कर्मणोऽभ्युदयशिरस्कतया
विधिद्वयेन विधानं पिङ्गाक्ष्यैकहायनीशब्दाभ्यामिव द्रव्यविशेषस्येति
वाच्यम्। पिङ्गाक्ष्यैकहायनीशब्दाभ्यामुपस्थितस्याप्येकस्यैकेन विधिना
विधाने बाधकाभावात्। प्रकृते तु एकेन विहितस्य नेतरेण विधि-
सम्भव इति कर्मान्तरमेव। अत एवामावास्यायामाग्नेयद्वयकरणं
पूर्वपक्षप्रयोजनमिति प्राप्ते।

---

* आग्नेयस्तूक्त इति भवितुं युक्तम्। आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रती-
येत इति हि सूत्रम्।

शोध्या* अनुपादेयगुणयोग एव प्रयोजकोऽपि तु उपादेयगुणसम्बन्धाभाव एवेति ध्येयम्। अत सिद्धं कालविशिष्टकर्मान्तरविधानमेवेदम्। एवं सत्यत्र दक्षिणेन गौरेणाग्नेयोऽष्टाकपाल इति देशरूपानुपादेयस्य आग्नेयपदस्य साधारणत्वेन पूर्वकर्मोपस्थापकत्वाभावात्। निमित्तस्य तु यथायागरूपं विश्वजिता यजेतेति। आगूरणं सद्यस्य। तदुत्तरं ममसक्रुर्वतोऽप्य विश्वजित्, विश्वजिता यजेतेत्यस्मात्कर्मान्तरम्। न चानेन विनियुक्तस्य प्रयुक्तस्य वा तेनोत्पत्तिः। विनियोगादिसामानाधिकरण्येनावगताया उत्पत्तेः सन्निधिं विना बाधे प्रमाणाभावात् ॥२१।४०॥

फलश्च ॥ अन्यस्याग्नेयमष्टाकपालं निर्वपेद्रुक्काम इति। अस्यारम्य तु चौदुम्बरी भवतीति मौर्विशेषणात् कर्मान्तरम्। यद्येव यथाऽनुपादेयानि† तथा वाजपेयाधिकरणे कौस्तुभे प्रपञ्चितम् ॥ १०॥४१॥

सन्निधौ ॥ यत्रानामनुपादेयानां सन्निधौ प्रत्युदाहरणानि। दर्शपूर्णमासप्रकरणे पौर्णमास्यां पौर्णमास्या यजेत, सत्ते दर्शपूर्णमासाभ्यां यजेत, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति चतुर्णाम्। निरूढस्य मरणान्तरं स्यात् निरूढेन यजतीति निरूढपशुसमभ्यार्थश्च।

अत्र सर्वत्र सन्निधिना स्वविषयप्रवृत्तिविधित्वसिद्धत्वात् प्राप्त-

---

* शाब्दैवैनम्, — इति ग० पुस्तके पाठः।

† यथाऽनुपादेया, — इति ग० ग० पुस्तकयोः पाठः।

## अथ चतुर्थः पादः ।



यावज्जीविकः ॥ यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्यत्र काम्ये एव स्वर्गाद्यर्थे दर्शपूर्णमासकर्मणि जीवनपर्याप्तकालविधिः । न च पौर्णमास्यादिकालविरोधः । व्याप्यव्यापकभावेन अमावास्यापराह्णादिवदुभयोरप्युपपत्तेः । अतएव विनिगमनाविरहात् कालद्वयविधावपि प्रयोगद्वयविधिः । जीवनपर्याप्तकालविधिसामर्थ्यादेव च पौर्णमास्याद्यपर्याद्दर्शपूर्णमासावृत्तिः । अतश्च तावद्व्याप्यप्रयोगव्यापकव्यापकैकप्रयोगादेव स्वर्गादिफलमिति मतं ।

कालकलक्षणापत्तेर्नायं कालविधिः । अतो धातुसम्बन्धाधिकारविहितणमुल्प्रत्ययेन जीवनस्य कर्मसम्बन्धावगतेः, तदवच्छिन्नकालकत्वादिरूपसम्बन्धाश्रयणे च गुणभूतकालानुरोधेन प्रधानावृत्तेर्न्याय्यत्वलभ्यत्वाभावेन यावच्छब्दार्थस्यापि विधेयत्वापत्तेर्जीवनस्य निमित्तत्वमेव सम्बन्धः प्रतीयते । तदा हि प्रतिनिमित्तं नैमित्तिकावृत्तेर्न्याय्यत्वलभ्यत्वाद्यावच्छब्दार्थोऽनुवादः । निमित्तत्वं च स्वान्वयव्यतिरेकानुविधाय्यवश्यानुष्ठानकत्वम् । यथा राहूपरागान्वयव्यतिरेकानुविधायि अवश्यानुष्ठानं यस्य स्नानस्य तदस्य राहूपरागे ।

अत्र च व्यतिरेकानुविधानस्य सर्वत्र ज्ञापकप्रमाणाभावादेव सिद्धेरन्वयानुविधान एव विधेस्तात्पर्यम् । अतश्च निमित्तसत्त्वे नैमित्तिकस्यावश्यानुष्ठानबोधनादकरणे प्रत्यवायोऽनुमीयते । करणे

एतच्चैन्द्राग्नविधिशेषत्वाच्च स्थानक्रमेण विधायकत्वम् । प्रथमश्चाग्ने-यथास्थितेन चैन्द्राग्नप्रथमता । अतो न कर्मान्तरम् ॥१४॥४७॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां

द्वितीयस्य तृतीयपादः ॥

---

विरुद्धानां नानाशाखागताङ्गानां विकल्पः । स च न तत्तत्पुरुषभेदेन व्यवस्थितः । तत्तदङ्गानां तत्तदध्येत्रर्थत्वे प्रमाणाभावेन प्रकरणात्क्रत्वर्थत्वावगतेः । अविरुद्धाङ्गेषु तु समुच्चयः । शाखान्तरीयाङ्गज्ञानं च कल्पसूत्रादिभिः सुलभम् । यत्तु बह्वल्पं वा स्वगृह्योक्तमित्यादि वचनं, तत्सर्वाङ्गोपसंहारासम्भवेऽनुकल्पविधानार्थमिति कौस्तुभे द्रष्टव्यम् । तदेवं शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरैर्निरूपितः कर्मणां भेदः । अतः परं तेषां विनियोगो निरूपयिष्यते ॥२।४।५॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
द्वितीयाध्यायस्य चतुर्थः पादः ॥

चं धर्मेण पापमपनुदतीत्यादिवाक्यशेषाद्वाचिषवन्यायेन पापक्षय-एवानुषङ्गिको नित्यनैमित्तिकस्थले फलम् ।

यत्र तु रथन्तरगामत्वादिनिमित्तसत्त्वे नैमित्तिकस्य पाठादेव प्राप्तिसम्भवेनान्वयानुविधानस्य प्रमाणान्तरेण प्राप्तिश्च व्यतिरेकानु-विधान एव विधेस्तात्पर्यम् । अतएव रथन्तराभावे ऐन्द्रवायवाग्र-त्वस्याभावः । अतश्च यावज्जीवपदे लाघवादनुरोधेन जीवनस्य निमित्तत्वावगतेस्तदनुरोधेन पापक्षयार्थं विनियोगान्तरमेवेदमिति सिद्धम् ॥१॥४ ४॥

नामरूप ॥ शाखाभेदेनाम्नातेऽग्निहोत्रादौ सत्स्वपि भेदकप्रमा-णेषु न कर्मभेदः । भेदकप्रमाणैर्हि स्ववाक्यस्य कर्मोत्पत्तिपरत्वावगते-रुत्पन्नस्योत्पत्त्ययोगात् कर्मान्तरत्वसिद्धिः । प्रकृते [illegible] वचनप्रमाणैः उत्पत्तिपरत्वावगमेऽपि पुरुषभेदात्तत्तच्छाखाध्यायिपुरुषान् प्रत्येक-स्यैव कर्मणः सर्वत्रोत्पत्तिसम्भवान्न कर्मभेदः । न हि सर्वाः शाखाः सर्व-पुरुषैरध्येयाः । स्वाध्यायविधावध्वर्युं वृणीत इतिवत् स्वीयत्वैकत्वयो-र्विवक्षितत्वेनानेकशाखाऽध्ययनानुपपत्तेः । न चैवं वेदान्तरस्य*शाखा-ध्ययनस्याक्षमापत्तिः । वेदानधीत्येत्यादिवचनान्तरानुरोधेन वेदत्रय-गतैकैकशाखाध्ययनस्यैवावश्यकत्वावगतेः ।

अतएव वेदभेदे पुरुषाभेदादेकत्रैवोत्पत्तिपरत्वे गुणार्थं श्रवण-मित्यत्र नियामकं वक्ष्यते । वेदैकत्वे तु प्रतिशाखं पुरुषभेदात् यद्यपि सर्वेषामुत्पत्तिपरत्वे न कर्मभेदः । अतएवैकस्मिन् कर्मणि

---

* वेदान्तरस्य, — इति क॰ पुस्तके पाठ॰ ।

प्रयाजादेः कारकत्वेन विध्यन्वयाच्च प्रयाजादावपि च । द्रव्यगुण-कालकर्तृदेशादौ च यागाद्युद्देश्ये यागानुकूलत्वतो करणत्वकर्तृ-त्वाधिकरणत्वादिकारकत्वेन विधेयत्वाच्चाङ्गत्वाविघात । षष्ठीस्थले च सम्बन्धसामान्याभिधानेऽपि कारकत्व एव पर्यवसानात्तत्प्राप्तिः । निमित्तस्य च क्रियान्वयिनोऽपि कारकत्वाभावान्नाङ्गत्वापत्तिः । निमित्तस्यानुष्ठापकत्वाख्योद्देश्यत्वेऽपि ईप्सितत्वाख्योद्देश्यत्वाभावाच्च न यागस्य निमित्ताङ्गत्वम् । लक्षणे तादृश्या एवोद्देश्यताया विवक्षि-तत्वात् । उद्देश्यतापदेनैव च कर्मकारकलाभात् कारकपदमनति-रिक्तपरम् । क्रत्वादेरपि यागकृतिकारकत्वादङ्गत्वप्रसक्तौ विधेय-त्वाग्रहणम्* । यथा चास्य न व्याप्त्याद्यतिव्याप्ती, तथा कौस्तुभे विस्तरः ।

एवं च यथेदं न लक्षणं, यथा यागादेर्भावनादि प्रति, तत्र भाक्तोऽङ्गत्वव्यवहारः शास्त्रे । यद्यपि च नेदृशमङ्गत्वं श्रुत्यादिप्रमाणकं, कारकत्वमात्राभिधायित्वात् तृतीयादेः । तथापि यत्पदार्थं स्वर्गा-दिपदात्, तदुद्देश्यकत्वं सप्तम्यादिना, कृतिराख्यातात्, कारकत्वं तृतीयादेः, विध्यन्वयित्वं विधिपदसमभिव्याहारात् । विधिर्हि विशिष्टभावनां विदधदर्थाद्विशेषणान्यपि विधत्त इति सर्वेषामु-द्देश्यत्वेन विधेयत्वेन वा विध्यन्वयः । अत एवाङ्गत्वघटकीभूतपदार्था-न्तराणां प्रमाणान्तरेण प्रसिद्धावपि तद्घटककारकत्वस्य श्रुत्यादि-गम्यत्वात्तेषामङ्गत्वप्रामाण्यव्यवहारः ॥३॥२॥

---

* इत्थमेव पाठः सर्वत्र । विधेयत्वान्तमिति तु भवितुमुचितम् ।

# तृतीयोऽध्यायः ।

## प्रथमः पादः ।



अथातः ॥ तदेवं षट्प्रमाणके कर्मभेदे निरूपिते सम्प्रति शेषिनिरूपित शेषत्वापरपर्यायमङ्गत्वं निरूप्यते । भिन्नानां हि तत् सम्भवति नाभिन्नानामिति तन्निरूपणस्य तत्र हेतुत्वम् । यद्यपि च द्रव्यकर्मणोर्मिथोऽङ्गाङ्गिभावे न पूर्वोक्तनिरूपणस्य हेतुता । तथापि अङ्गत्वसामानाधिकरण्येन हेतुतामादायैव सङ्गत्युपपत्तावनवच्छेदकावच्छेदेन तदभावेऽपि न कश्चिद्विरोधः । अत एव हेतुत्व, अङ्गान्तरस्य तु तत्सङ्गत्यनिरूपणमित्यपि बोध्यम् । अङ्गत्वमेव चाऽध्यायार्थोऽङ्गित्व मपात् । तदपि च श्रुत्यादिषट्प्रमाणकं, अतिदेशप्रमाणकस्येहाविषयत्वात् । तच्चानेकप्रकारकं विचार्यते । अङ्गत्वलक्षणम्, शेषपदशक्यतावच्छेदकम्, अङ्गाङ्गित्वयोरवच्छेदकम्, श्रुत्यादीनि च षट् अङ्गत्वे प्रमाणानि, तयोर्विरोधे बलाबलम्, विरोधस्य बाधित्व फलान्तोत्यादि ॥ ३ ॥ १ ॥

शेष ॥ इत्यत्र प्रकारद्वयं निरूप्यते । यदेव हि अङ्गलक्षणं तदेव शेषपदशक्यतावच्छेदकं मान्यम् । तथाङ्गत्वं नाम पारार्थ्यम् । तच्च यदुद्देशप्रवृत्तकृतिकारकत्वेन विहितं यत्तत्त्वं तदङ्गत्वम् । स्वर्गोद्देशप्रवृत्तपुरुषकृतौ यागानुकूलायां कारकत्वेन विधानाद्यागे सपरत्वमन्वय । प्रधानोद्देशप्रवृत्तपुरुषकृतौ प्रयाजाद्यनुकूलायां

स्वर्गकामादिपदसमभिव्याहारादिति यागस्य स्वर्गाङ्गत्वसिद्धिः। एवं फलस्यापि भोक्तृपुरुषाङ्गत्वम्। भोक्ता चोक्तार्थतो विधिवशात्कामना-वशादात्मनेपदवशाच्च कर्तैव। प्रमाणत्वे त्वन्वय.। यथाङ्गत्वव्यव-हारो भाक्त इति तु ध्येयम्। पुरुषः पुनः कर्तृत्वादिना यागाद्यु-द्देश्यत्वनिकारकत्वाद्यवरकत्वादेव तदङ्ग इत्यविवादमेव ॥३॥१॥

तेषाम्॥ तदेवमङ्गत्वे निरूपितेऽङ्गत्वे श्रुत्यादीनि षट् प्रमाणा-नीत्युक्तम्। तत्र श्रुतिर्नामाङ्गत्वघटकीभूतोद्देश्यता-कृतिकारकत्व-योरन्यतरस्य प्राधान्येन वाचकः शब्दः। स च द्वितीयातृतीयादि-विभक्तिरूप। क्वचिच्चाख्यातादिघात्वर्थं प्राधान्येनेति। तस्य कार-कत्वविशिष्टद्रव्यवाचित्वेन प्राधान्येन कारकत्ववाचित्वाभावात्। अतएव प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति, वारणो यज्ञावचर इत्यादौ वाक्यीय एव विनियोगो न तु श्रौतः।

तत्र द्वितीया उद्देश्यत्वपरा सती प्रोक्षणादेरङ्गत्वे हेतु। यस्तु तत्र ईप्सिततमाख्याया उद्देश्यताया साध्यतामात्रस्यापि द्वितीया-वाच्यत्वाभावात्तत्रापि न मुख्या श्रुति। अपि तु भाक्त एव श्रुति-व्यवहारः। ईप्सितत्वांशे लक्षणाऽङ्गीकारात्। अतश्चोद्देश्यतापदमपि नैव लक्षके देयम्। एवं षष्ठ्यादावपि कारकत्वशक्तत्वाभावात् श्रुतित्व-व्यवहारो भाक्त एव। एवं यत्रापि विभक्त्या लक्षणयैव कारकान्तर-प्रतिपादनं, तत्रापि वाक्यीय एव विनियोगो न श्रौतः। एवं समासपदश्रुत्यादिष्वपि द्रष्टव्यम्।

तदेव श्रुतेर्विनियोजकत्वे तद्भूताधिकरणेनैव सिद्धेऽधुना गौणमुख्यसाधारणश्रुतिविनियोगोपयोग्यङ्गाङ्गिनयोरवच्छेदकविचारः

द्रव्यगुणः ॥ यद्यपि पारार्थ्यमङ्गत्वं तथापि न यागादेर्लक्ष्यता। समानपदश्रुत्या यागादेरेव भावनाभाव्यत्वेन तस्य स्वर्गोद्देशेन विहितत्वाभावात्। विधेः स्वरूपयोग्यत्वेनैव सिद्धार्थतया इष्टसाधनत्वानाक्षेपकत्वात्। आक्षेपकत्वेऽपि भ्रमप्रमासाधारण्येनेष्टसाधनत्वज्ञानस्यैव कारणतयेष्टसाधनत्वसिद्धौ प्रमाणाभावाच्च। स्वर्गकामपदस्य तु स्त्रीकामः प्रायश्चित्तं कुर्यादितिवत् कर्तृपरत्वादिनाऽप्युपपत्तेर्न भाव्यपरत्वावश्यकता। अतो न यागादेर्लक्ष्यत्वम्। वस्तुतस्तु। उपकारकत्वमेव शेषत्वम्। तदर्थेऽप्यपकारके शेषत्वव्यवहाराभावात्। तच्च श्रुतिलिङ्गवाक्यरूपप्रमाणत्रयगम्यमेव। अतएव व्रीह्यादेर्द्रव्यस्यारुण्यादेर्गुणस्यावघातादेः संस्कारस्य चोपकारकत्वदर्शनाच्छेषत्वम्। प्रोक्षणादिसंस्कारस्य तु लिङ्गेनाङ्गत्वासम्भवेऽपि श्रुतिवाक्याभ्यामङ्गत्वप्रतीतिसद्भावेनैव उपकारकल्पनया शेषत्वोपपत्तिरिति तेषामेव लक्ष्यत्वमिति प्राञ्चः।

नोपकारकत्वं शेषत्वं, गोदोहनदध्यानयनादेरपि प्रणयनवाजिनयागाङ्गत्वापत्तेः। अपि तु पारार्थ्यमेव। अपकारकस्यापि तदपकारस्यैवेष्टत्वेनोद्देश्यता न तु तस्येति न तदर्थेऽप्यपकारके शेषत्वव्यवहारः। तदपि श्रुत्यादिषट्प्रमाणगम्यमिति वक्ष्यते। अतश्च वाक्याद्यागोऽपि फलम्। तथाहि। यद्यपि विधेः स्वरूपयोग्यतयैव प्रवृत्त्यनुकूलत्वं लिङाऽवगम्यते, तथापि कदाचित् प्रवृत्त्यभावे विधिवैयर्थ्यापत्तेरवश्यं कदाचित्तया भवितव्यम्। तदा चेष्टसाधनताज्ञानं विना तदसम्भवात्तस्य च बाधकाभावे भ्रमत्वायोगादिष्टसाधनत्वं तावद्यागस्य विधिबलादवगम्यते, इष्टविशेषसाधनत्वं च

प्रसङ्गः । अत्र च पूर्वत्रयस्यैकानुगमकाभावेऽपि एकपदोपादानादवाक्यभेदः । तत्तद्व्यापारकसाधनता एव च विवक्ष्यन्ते न तु साधनतावच्छेदकादीन्यपि । तेन यागत्वपुरोडाशत्वव्रीहित्वाद्यभावेऽपि न क्षतिः । यथा च व्रीहियवयोः कारणताभेदेऽपि यवसाधारण्यं तथा कौस्तुभे विस्तरः । तत्र तत्र नवमादौ चोपपादयिष्यते ॥ २ । ४ ॥

द्रव्यम् ॥ दर्शपूर्णमासयोः, स्फ्यश्च कपालानि चेति दश द्रव्याण्यनुक्रम्यैतानि वै दश यज्ञायुधानीति श्रुतेन वाक्येन दशानामपि द्रव्याणां यज्ञसाधनत्वेन विधानादुत्पत्तिशिष्टपुरोडाशाद्यवरोधेन च साक्षाद्यागसाधनत्वायोगादङ्गत्वावतारात् प्रकृतापूर्वसाधनीभूतद्रव्यसाकानुमकक्रियामात्रावच्छिन्नोद्देशेन द्रव्याणि विधीयन्ते । स्फ्येनोद्धन्तीत्यादिविशेषविनियोगास्तत्प्रयुक्त्यनुवादा इति प्राप्ते ।

तेन तेन प्रत्यक्षविधिना तृतीयाश्रुतिबलवत्तेन स्फ्यादीनां विशिष्य विनियोगाद् यज्ञायुधवाक्यमेवैकमश्रुतविधिकं वै-शब्दोपबृंहितमनुवादकम् । बहूनामनुवादानां वैयर्थ्यात् । अस्य च यज्ञायुधानि सम्भरन्तीत्येतदित्यर्थवादत्वेन सार्थकत्वात् । तस्मादुद्धननाद्यजन्यव्यापारकप्रकृतापूर्वसाधनत्वमेवोद्धननपदेन लक्षयित्वा तदुद्देशेनैव स्फ्यादिविधिः ॥ २ । ५ ॥

अर्थैकत्वे ॥ ज्योतिष्टोमे, अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीति श्रुतम् । तत्रारुणशब्दोऽरुणगुणवचनोऽरुणत्वजातिवचनो वा न तु विशिष्टव्यक्तिवचनः । तृतीयया च शक्त्यैव करणत्वमुच्यते, न तु तदर्थं द्रव्यलक्षणा । टावाद्यर्थोऽपि तत्रैव सामानाधिकरण्येनान्वीयते । न तु तदर्थमपि व्यक्तिलक्षणा । अव्युत्पत्त्यापत्तेः ।

क्रियते । दर्शपूर्णमासयोर्व्रीहीनवहन्ति, आज्यमुत्पुनाति, गां दोग्धीत्यादय आज्यौषधसान्नाय्यसम्बन्धिनः संस्काराः श्रुताः । तेषु किं सर्वसाधारणमवघातविधावुद्देश्यतावच्छेदकं उताव्रीह्यादिव्यावृत्तं, एवमन्यत्रापीति विचारः । तत्र न तावदुक्तं व्रीहित्वादिकमेवोद्देश्यतावच्छेदकम् । आनर्थक्यापत्तेः । अवघातप्रोक्षणादिव्यतिरेकेणापि व्रीहित्वावच्छिन्नादेर्जायमानत्वात् । यवेष्वनापत्तेश्च । अतो नवमाधिकरणन्यायेन व्रीहित्वाविवक्षयाऽपूर्वसाधनत्वस्य लक्षणया आवश्यकत्वात्तत्र फलसंयुक्तत्वादेकत्वाद्द्वारादुपकारकेषु क्रमप्रयोजकत्वाभिमतत्वाच्च परमापूर्वस्य तत्साधनत्वमेव प्रदेयघटकत्वसम्बन्धेन लक्ष्यते । अस्ति चाग्नेयादेस्तत् प्रत्यपि साधनता । अतएव न वाङ्नियमन्यायोऽपि । अतस्तोद्देश्यतावच्छेदकस्य सर्वसाधारणत्वादाज्यादिष्वप्यवघातादेः सङ्करः । न च प्रतिनियतनिर्देशाद्व्यवस्था । तथात्वे व्रीह्यादिविवक्षाया आवश्यकत्वे नीवारादिष्वनापत्तेरिति प्राप्ते ।

यद्यपि विधिरविशेषप्रवृत्तः स्यात्, तथापि दृष्टार्थत्वनियमविधित्वलाघवानुरोधेन विशेषे व्यवस्थाप्येत, किन्तु यदा सोऽपि विशेषप्रवृत्त एव । व्रीह्यादिपदे प्रत्यासत्त्या आग्नेयाद्युत्पत्त्यपूर्वसाधनत्वस्यैव लक्ष्यत्वात् । तस्याप्यनिर्ज्ञातप्रकारत्वेन धर्मप्रयोजकत्वोपपत्तेरानर्थक्याभावेन तदतिक्रमकारणाभावात् । परम्परया फलवत्त्वाच्च । अतो व्रीहिपदेन व्रीहिसाध्यानि यानि आग्नेयाग्नीषोमीयैन्द्राग्न्युत्पत्त्यपूर्वाणि तन्निष्ठकार्यतानिरूपितयागादिनिष्ठकारणतासमानाधिकरणकार्यतानिरूपितप्रदेयप्रकृतिभूततण्डुलरूपव्यापारकसाधनतासामान्याश्रयत्वस्यैव चोद्देश्यतावच्छेदकत्वेन विवक्षितत्वादाज्यादिषु

क्रयारुण्यादिमत्कस्वकारकविशिष्टभावनाविधानोत्तरं क्रयस्य सोम-सम्बन्धवेलायामारुण्यादिविशिष्टस्य मत्वर्थलक्षणया क्रयसम्बन्धावगतौ पश्चाद्विशेषणविधित्वकल्पनया तेषां क्रयाङ्गत्वावगमे जाते पश्चा-त्परिच्छेदकीभूतद्रव्याद्यपेक्षायां पार्ष्ठिकोऽरुणैकहायन्योः परस्परं विशेषणविशेष्यभावमात्रेण सम्बन्धो द्रव्यविशेषसम्बन्धश्चेति द्रष्टव्यम् । ततश्च युक्तं क्रयसाधनीभूतैकहायन्यामेव निवेश आरुण्यस्य, न तु वासःप्रभृतिषु क्रयद्रव्यान्तरेषु ।

न च यवेष्विव सोमप्राप्तिसाधनक्रयद्रव्यत्वाविशेषात् प्राप्त्या-शङ्का । तेषां क्रयान्तरद्रव्यत्वात् । भिन्ना हि गुणादन्यक्रियाः । न च विक्रेतृगतिसाद्गुण्यपत्तिभिः सद्रव्यावरोधेऽपि द्रव्यान्तरनिवेश-सम्भवः । एकद्रव्यानतस्यैव विक्रेतुः सम्पादनीयत्वात् । अन्यथा दक्षिणानामपि प्रसङ्गबाधानापत्तेः । न च दशभिः क्रीणातीति वचनमेव निवेशतात्पर्यग्राहकम् । तस्य क्रयसमुच्चयपरत्वेनाप्युपपत्तौ गुणन्यायसिद्धभेदापवादकत्वायोगात् । न च क्रमभेदेऽपि एकसो-मप्राप्त्यर्थत्वाविशेषात् क्रयान्तरद्रव्येऽपि आरुण्यस्य निवेशाशङ्का । आ-रुण्यविशिष्टविजातीयक्रयविध्यन्यथानुपपत्तिकल्पितस्य विशेषणविधेः पार्ष्ठिकान्वयस्य वाऽनतिप्रसक्तस्यैव कल्पनीयतया विजातीयक्रयजन्या-नतिविशेषस्य विजातीयक्रयत्वस्यैव वा विवक्षितत्वेनातिप्रसङ्गाप्रसङ्गानु-पपत्तेः । यथा चैवं सति चित्वत्वे सर्वक्रयद्रव्यस्यानापत्त्ये निवेशस्तथा-कौस्तुभे द्रष्टव्यम् ॥२॥६॥

एकत्वयुक्त ॥ ज्योतिष्टोमादिषु ग्रहं संमार्ष्टीत्यादि श्रुतम् । तत्र ग्रहाग्रादि प्रति ग्रहत्ववदेकत्वस्यापि उद्देश्यतावच्छेदकता, उत तस्यैव

यथा चैवं सति, गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्तीत्याद्यनुशासनोपपत्तिस्तथा कौस्तुभे द्रष्टव्यम् ।

एकहायन्यादिपदानां तु बहुव्रीहित्वादवयवार्थविशिष्टान्यपदार्थरूपे द्रव्य एव शक्तिरिति प्राहुः । अन्यपदार्थं पदद्वयस्य लक्षणेति बहवः । न च द्रव्यस्यैकेनैव पदेन विधिसम्भवे इतरेण विध्यनुपपत्तिर्वैयर्थ्यं चेति वाच्यम् । उभयोर्युगपत्प्रवृत्तेर्विशिष्टविधानाभावात् गुणान्तरपरत्वेन सार्थक्याच्च । प्रकृते तथापि आरुण्यन्यायेन लक्षणाऽपि नेति वक्तुम् । समासानुशासनस्य मतुबाद्यनुशासनवदुपपत्तेः । द्रव्ये पार्ष्ठिकगुणसम्बन्धोपपादनस्य प्रमाणान्तरप्रमितद्रव्यमादायोपपादनीयमिति न कश्चित् विरोधः । तद्धितार्थस्य योग्यत्वेऽपि कारकत्वेनानुपपन्नस्य वाक्यीयद्रव्याद्यन्वयस्यायोगादनुपपन्नत्वेऽपि* चामूर्त्तत्वेनायोग्यस्य वाक्यीयक्रियान्वयायोगात्ततो विच्छिन्नस्य प्रकरणकल्पितश्रुतानुमितैकदेशाभिप्रायत्वेन वाक्येनारुणया प्रकृतापूर्वसाधनीभूतद्रव्यपरिच्छेदं भावयेदित्याकारेण प्राकरणिकसर्वद्रव्याङ्गत्वमिति प्राञ्चः ।

न योग्यताज्ञानं शाब्दबोधहेतुरपि तु अयोग्यतानिश्चयस्य प्रतिबन्धकतामात्रम् । अतश्च प्रतिबन्धकताभावसत्त्वे आरुण्यस्यापि क्रियान्वयबोधोपपत्तेः । पश्चाच्च योग्यतागवेषणायामारुण्यस्य पार्ष्ठिकद्रव्यसम्बन्धबोधोपपत्तेर्न ततो विच्छेदशङ्का । अतएव प्रथमत. सोम-

* इत्थमेव पाठः सर्वत्र । द्रव्याद्यन्वयस्यायोगादनुपपन्नत्वेऽपि, — इति तु प्रतिभाति ।

र्यता । पशुत्वेन विनियुक्तस्यापि लोहितादेः संस्कार्यत्ववद् बहुत्वावच्छेदेन विनियुक्तस्यापि ग्रहस्यैकत्वावच्छेदेन संस्कार्यत्वोपपत्तेः । न चैवमपि द्वयोरुद्देश्ययोरेकप्रधानक्रियावशीकाराभावात्कथं परस्परान्वयनियम इति वाच्यम् । वैष्णवाङ्गबहुत्वानुरोधेनापि पदश्रुत्यैव वा प्रधानयोरप्याकाङ्क्षां प्रकल्प्य तदुपपत्तेः । दृश्यते च यत्र भिन्नवाक्यस्थले आग्नेयं चतुर्धा करोति, पुरोडाशं चतुर्धा करोतीत्यादौ गुणानुरोधेन प्रधानयोरभेदान्वयस्तत्रैकवाक्यस्थले सुतरां शाब्दबोधे मुख्यविधेयभूतक्रियया वशीकारः । एकत्वाविवक्षापेक्षया च वशीकारकल्पनायां न कोऽपि दोषः । अत एकत्वादेरपि स्वातंत्र्येणोद्देश्यतावच्छेदकत्वोपपत्तिरिति चेत् ।

भावनायाः करोतिपर्यायत्वेनैककर्मत्वावगमादुद्देश्यानेकत्वे सङ्गच्छनिबन्धनवाक्यभेदापत्तेः । एककर्मकत्वञ्चैकबोधविषयकर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्मवत्त्वम् । अत सर्वेभ्यो दर्शपूर्णमासावित्यादौ सत्यपि सुवमपशुत्वादीनां कर्मत्वपर्याप्त्यधिकरणतावच्छेदकानां धर्माणां भेदे एकेनैव सर्वपदेन युगपद्बोधादेककर्मकत्वहानिरित्याद्यं विधेयेत्यलम् । पर्याप्तिपदकृत्यं तु कौस्तुभे द्रष्टव्यम् । अतश्च फलद्वये संस्कार्यद्वये फलसंस्कार्यद्वये वा तावद्वाक्यभेदापत्तिः स्पष्टा । निमित्तद्वयस्थलेऽपि यावज्जीवाधिकरणन्यायेन निमित्तद्वयस्य फलद्वयाक्षेपकत्वाद्वाक्यभेदापत्तिर्द्रष्टव्या । यथा चयननिमित्तद्वयेनैकस्यैव फलस्य आक्षेपस्तथा कौस्तुभे स्पष्टम् । अतएव निमित्तफलस्थले निमित्तसंस्कार्यस्थले वा एककर्मकत्वभङ्गाभावाद् वाक्यभेदः । न वा काम्यदेशादुद्देश्यानेकत्वे सः । यथा च फलादि-

षां, एकत्वं तु कथमपि विध्यन्वयासम्भवादविवक्षितमिति चिन्ता-यत् । पशोरेकत्ववद्ग्रहैकत्वस्यापि अविवक्षाकारणाभावादुद्देश्यता-वच्छेदकता । अतस्तैकस्यैव ग्रहस्य सम्मार्ग इति प्राप्ते ।

यत्र हि समासादौ परस्परान्वयो व्युत्पन्नो यथाऽस्याभिधानीं यत्किञ्चित्सोमखिन्नमित्यादौ, तत्र भवत्येव विशिष्टोद्देशः । यत्र तु स न व्युत्पन्नस्तत्र परस्परान्वयेन विशिष्टोद्देशो अव्युत्पन्नान्वयविनिबन्धन-वाक्यभेदापत्तेर्न विशिष्टोद्देशः । यथा यस्योभय हविरार्त्तिमार्च्छेद्-ग्रहमिति च, इयो सुबन्तयोर्भावनान्वयस्यैव व्युत्पन्नत्वेन परस्परा-न्वयस्याव्युत्पन्नत्वात् । अन्यथा पञ्चदशान्याज्यानीत्यत्रापि विशिष्ट-विधानापत्तिः । एकवचनाद्युपात्तसङ्ख्यादेस्तु समानाभिधानश्रुत्या करणत्वकर्मत्वादिरूपे प्रत्ययार्थ एवान्वितस्य पदश्रुत्या प्रातिपदि-कार्थान्वयो नैव व्युत्पन्नः । एव सर्वेभ्यो दर्शपूर्णमासावित्यादौ एक-पदोपादानेऽनेकार्थप्रतीत्युत्तरं लक्षणया प्रातिपदिकादेव साहित्यप्रती-तिस्तत्रापि साहित्यस्य प्रत्ययार्थ एवान्वयो न प्रातिपदिकार्थ इति कौस्तुभे स्पष्टम् । अतश्च नैतादृशस्थले विशिष्टोद्देशसम्भवः ।

अथ विशिष्टोद्देशासम्भवेऽपि उभयोरपि प्रातिपदिकवचनार्थयोः प्रत्ययार्थे कर्मत्वादावन्वयेन तद्द्वारा भावनान्वयोपपत्तेः सम्मार्गस्य पार्ष्णिकोद्देश्यद्वयसम्बन्धे बाधकाभावः । न चोद्देश्यानेकत्वे वाक्यभेदः, भावनायामनेककारकसम्बन्धवदनेकोद्देश्यसम्बन्धे बाधकाभावात् । तस्यामेकोद्देश्यतावच्छेदकनियम । सर्वेभ्यो दर्शपूर्णमासावित्यादौ पुत्रत्वपशुत्वादेरनेकस्यापि तत्र दर्शनात् । विधेस्त्वनेकोद्देश्यकत्वे नैव काचित् क्षतिः । न चैकत्वावच्छिन्नस्य विनियोगाभावादस्का-

वाक्यभेदाद्यभावात्तथापि ज्योतिष्टोमैक्ये तत्तद्ग्रहापूर्वाणां भेदात् प्रथमा मैत्रावरुणं श्रीणातीति वाक्यग्रहजन्यापूर्वसाधनत्वस्यैव लक्षणोपपत्तेर्न चमसेषु सञ्चारः ॥३॥७॥

आनर्थक्यात् ॥ सप्तदशारत्निर्वाजपेयस्य यूप इत्यत्राव्यवहितत्वात् प्रधानत्वात् प्रकरणानुग्रहाच्च सप्तदशारत्नित्वं वाजपेयोद्देशेन षष्ठीश्रुत्या विधीयते । न यूपोद्देशेन, अनियमप्रसङ्गापत्तेः । वाजपेयेन विशेषणे विशिष्टोद्देशाच्च । अतः सप्तदशारत्नित्वं वाजपेयोद्देशेन विधीयमानं तदीयोर्ध्वपात्रद्वारेण निविशते । यूपपदं चात्र गौणं इति प्राप्ते ।

यूपपदस्य गौणत्वे प्रमाणाभावाद्यूपपदेन स्वकार्यं लक्षयित्वा तदुद्देशेन सप्तदशारत्निद्रव्यं विधीयते । यद्यपि च द्रव्यं अरत्नि-परिमाणस्यातिदेशतः सम्बद्धमप्राप्तिकं, तथापि तदनुवादेन सङ्ख्या-विधाने एकप्रसरताभङ्गापत्तेस्ततः पूर्वप्रवृत्त्यङ्गीकारेण विशिष्टं द्रव्य-मेव सङ्ख्याविधिफलकं लोहितोष्णीषा* इत्यादिवद्विधीयते । यूप-कार्यं स्वरूपे चानर्थक्यात् प्रकरणात् वाजपेयापूर्वसाधनत्वलक्षणया वाजपेयापूर्वसम्बन्धियूपलाभात् वाजपेयस्येत्यनुवादः । षष्ठी च पर-म्परासम्बन्धेऽप्युपपन्ना नप्तरि देवदत्तस्यायमिति वत् । अव्यवहितत्वादि च गौणत्वापेक्षया न दोषः ॥१॥८॥

कर्तृगुणे ॥ दर्शपूर्णमासयोः प्रयाजसमीपे श्रुतमभिक्रामं जुहोतीति । तत्राभिक्रमणस्यामूर्त्तत्वाज्जुहोत्युपात्ते प्रयाजहोमेऽन्वयानुपपत्तेराख्यातस्यैव कर्तृरूपस्य द्रव्यस्यानुपात्तत्वात्तद्द्वाराऽप्यन्वयानुपप-

---

* इत्यमेव पाठः सर्वत्र । लोहितोष्णीषा इति पाठान्तरे पाठः ।

साहित्यस्य नैकबोधविषयता तथा कौस्तुभे स्पष्टम् । अतश्च तत्साहित्यविवक्षायां वाक्यभेदो दुष्परिहर एवेत्याद्यन्यत्र विस्तरः ।

ननु तथापि नैकत्वादीनामविवक्षा संमार्गभावनायां गुणत्वेन विवक्षोपपत्तेः । न चैवमेकत्वांशे द्वितीयया करणलक्षणाद्ग्रहांशे च प्राधान्याभिधानाद्वैरूप्यापत्तिः युगपद्वृत्तिद्वयविरोधापत्तिश्चेति वाच्यम् । ईप्सितानीप्सितसाधारणकर्मत्वमात्रे द्वितीयायाः शक्तत्वेन प्रमाणान्तरादीप्सितावगमेऽपि ऐकरूप्येणोभयोरन्वयोपपत्तेः । न चैवमपि संमार्गाङ्गभूतस्यैकत्वस्य तदनङ्गभूतग्रहद्वारकत्वासम्भवः । अङ्गत्वाद्यभावेऽपि सम्बन्धितामात्रेणागमेति मन्त्रे स्वर्गस्येव ग्रहस्यापि द्वारत्वोपपत्तेः । अतश्च विवक्षितमेकत्वमिति चेत् ।

गुणभूतैकवचनाद्यनुरोधेन प्रत्यये करणलक्षणाङ्गीकारस्य युगपद्वृत्तिद्वयविरोधवैरूप्यादेरप्याध्यत्वात् । तद्वरमनुवादत्वे तस्मिन्नेव पाशाधिकरणन्यायेन लक्षणामात्रम् । न चेप्सितानीप्सितसाधारणकर्मत्वमात्राभिधानान्नोक्तदोषप्रसङ्गः । तथात्वे निरुक्तैककर्मत्वभङ्गप्रसङ्गेन वाक्यभेदापत्तेः । अतश्च गुणत्वसिद्ध्यर्थं लक्षणाश्रयणे पूर्वोक्तदोषापत्तेरेकवचनं बहुत्वलक्षणार्थं साधुत्वार्थमनुवादोऽविवक्षितम् । यथा चैवं सत्यष्टवर्षं ब्राह्मणमुपनयीतेत्यादौ अष्टवर्षत्वादेर्विवक्षा, तथा कौस्तुभ एवोपपादितम् ॥३।१७॥

संस्काराद्वा ॥ एकत्ववद्ग्रहत्वस्यापि अविवक्षा, लिङ्गादेव संमार्गस्य सोमावसेकनिर्हरणप्रयोजनत्वावगमेन सोमपात्रमात्रस्य संस्कार्यत्वावगतेः । उभयोरपि ग्रहचमसयोरेकरूपसोमाधारत्वेन ग्रहेष्विव चमसेष्वपि संमार्गापत्तेश्चेति प्राप्ते । ग्रहत्वविवक्षायां

वधनफलप्रकाशकतयैव अपि तनुवचनजनकतया लाघवात्। अतश्च न दारलोपाद्बाध ऊहो वा। अनुशब्देन दर्शपूर्णमासाङ्गभूतपदार्थानन्तर्यस्य उक्तत्वात्तस्य च परप्रयुक्तत्वेन बहिः क्रतु प्रयोगेऽनुष्ठातुमशक्ते क्रतुमध्यप्रयोगसिद्धिः। वैकृतानुवचनेनैव च प्रसङ्गात् प्राकृतानुवचनकार्यसिद्धेर्न तस्य पृथगनुष्ठानम्। अतस्तेष्वपि न सामिधेनीप्रकरणानुवृत्तिः। न च तर्हि तदङ्गत्वमेवोपवीतस्य किं न स्यात्। तेषां विकृतित्वेन प्राकृताङ्गैर्निराकाङ्क्षाणां प्रकरणाभावात्। वाचनिकाङ्गमन्त्रणाभावाच्च। अतो महाप्रकरणाद्दर्शपूर्णमासाङ्ग उपवीत तत्कर्तृसंस्कारकतया तत्कर्तृभिः सर्वप्रयोगारम्भे कार्यमिति सिद्धम्।३।२।१॥

गुणानाम्॥ आधाने पवमानेष्टिषु प्रदेशान्तरे वारणीयज्ञावचरो वैकङ्कतीयज्ञावचर इति श्रुतम्। तत्र यज्ञसाधनत्वेन श्रुतानां वारणादीनां साक्षाद्यज्ञरूपाधाने निवेशासम्भवादानर्थक्यतदङ्गन्यायेन पवमानेष्टिरूपे यज्ञ एव निवेश इति प्राप्ते, भाष्यकारेण तावदेव सिद्धान्तितम्।

आधानप्रकरणे पठितेन यदाहवनीये जुहोतीति वाक्येन पवमानहविषामप्यङ्गत्वावगतेराधानाङ्गत्वाभावेनानर्थक्यतदङ्गन्यायासम्भवात् स्वरूपेण च पवमानेष्टीनामयज्ञिकत्वाद्वारणवैकङ्कतादीनां सर्वप्रकृतियज्ञाङ्गत्व सर्वयज्ञाङ्गत्व वेति।

वार्त्तिककारस्तु न तावदनारभ्याधीतेन पवमानहविषामप्यङ्गत्वेन सर्वहोमानुवादेनाहवनीयविधानात्। पवमानेष्टीनामेव विधिस्थोपस्थित्यभावे सप्तम्या प्राधान्यलक्षणाया प्रमाणाभावात्। नापि

नेष्यतोविच्छिन्नस्य प्राकरणिकसर्वहोमाङ्गत्वं तदीयकर्त्तुराहवनीय-प्रत्यासत्तिरूपदृष्टकार्यद्वारेति प्राप्ते।

अनुपात्तस्यापि आख्यातगम्यस्य सद्भावात्तद्द्वारैव जुहोत्यन्वयोपपत्तेः प्रयाजहोमाङ्गत्वमेवेति भाष्यकारेण सिद्धान्तितम्। तत् पशुधर्मस्य पूर्वकालतादिसम्बन्धेन जुहोत्यनन्वयेनैवाकाङ्क्षाभावात् जुहोतेश्च प्रयाजहोममात्रवाचित्वे प्रमाणाभावादरुणाधिकरणेन गतप्रायत्वाच्च वार्त्तिककारेणान्यथा व्याख्यातम्।

सत्यपि वाक्यीयहोमसम्बन्धे सङ्कोचे प्रमाणाभावादेषा दर्वीपीतिवत्प्राकरणिकसर्वहोमाङ्गत्वम्। वाचनिकाङ्गसन्दंशरूपावान्तराधिकारस्य वाक्यसङ्कोचकत्वानुपपत्तेः। यदि हि तादृशसन्दंशमध्ये अभिक्रामन्तीत्येव सूयेत, ततोऽवान्तरप्रकरणेन स्यादपि प्रयाजाङ्गत्वम्। वस्तुतस्तु नाङ्गेष्वितिकर्त्तव्यताऽऽकाङ्क्षालक्षणं प्रकरणं, फलाभावात्। अन्यथा प्रयाजाभिक्रमणादीनामप्युपाकाद्यङ्गतापत्तेः। वाचनिकाङ्गसम्बन्धसिद्ध्यर्थस्य कल्पिताया आकाङ्क्षायास्तन्मात्रपर्यवसायकत्वेनाभिक्रमणग्राहकत्वानुपपत्तेरिति प्राप्ते।

भावनास्वाभाव्येनाङ्गभवनास्वपि कद्रूपकारभाव्यकाङ्क्षितिकर्त्तव्यताकाङ्क्षोपपत्तेरङ्गानामप्यस्त्येव सा। सा परं प्रधानगतफलवत्त्वेन प्रतिबध्यते सन्निध्याम्नातविषये। अतो न परस्पराङ्गत्वप्रसङ्गः। तदा तन्निवृत्तिरतिदेशेनाक्षेपलब्धस्यसम्पादनेन साधारणैर्वा आचमनादिभि। यत्र तु वाचनिकाङ्गसन्दंशपतितत्वेनाङ्गाकाङ्क्षोज्जीवन अन्तिमेन च तन्नाश। न तु प्रयाजादाविव वाचनिकाङ्गानां प्रत्येकमुत्तेजकता। तावदभावकूटप्रवेशे गौरवात्। तद्वदिह व्यभिचाराभावाच्च। अतो-

वाद्यायामिति वाक्याभ्यां प्रधानाङ्गत्वम् । दृश्यते च लिङ्गस्यापि मन्त्रगतस्य वाक्येनापि ब्राह्मणगतेन बाधो यद्यप्यन्यदेवत्य इत्यादिनेति प्राप्ते ।

अपाधेनोपपत्तौ बाधायोगात् प्रधानाङ्गत्वम् । न हि सोमदेवत्यस्य मन्त्रस्य लिङ्गविरोधः सम्भवति, सोमस्य देवतात्वाभावात् । अत एवाग्नेरसमिद्ध्यामन्त्रस्याप्यसम्भवाच्च । वस्तुतस्तु वाक्यस्यास्य व्यवस्थापकत्वे लाघवाच्च प्रधानाङ्गताबोधकत्वम् । व्यवस्था च, पौर्णमास्या यौ आज्यभागौ तत्र वार्त्रघ्नीत्यादिरूपेण कालकृता, पौर्णमासीसंज्ञकप्रधानाङ्गभूताज्यभागयोर्वार्त्रघ्नीत्येव कर्मकृता चेत्यादि विशेषः कौस्तुभे द्रष्टव्यः ॥ ५ ॥ १३ ॥

आनन्तर्यम् । दर्शपूर्णमासयोर्हस्तावनेनिक्ते, उलपराजीं स्तृणातीति, तथा ज्योतिष्टोमे मुष्टीकरोति वाचं यच्छति दीक्षितमावेदयतीति श्रुतम् । तत्र हस्तावनेजनं यज्ञसंस्कारार्थं मुष्टीकरणवाग्यमौ च तत्प्रणिधानार्थौ । उभयमपि तावत्क्रियमाणकर्मार्थमित्यसन्दिग्धम् । तत्र क्रियमाणकर्मानन्तर्यादेकवाक्यत्वाद्वा उलपराजिस्तरणदीक्षितावेदनरूपमेवेति प्राप्ते ।

आनन्तर्यस्यावर्जनीयत्वादङ्गतापादकत्वानुपपत्तेरेकत्वेऽपि वा प्रकरणेन बाधात् यथा स्तृणाति धावतीतिवदाकाङ्क्षाविरहेण वाक्यद्वयस्य यच्छब्दाद्युपबन्धाभावे एकवाक्यत्वानुपपत्तेः कर्तृसंस्कारस्याप्रकरणादङ्गप्रधानसाधारण्यात्सोमपदार्थाङ्गत्वं हस्तावनेजने । मुष्टीकरणवाग्यमयोस्तु अङ्गुलीवाग्विसर्गसाकाङ्क्षसोमपदार्थमात्राङ्गत्वम् ॥ ५ ॥ १४ ॥

पवमानेष्टिप्रकरणे वाक्यान्तरकल्पना । तदभावेऽपि वारणादीनां सर्वयज्ञार्थत्वोपपत्तेः । अस्तु वा आधानप्रकरणे तत्तथापि तेनाधानाङ्गभूतहोमानामाहवनीयाधिकरणत्वसिद्धिरेव न त्वग्न्यङ्गत्वसिद्धिः । सप्तम्या लाक्षणिकत्वापत्तेः । अत एव तत्त्वमाहवनीयपद आधानजन्योत्पत्त्यपूर्वविशिष्टाग्निवाचकमेव । परमापूर्वविशिष्टाग्निरूपमुख्याहवनीयस्य तदानीमसत्त्वात् । न चैव पवमानेष्टिष्वपि श्रपणादौ गार्हपत्यादिप्रापकाभावः । तत्र मुख्यगार्हपत्याद्यधिकरणत्वबाधेऽपि सति सम्भवे प्रकृतिदृष्टगौणगार्हपत्यादिबाधे प्रमाणाभावात् । अतश्च सत्यपि वचनान्तरे पवमानेष्टीनामग्न्यङ्गत्वे प्रमाणाभावादाधानाङ्गत्वेऽपि वारणादीनां सर्वयज्ञार्थतैवमुपपादनीया सर्वत्र स्वोद्देश्यस्यापूर्वव्यभिचारेऽपूर्वसाधनत्वलक्षणार्थं प्रकरणानुप्रवेशो यथा नीवीत्यादौ । अत एव तादृशस्थले आनर्थक्यतदङ्गन्यायः । प्रकृते तु यज्ञपदेनैवाव्यभिचारितापूर्वसाधनत्वोपस्थितौ तदर्थं प्रकरणानुप्रवेशाभावात् प्रधानसम्बन्धस्यैवाप्रसक्तौ क्व तदङ्गावतारः । एवं सत्यपि यदि पवमानेष्टिसन्निधौ पात्राणि श्रूयेरन्, तदाऽनुवादस्य सति सम्भवे सन्निहिताग्निलाङ्गीहविर्भिर्यजेतेत्यादिवदेव प्रकृतमात्रविषयत्वम् । न त्वेतदपि, पवमानेष्टीनां प्रदेशान्तरस्थत्वात् । अतो वारणादीनां सर्वयज्ञार्थत्वमेव । प्रयोजनं, पवमानेष्ट्यनन्तरं पात्राणां नाशे दर्शाद्यर्थं अनियतानामुत्पत्तिः । सिद्धान्ते वारणादीनामेवेति ॥३॥२२॥

मिथश्च ॥ आज्यभागक्रमे श्रुतानां वार्त्रघ्नीवृधन्वतीमन्त्राणां लिङ्गक्रमौ बाधित्वा वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमा-

पयोरुद्देश्यतावच्छेदकत्वसिद्धिः। तेन च पुरोडाशं चतुर्धा करोतीति सामान्यवचनस्योपसंहारः। तस्मादाग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणम् ॥३॥१५॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां तृतीया-
ध्यायस्य प्रथमः पादः ॥१॥

शेषम् ॥ दर्शपूर्णमासयोराग्नेयं चतुर्धा करोतीत्यत्र नाग्निदेवताकहविष्ट्वमुद्देश्यतावच्छेदकं, विशिष्टोद्देशे वाक्यभेदापत्तेः । अपि तु तद्धितोपात्तहविष्ट्वमेव । कथञ्चिद्वा अग्निसम्बन्धिहविरिदं तथा । अस्ति चाग्निसम्बन्धोऽग्नीषोमीयादावपि । अपि वा पुरोडाशं चतुर्धाकरोतीत्यनेनोपसंहारादग्निसम्बन्धिपुरोडाशस्यैव तत्, न सान्नाय्यादीति । अस्तु वा देवतात्वस्यापि कथञ्चिद्विवक्षा, तथापि द्विदेवत्येऽप्यग्नेरस्त्येव देवतात्वम् । द्वन्द्वान्ते श्रूयमाणस्य तद्धितस्य प्रत्येकमभिसम्बन्धात् । अतः सर्वेषां चतुर्धाकरणमिति प्राप्ते ।

मत्वर्थप्रयोगात्तद्धितस्य देवतात्व एव शक्तस्य सम्बन्धमात्रबोधकत्वानुपपत्तेर्न तावदग्निसम्बन्धित्वस्य विवक्षा । न च देवतात्वं द्विदेवत्ये प्रत्येकमस्ति । इतरेतरयोगरूप-चार्थविहितद्वन्द्वेन साहित्यस्य विवक्षितत्वात् मिलितयोरेव व्यासज्यवृत्त्येकत्वोपाधिरूपदेवतात्वस्वीकारात् । अत एव द्वन्द्वान्त इत्यादिन्यायस्तु यत्रोद्देश्यत्वेन प्रत्येकान्वयाविवक्षा तत्रैवेति ध्येयम् । अतः केवलाग्निपदादुत्पन्नस्तद्धितो नान्यसापेक्षस्य देवतात्वमभिवदितुं क्षमः । सामर्थ्यविघातापत्तेः ।

यत्तु अग्निदेवताकत्वमविवक्षितमिति । तन्न । तथात्वे ॥ तावत् प्रकृतद्रव्यत्वमात्रं अपूर्वसाधनतावच्छेदकम् । तस्य देवतातद्धितेनानुक्तेः । नापि हविष्ट्वम् । तत्परत्वस्य देवतावाचित्वमस्तीति विनाऽनुपपत्तेः । न हि हविषि साध्ये देवतातद्धितस्यैवेति लक्षणा सिध्यते । तदाश्रितेऽपि सम्बन्धमात्रान्ततद्धितस्य सत्त्वात् । अतः प्रथमावगतस्य देवतात्वस्यैवोद्देश्यतावच्छेदकत्वम् । तस्य चानुयोगिप्रतियोगिसापेक्षत्वात्, हविरादिभिन्नायेनापेक्षमाणत्वादग्निदेवताकहविष्ट्वस्यैव तद-

प्रकरणे, तत्र सामान्यसम्बन्धबोधकप्रमाणसत्त्वे उत्कर्षः। यथा दर्श-पूर्णमासप्रकरणाम्नातसूक्तानुमन्त्रणमन्त्रादेः। याज्यानुमन्त्रणमन्त्राख्या-यामेव सामान्यसम्बन्धबोधकत्वात् उत्कर्षस्याप्यसम्भवे प्रकरण एव अधन्यार्थे विनियोगः। यथा नमोताद्यौ। अस्युक्तवचनादिना तस्या-प्यसम्भवे तदर्थाभिधानसैवाद्दृष्टार्थत्वम्। यथा जपादौ ॥२॥१६॥

वचनात् ॥ यत्र तु गौणार्थे तात्पर्यग्राहकं वचनं विद्यते। यथा अग्नौ, कदाचनस्तरीरसीत्यैन्द्या गार्हपत्यमुपतिष्ठत इत्यादौ। तत्र गौण एव गार्हपत्ये विनियोगः। अर्थेन्द्येत्युपकल्पचतद्धितश्रुत्या मुख्यसामर्थ्याक्षीवनाव्यघन्यदितीयाया एव तदनुरोधेन प्रतियोगिनि लक्षणा। गार्हपत्यसमीपे स्थितिरिति। गुणभूतप्रातिपदिक एव वा पदद्वाधनलक्षणाद्द्वाषाट्टौया स्वइपतिस्थयोगेन वेन्द्रप्रकाशत्वम्। अस्तु वा रूढत्वाद्दाग्नेरेव धातुवाच्यसमीपस्थितिं प्रति कर्मत्वम्। न तु मन्त्रसाध्याभिधानं प्रति तस्य सम्बद्धत्वात्।

न चोपामन्त्रकरण इति स्मृत्या आत्मनेपदविधानेन धातो-र्मन्त्रकरणत्वावगतेर्मन्त्राभिधानसाधकत्वावगतिः। आत्मनेपदबलेन समीपस्थितेरभिधानप्रयोजनकत्वावगतेर्मन्त्रस्य स्वसाध्याभिधानाद्वारत्-सम्बन्धेन समीपस्थितिविशेषणत्वोपपत्तेरभिधानलक्षणाया प्रमाणा-भावात्। अतश्च प्रकार्थ एव समीपस्थितौ गार्हपत्यस्य कर्मत्वम्। इन्द्रस्य त्वार्थिकेऽभिधाने इति न विरोधः। यथा चास्य धातो सकर्मकत्वं तथा कौस्तुभ एव प्रपञ्चितम्।

कथं मन्त्रस्य गौणेऽर्थे विनियोग इति चेत्। ऐन्द्येति तद्धि-तैकपदे विशेष्यतया प्रतिपाद्यमानस्य मन्त्रस्य वचनानुपयोगीत्वा-

# अथ द्वितीयः पादः ।

अर्थाभिधान ॥ एवं श्रुत्युपयोगिविचारे कृतेऽधुना लिङ्गोपयोगिविचारः प्रस्तूयते । तत्र लिङ्गं नामाङ्गत्वघटकीभूतपरोद्देश्यता-क्षतिकारकत्ववाचकपदकल्पनाऽनुकूला कृत्स्नपदार्थनिष्ठा योग्यता । यथा स्रुवेणावद्यतीत्यत्र स्रुवनिष्ठा द्रवपदकल्पनाऽनुकूला । एवं मन्त्रेषु स्वार्थस्मृत्युद्देश्यतावाचिपदकल्पनाऽनुकूला स्ववृत्तिकारकत्व-वाचिपदकल्पनाऽनुकूला च योग्यता लिङ्गम् । सा च पदरूपश्रुति-कल्पकत्वात्तद्द्वारा तदर्थविनियोगे प्रमाणम् ।

तत्र वस्तुसामर्थ्यरूपस्य लिङ्गस्य विशेषविचारासम्भवात् मन्त्र-सामर्थ्यस्य किं मुख्य एवार्थे विनियोजकत्वमुत जघन्यवृत्तिप्रति-पाद्येऽपीति सन्देहे, प्रकरणाम्नातमन्त्रस्य बर्हिर्देवसदनं दामी-त्यादेर्मुख्य इव जघन्येऽपि उलपराज्यादौ कारकाकाङ्क्षादिरूप-सामर्थ्यविशेषात् तदाधारत्वेनैव विनियोगः । अवेक्षणेत्यादिवदा-काङ्क्षादिरूपतात्पर्यग्राहकसत्त्वे मुख्यार्थबाधस्याकिञ्चित्करत्वादिति प्राप्ते ।

मुख्यसम्बन्धसापेक्षत्वेन जघन्यार्थप्रतीतेर्विलम्बितत्वात् प्रथम-प्रतीतमुख्यविनियोगेन चरितार्थस्य मन्त्रादेर्जघन्यार्थविनियोजकत्वा-नुपपत्तिः । अत एव तत्स्मारकाकाङ्क्षया ध्यानाद्युपायान्तरेणैव निवृत्तिः । अत एव यत्र प्रकरणे मुख्यार्थोपयोगो न कृत्स्नस्तत्र मन्त्राम्नानबलादेव तत्कल्पना । यत्र तु विरोधिप्रमाणान्तरावरोध

प्राप्तत्वात्। पर्य्येवेत्यस्य तु नायमर्थो यत्तत्पर्य्येवोत्तिष्ठति न त्वाहेति, अपि तु पर्य्येव नान्येति। अतो नेदमपि तदभाववोधकम्। अनयाक्रान्ते मन्त्रस्य लिङ्गादेव प्राप्तत्वादाक्रान्तस्य च सहायार्थत्वेनावघातकाल एव प्राप्तेरवघ्नन्नित्यस्याप्यनुवादकत्वात् केवलं चिरभ्याममात्रं विधीयते, चिरभ्यामत्वविशिष्टावघातसमानकालतैव वाऽऽक्रामोद्देशेन विधीयत इति न गौणेऽवघाते विनियोगः ॥२।१७॥

तयोत्थान ॥ ज्योते, उत्तिष्ठन्नन्वाहाग्नीदग्नीन्विहरेति। तथा व्रतं कृणुतेति वाचं विसृजति। दर्शपूर्णमासयोः, यजमानः प्रणीयमानं यच्छति तां च हविष्कृता विसृजतीति श्रुतम्। तथापि पूर्ववदेव मन्त्राणां मुख्येऽर्थे विनियोगो न तु गौणयोरुत्थानवाग्विसर्गयोः। प्रबलस्यापि ब्राह्मणवाक्यस्य कालविधायित्वेनाप्युपपत्तौ गौणत्वतात्पर्यग्राहकत्वाभावात्। न च लक्षणा। शतृप्रत्ययस्य कालिकसम्बन्धेनोपलक्षणार्थत्वमङ्गीकृत्य श्रुत्यैवान्वयोपपत्तेः। अतश्चोत्थानकाले विहरणमन्त्रः पठनीय इति कालविधिरेवायम्। व्रतं कृणुतेत्यभेनिकरणस्यापि मन्त्रस्वरूपमात्रपरत्वात् कालिकसम्बन्धेनैव सवर्गविधया भानोपपत्तेर्न लक्षणा। हविष्कृदाख्ये तृतीयायाश्च वाग्यमापेक्षितावधिसमर्पकत्वेन तदेकवाक्यत्वोपपत्तौ वाक्यभेदे प्रमाणाभावादित्थंभूतलक्षणार्थतामङ्गीकृत्य कालविधिपरत्वम्। अतश्च मदाख्ययोः पाठक्रमावगततत्तन्मन्त्रपाठकाले वाग्विसर्गः कर्त्तव्य इति सोऽपि तत्र कालविधिरेव ॥२।१८॥

सूक्तवाके ॥ दर्शपूर्णमासयोः सूक्तवाकेन प्रस्तरं प्रहरतीति श्रुतम्। तत्र सूक्तवाकपदवाच्यस्य मन्त्रस्य इष्टदेवताप्रकाशनेन

मुख्यबोधकत्वानुपपत्तेः । अतस्तस्य शक्यबोधकालीनेन्द्रप्रकाशकत्वानुवादत्वेनाप्युपपत्तेर्न द्वितीयादौ तद्बलेन लक्षणाऽऽश्रयणं रूढित्यागो वा । न च समीपस्थितिं प्रति अग्ने कर्मत्वम् । तथात्वे तस्याभिधानं प्रत्ययत्वे उद्देश्यानेकत्वकृतवाक्यभेदापत्तेरात्मनेपदविरोधेन च धातुनैव स्वशक्यार्थविशिष्टाभिधानलक्षणाऽवश्यम्भावादिविध्यभूतेऽभिधान एव मन्त्रस्य करणत्वप्रतीतेर्गार्हपत्यस्य च वचनस्वकार्यस्य कर्मत्वप्रतीतेरर्थाच्च सामीप्यप्रतियोगित्वेन तस्यैव ग्रहणोपपत्तेश्चात्यर्थवाहकमात्रार्थानुरोधेन मन्त्रस्यैव गौण्या वृत्त्या गार्हपत्ये विनियोग इति सिद्धम् ॥२॥१७॥

तथा ॥ दर्शपूर्णमासयोः हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति इति श्रुतम् । तत्र नाम मन्त्र आह्वानाङ्गम् । तस्य पत्न्येव हविष्कृदुपतिष्ठति सा देवानभिद्रुत्यावहतीति वचनानुसारेणाभावप्रतीतेः । अत इति-करणेन अवघाताङ्गमेव । अतथाऽस्मिन्वाक्ये त्रिरभ्यासयुक्तमन्त्रविशिष्टावघातविधिरेव । पत्नीवाक्ये च गुणादेव कर्मान्तरविधिः । तयोश्चावघातयोर्मीहीनवदन्तीत्यनेन स्वकार्यसम्बन्धोऽपि । दृष्टार्थत्वादिकस्य । पत्नीकर्तृकेऽवघाते चावरत्वादिव इति मन्त्रः । अतश्चानेन वाक्येनावघाते गौण एवायं मन्त्रो विनियुज्यते । गौणत्वोपपादनं कौस्तुभे द्रष्टव्यम् । आह्वयतिश्च तदाचष्टे इत्येव शक्यार्थबोधकालीनाह्वानप्रकाशनानुवाद इति प्राप्ते ।

मुख्य एवाह्वाने विनियोगसम्भवे मन्त्रस्याह्वयतिपदस्य च गौणत्वकल्पनाया प्रमाणाभावात् । मान्त्रवर्णिकविनियोगविधिकल्पनया सध्यासमित्यादिना ग्रहणादेरिवाह्वानस्यापि नियमेन

यथाध्ययनादौ कतिपयपदप्रयोगेणापि सूक्तवाकपदार्थसम्पत्तिप्रसङ्गेन समस्तानुवाके रूढेरवश्यम्भावात् । अस्तु वेष्टदेवताप्रकाशनमानुषङ्गिकं फलम् । प्रकरणमेव तु श्रुतिविनियोगात् सर्वानुवाकप्रयोजक इति दर्शे पौर्णमासे च सर्वं प्रयोक्तव्य इति प्राप्ते ।

प्रबलयाऽपि श्रुत्या लिङ्गस्य बाधे प्रहरतिलक्ष्यहोमान्तर्गतदेवतोद्देशत्वादुपकारकत्वापत्तेरदृष्टविधया सन्निपत्योपकारकत्वाभावार्थं श्रुतिरेव लैङ्गिकेष्टदेवताप्रकाशनार्थस्य मन्त्रस्यानुमन्यते । अत एव श्रुतिफलोपपत्तात् प्रकरणप्रयुक्तं सूक्तवाक्यं प्रकरणाभावे यत्र श्रूयमाणोऽपि विभज्य विनियोगात् इष्टदेवताप्रकाशनरूपलैङ्गिककार्यस्यैव प्रयोजकत्वमनुमन्यते ।

न चैवं सूक्तवाकसमुदायावयवलक्षणार्थतापत्तिः । सूक्तवाकपदस्य तु उक्तं वक्तीति व्युत्पत्त्या इष्टदेवताप्रकाशकमन्त्रविशेषे योगरूढत्वात् । तेन यत्र यावत्यो देवता इष्टाः प्राकृत्यो वैकृत्यो वा, तत्र तावानेव सूक्तवाकः । अतश्च सूक्तवाकप्रातिपदिकश्रुत्यनुरोधेनापि लिङ्गबाधः । न चाध्ययनादौ योगबाधात् रूढिमात्रकल्पना । तत्र तदानीन्तनवैदिकप्रसिद्ध्यनुरोधेन दार्शपौर्णमासिकदेवतापदसमुदाययुक्त एव मन्त्रे निरूढलक्षणाङ्गीकारात् । अध्ययनादौ तु इष्टदेवतास्मरणस्याभावात् कृत्स्नावयवाभिधानायातिरिक्तलक्षणमिति विवेकः । प्रयोजकं विभज्य विनियोग ॥३।२।१९॥

लिङ्ग । काम्येष्टिकाण्डे इन्द्राग्न्यादिदेवत्याः काम्येष्टयः समाम्नाताः । तैश्च क्रमेण मन्त्रकाण्डे तत्क्रिया एव काम्ययाज्यानुवाक्याकाण्डसंज्ञेन समाख्याता याज्यानुवाक्यामन्त्राः समाम्नाताः । ते

कृतार्थत्वात् प्रस्तरप्रहरणस्य चोपयुक्तप्रस्तरप्रतिपत्तित्वेन कृतार्थत्वात् दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवत्कालार्थः सम्बन्धः। तृतीया चेत्थम्भूतलक्षणपरा सती सूक्तवाकस्य कालिकसम्बन्धेन प्रहरणोपलक्षणत्वेनान्वयं बोधयन्ती नानुपपन्ना। न चैव लक्षणा, तस्या अपि चानुशासनिकत्वेन मुख्यत्वात्। अतश्चानुयाजोत्तरं सूक्तवाकपाठात्कालविशिष्टं प्रस्तरोद्देशेन प्रहरणमेव विधीयते, न सूक्तवाकस्य प्रहरणाङ्गत्वमिति प्राप्ते।

मधुरप्रयोगाभावाच्च करणत्व एव तृतीयायाः शक्तिर्न तु इत्थम्भूतलक्षणे, तस्यानुशासनिकत्वेऽपि लाक्षणिकत्वेनाप्युपपत्तेः। अतश्च श्रुत्या प्रहरणाङ्गत्वस्यावगतेः प्रहर्तिर्मान्त्रवर्णिकदेवताकल्पनया आग्नेयिकर्मरूपहोमसम्पत्तौ न विरुध्यते। अत एव सूक्तवाक एव याज्येति यागलिङ्गमपि सङ्गच्छते। यद्यपि च नास्य मन्त्रत्वादिवदभियुक्तप्रसिद्धिविषयत्वादयं मुख्यं याज्यात्वं सम्भवति। एवमारोपयत्वेनैव लिङ्गस्य याज्यात्वाबाधकत्वात्। तथापि यागसाधनत्वमात्रेण याज्यात्वव्यपदेशात् यागलिङ्गत्वम्। अतश्च श्रुत्या मन्त्रस्य प्रहरणाङ्गत्वेऽपि मुख्यसामर्थ्यस्य नाश बाध, प्रहरणेऽपि तदुपपत्तेः ॥३।२।१०॥

कृत्स्नोपदेशात् ॥ श्रुत्या लिङ्गोपबद्धया प्रहरणाङ्गत्वावगमाच्च लिङ्गमात्रेण सूक्तवाकस्येष्टदेवताप्रकाशनार्थत्वम्। न चाप्यविरोधोऽपि। अर्थैकप्रसिद्धा समाम्नानुवाके सूक्तवाकमन्त्रस्य कृत्स्नत्वेनावयवशो-विभज्य विनियोगेऽवयवलक्षणापत्त्या श्रुतिविरोधापत्तेः। न चासौ सूक्तं वक्तीति व्युत्पत्त्येष्टदेवतावाचिपदसमवाये यौगिकः। पारा-

वस्तुतस्तु नात्राव्यभिचारोऽपि । शुक्रादीनां हि न तत्त्वेनान्यत्र कारणेनेति तस्य युक्तः क्रतुनाऽव्यभिचारितः सम्बन्धः । देवताद्युपस्थाप्यादिशब्दस्य तु आनुपूर्वीविशिष्टवर्णत्वेन क्रतुं वर्णं प्रति च स्वार्थप्रतिपादनं प्रति कारणत्वात्राव्यभिचारिक्रतुसम्बन्ध इति वैषम्यम् । अतश्च व्यभिचारात् । अव्यभिचारेऽपि वाऽऽकाङ्क्षोत्थापकत्वानुपपत्तेर्नान्यत्र विनियोगः । अत एव आरम्भिकी आकाङ्क्षा यत्र न निवर्तते यथाऽर्थज्ञाने उपनिषज्जन्यात्मज्ञाने वा, तत्र आकाङ्क्षोत्थापनप्रयोजनाभावात् सामान्यसम्बन्धबोधकप्रमाणं विनाऽपि भवत्येव लिङ्गमात्रादिविनियोगः । प्रकृते तु आरम्भिकाकाङ्क्षानिवृत्तेः आकाङ्क्षोत्थापकसामान्यसम्बन्धबोधकप्रमाणापेक्षेति वैषम्यम् ।

न चैवं प्रयत्नक्रममात्रेणैव तदुपपत्तेः समाख्यावैयर्थ्यम् । यत्र दाशतयवदविदितक्रमकर्मको आग्नेयमन्त्रस्याम्नाने तत्र प्रथमातिक्रमे कारणाभावात् क्रमाविरोधाच्च सामिधेनीषु निवेशे प्राप्ते समाख्यया याज्यानुवाक्याकार्ये निवेशः । सामिधेनीषु तु अन्यासामाम्नानम् । न चैव क्रमोपन्यासवैयर्थ्यम् । यथान्यदेवत्यपूर्वेष्टियाज्याऽऽम्नानानन्तरं उत्तरेष्टियाज्यातः पूर्वमाग्नेय्यश्च, पठितास्तत्र सन्निकृष्टक्रमत्वेन याज्याकार्ये निवेशासम्भवात् समाख्याबाधेऽपि क्रमसामर्थ्योत्तरेष्टिसामिधेनीकार्ये विनिवेशः । तत्सामिधेनीस्थानपठितत्वात् । अतः सिद्धं काम्येष्टिष्वेव विनियोग इति ॥२॥२२॥

अधिकारे ॥ ज्योतिष्टोमे आग्नेय्याऽऽग्नीध्रमुपतिष्ठत इत्यत्र किं अप्रकृतस्याधारत्वेन षड्मात्रमाग्नीध्रोपस्थानाङ्गं उत प्रकृता एव याः स्तोत्रादौ अपि विनियुक्तास्ता एवेति चिन्तायां, आग्नेयीपदस्या-

लिङ्गादिन्द्राग्न्यादिदेवत्यकर्ममात्राङ्गं, न तु दुर्बलप्रमाणस्याऽनुरोधेन काम्येष्टिमात्राङ्गम् । न च सामान्यसम्बन्धबोधकप्रमाणाभावे लिङ्गमात्रेण विनियोगायोगः । मन्त्रगतप्रयोजनाकाङ्क्षासहकृतलिङ्गेन सामान्यसम्बन्धबोधकप्रमाणाभावेऽपि इन्द्राग्न्यादिदेवताप्रकाशने मन्त्रविनियोगोपपत्तेः । न चेन्द्राग्निस्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणार्थं क्रमाद्यपेक्षेति वाच्यम् । इन्द्राग्न्यादिदेवतानां शुद्धत्वाव्यभिचारित्वेन लक्षणोपपत्तेः । व्यभिचारित्वेऽपि वा लौकिकस्याग्न्यादेर्वैयर्थ्यादेव वारणोपपत्तौ परिशेषादेवापूर्वीयत्वोपस्थितेः । अतो लिङ्गमात्रेण क्रतुसमाख्ययोर्बाधात् सर्वार्थत्वमिति प्राप्ते ।

आकाङ्क्षाऽभावे योग्यतारूपस्य लिङ्गस्य विनियोजकत्वानुपपत्तेर्मन्त्रगतप्रयोजनाकाङ्क्षायाश्च सर्वमन्त्राणां वाचस्तोमे विनियोगेन निराकाङ्क्षतया अभावाच्च लिङ्गमात्रात् सर्वार्थत्वोपपत्तिः । अतश्च वाक्यप्रकरणक्रमादिना सामान्यसम्बन्धबोधकप्रमाणेन तत्तदाकाङ्क्षोत्थापनात्तत्र क्रतुसम्बन्धेऽवगते द्वारविशेष एव लिङ्गादवगम्यते । न च वाचस्तोमीयवाक्येन प्रकरणादिबाधः । मन्त्रविशेषविषयाणां तेषां मन्त्रपाठकालोत्पन्नमन्त्रप्रयोजनाकाङ्क्षावेलायामनुपस्थितेन तेन वाक्येन बाधायोगात् । न चैवं प्रबलेन विनियुक्तस्यापि दुर्बलेन विनियोगे वक्ष्यमाणस्यापि पूषानुमन्त्रणमन्त्रस्य प्रकरणेन गौणेऽर्थे विनियोगापत्तिः । प्रमाणद्वयस्याप्येकविषयत्वान्मन्त्रप्रयोजनाकाङ्क्षावेलायां प्रबलप्रमाणस्योपस्थितत्वाच्च बाधकत्वोपपत्तेः । अतश्च प्रकृते बाधायोगात्क्रमप्रमाणस्याऽनुरोधात् काम्येष्टिविषयत्वमेव मन्त्राणाम् । न चान्यथाकाङ्क्षोत्थापकं किञ्चिदस्ति । अव्यभिचरितक्रतुसम्बन्धादेराकाङ्क्षोत्थापकत्वे प्रमाणाभावात् ।

अन्यज्योतिष्टोमापूर्वसाधनत्वलाभः प्रकृतानाम्। अतः सर्वासामेव ग्रहणम्। अप्रकृतानामेव वा, कार्यसाकाङ्क्षत्वादिति प्राप्ते।

अप्रकृतग्रहणे तासामपूर्वसाधनीभूतोपस्थानार्थत्वान्यथानुपपत्त्या अपूर्वार्थत्वस्यापि व्रीह्यादिवत्कल्पनीयत्वापत्तेः। प्रकृतानां च कार्यान्तरसम्बन्धबोधकविधानेनापूर्वार्थत्वस्य क्लृप्तत्वात्साधनोपजीविना प्रकृतनियमः। सम्भवति च प्रकृतानामप्याग्नेयीनां वाङ्नियमन्यायेन स्तोत्रद्वारा ज्योतिष्टोमापूर्वसम्बन्धासम्भवेऽपि कार्यान्तरद्वारा सः। आग्नेयीनां स्तोत्रादौ विनियोगेऽपि पार्थक्येन ज्योतिष्टोमप्रकरणे पाठादेव वा तदपूर्वसम्बन्धावगमः। अयमेव च अक्षौदनप्राशने स्वविकल्पनिवारकन्यायः। न चैवमात्रेयाय हिरण्यं ददाति इत्यत्रापि तन्नियमापत्तिः। तत्र तु आत्रेयत्वस्य नियमेनाप्राप्तेः। अत एव चाग्निमुपनिधाय स्तुवीतेत्यादावाग्नेयप्रणीयस्तोत्रापूर्वसम्बन्धस्याहवनीयादावप्राप्तत्वात्तन्नियमोऽपि तु विना वचनं आयतनवह्निभावायोगाल्लौकिकस्यैवेति वक्ष्यते। अतः सिद्धं लाघवानुरोधेन प्रकृतस्यैव ग्रहणम् ॥२।२१॥

लिङ्गसमाख्यानाभ्याम्॥ सोमे, भक्षेहि माविशेत्यादिर्भक्षानुवाक इत्येवं समाख्यातो मन्त्रः श्रुतः। तत्र यस्तावद्भक्षांशो भक्षणमेव प्रतिपादयति स तत्रैव विनियुज्यते। ग्रहणावेक्षणसम्यग्जरणप्रतिपादकानां त्वंशानां किं ग्रहणादावेव विनियोगोऽथवा भक्षणमन्त्रैकवाक्यतया भक्षण एवेति चिन्तायां, ग्रहणादेरविहितत्वेनापूर्वसाधकत्वज्ञानकत्वस्याप्यभावाद्ग्रहणस्यार्थाद्भक्षणजनकत्वेन पक्षप्राप्तावपि प्राक्तभ्यां सध्यासमित्यनेनोक्तस्य वाऽदयकरणकस्य ग्रहणस्य कथ-

विशेषेण सर्वपरत्वात् प्रकरणस्य तथाक्षेपत्वानुपपत्तेरग्निदेवत्य-मन्त्रमात्रस्यैव विशिष्टविधुत्तरकाम्येनविशेषणविधिना आग्नीध्रोप-स्थानाङ्गत्वेन विधानम्। न तथाग्नीध्रो उद्देश्यो येनानर्थक्यभिया श्रौतिकप्रकरणेन सम्बध्येत। तृतीयद्वितीयपादयोस्तदवगमात्। अत्र चोप-स्थानस्वरूपे आनर्थक्याभावात्, तत्र प्रकरणानुप्रवेशेऽपि आग्नीध्रपदस्य प्रकृतपरत्वापत्तिः।

न चाग्नीध्रपदस्य यौगिकत्वात्तद्धितान्ततया वा सन्निहितपरत्वम्। यौगिकानामप्ययथार्थविशिष्टव्यक्तिमात्रवाचित्वेन सन्निहितवाचित्वे प्रमाणाभावात्। तद्धितस्य तद्वाचित्वेऽपि प्रकृतानामप्यनेकप्रकरण-स्थत्वेऽपि प्रदेशान्तरस्थत्वेन सन्निहितत्वाभावात्। अस्तु वा प्रकरण-सन्निहितस्यैव तद्धितेन ग्रहणं, तथापि यत्र न तद्धितग्रहणं यथा अग्नीदग्नीन्विहरेत्यादौ चतुरो मुष्टीन्निर्वपेदित्यादौ, तत्र प्रकृतलिङ्ग-ग्रहणे प्रमाणाभावः। न च प्रकृतानामपूर्वार्थत्वस्य क्लृप्तत्वात् नैयत्ये दारुरूपाग्नीध्रोपस्थापनमनन्यकरणे लाघवादप्रकृतानामप्युभयकरणे गौरवापत्तेः प्रकृतनियम इति वाच्यम्। प्रकृतपक्षेऽप्युपस्थानस्य-रूपस्य द्वारत्वे तत्कार्यापत्तेः ऊहादानापत्तेरपूर्वसाधनत्वलक्षणाया आवश्यकत्वात्। न हि प्रकृतविषयेऽपि प्रकरणेन वाक्यान्तर-कल्पनया अपूर्वार्थत्वबोधः। तथात्वे श्रौतीनां स्वरूपेण द्वारत्वा-पत्तौ यज्ञाना तदनापत्तेः।

अतो लाघवादपूर्वसाधनीभूतस्योपस्थानस्यैवोद्देश्यता। तावता चा-पूर्वसाधनीभूतोपस्थानार्थत्वस्यालाभादस्यैव प्रकृतपक्षेऽपि तद्विधा-वपूर्वसाधनत्वलक्षणा। अपि च श्रौतापूर्वसाधनत्वक्लृप्तावपि नोपस्थान-

वाक्यतां भक्षस्य स्वार्थविशिष्ट*भक्षणप्रकाशकत्वमेवाङ्गीकर्त्तव्यम्। स्वार्थश्च श्रुत्या तृप्तिरेव। तत्प्रकाशनांशे चादृष्टार्थत्वम्। अथवा लक्षणया भक्षणस्तुतिः। सर्वथा न लिङ्गादिविनियोगः ॥२॥१४॥

लिङ्गविशेषनिर्देशात् ॥ भक्षमन्त्रः किं इन्द्रदेवत्याभ्याम एवाङ्गं तद्भिन्नाभ्यासेष्वमन्त्रकं भक्षणं उत तेषूहेनोतानूहेन वेति चिन्तायां, प्रकरणात् कृत्स्नमन्त्रस्य सर्वप्रदानार्थत्वावगमेऽपि इन्द्रपीतस्येति लिङ्गेनैन्द्रदेवत्यप्रदानमात्राङ्गत्वम्। न चेन्द्रेण यस्मिन् सवने पीत इति बहुव्रीहिस्वीकारेण सोमसम्बन्धिसवनविशेषणत्वाङ्गीकारात् लिङ्गाविरोध इति वाच्यम्। पदद्वयलक्षणापादक-तत्पुरुषानुगत-व्यधिकरणबहुव्रीह्यपेक्षया पूर्वपद एव सम्बन्धिलक्षणापादकस्य लक्षणानुगतस्येन्द्रेण पीत' स्वीकृत इत्येवं तत्पुरुषस्यैव लघुभूतत्वात्। विद्यते च देवतायाः प्रतिपदाभावेऽपि देवस्य न यद्वीथादित्यादि-वचनबलेन सम्बन्धविशेषरूपः स्वीकारः। न च सूत्रस्थपीतपदस्वरादेव बहुव्रीहित्वनिर्णयः। तद्दिह समासस्य लक्षणानुगतत्वाभावेन स्वरस्यैव बाध्यमानत्वात्। यथा च तत्पुरुषपक्षेऽपि स्वराविरोधस्तथा कौस्तुभ एवोपपादितम्।

अतश्च लिङ्गादिन्द्रदेवत्यप्रदान एव मन्त्रस्याङ्गत्वावगमादैन्द्राग्ने च कर्मणि एकत्वेन प्रकृतिविकारभावाभावादूहानुपपत्तेर्होता मेध-इति वदैन्द्राग्नामामन्त्रकं भक्षणमित्याद्यः पक्षः। द्वितीयस्तु यद्यपि कर्मैकत्वे प्रदानानां भिन्नत्वादविरुद्धः प्रकृतिविकारभावः। इन्द्राय त्वा वसुमत इत्यादिमानग्रहमन्त्राणां च लिङ्गादिन्द्रमात्रविषय-

* विशिष्टा,— इति ख० पुस्तके पाठः।

भक्षप्राप्तेर्वैधत्वस्य च भक्षाजनकत्वेनैवाप्राप्तेः सम्यग्जरणस्य तदनुकूलव्यापारस्य वा भक्षोत्तरभावितया भक्षाजनकत्वेन तेषामपूर्वप्रयोजकत्वस्याप्यभावाद्ग्रहणाद्यर्थत्वे आनर्थक्यापत्तेः भक्षणमन्त्रैकवाक्यतया भक्षणार्थत्वमेवैषाम्। एवं च समाख्याऽप्युपपन्ना भवतीति प्राप्ते।

ग्रहणादिमन्त्रचतुष्टयमध्येऽपि समाख्यासहकृतावान्तरप्रकरणेन भक्षसम्बन्धे तत्तन्मन्त्राणामवगते लिङ्गबलेन मान्त्रवर्णिकग्रहणादिविधिकल्पनया तत्राप्युपपत्तेस्तदर्थत्वेनैव मन्त्रविनियोगोपपत्तौ न स्वतो निराकाङ्क्षयोर्द्वयोराख्यातपदयोः कथञ्चिदेकवाक्यतां परिकल्प्य गौण्या भक्षार्थत्वकल्पनम्। अतश्च वा भक्षविशेषणत्वेन ग्रहणादिमन्त्राणां कल्पनमुपपत्तिमत्। न चैवमपि सम्यग्जरणस्य अयत्नसाध्यत्वाच्च विधिसम्भवः। सम्यग्जरणानुकूलव्यापारस्यासनविशेषस्यैवानुष्ठेयस्य विधेयत्वात्। वमनविरेकनिमित्तप्रायश्चित्ताम्नानाच्च सम्यग्जरणपर्यन्तमेव भक्षणं प्रतिपत्तिरिति तस्य भक्षोपयोगिता।

गुणाभिधानात्।

तस्मिन्नेवानुवाके मन्द्राभिभूतिरित्यादिसूक्तलित्यन्तमन्त्रौ विनियोज्यौ ग्रहणादाविवेति प्राप्ते।

ग्रहणादिवदनुष्ठेयत्वाभावात् तृप्तेरप्रकाश्यत्वम्। न च सम्यग्जरणवत् तृप्त्यनुकूलव्यापाररूपभक्षणस्याक्षेपकत्वम्। अतृप्तं भक्षयतीति वचनविरोधेन तत्कल्पनाऽनुपपत्तेः। अत एव तृप्तेर्भक्षणेनाजननाच्च तस्याः स्वर्गवज्जन्यत्वमात्रेण प्रकाश्यत्वोपपत्तिः। अतश्च लिङ्गविनियोगासम्भवात् यद्यपि आख्यातद्वयस्य स्वतो निराकाङ्क्षत्वे इतिकरणाध्याहारेण तृप्यत्वित्येतदर्थं भक्षयामीत्येवं भक्षमन्त्रैक-

पात्नीवतत्वं न लाघवप्रसक्त्यैव। श्रावयणवत्वानावयणमपि संस्पृष्टत्वात् तस्मादपेतमिति दिदेवत्यस्यापि देवतान्तरसम्बन्धेन पूर्वदेवताप्रत्यापायात्। भूतपूर्वगत्या च प्रकृतावनुपलक्षणान्नोपलक्षणीयाः॥ ३॥२७॥

त्वष्टारम्॥ पात्नीवत एवाग्राह पत्नीवाः सजूर्देवेन त्वष्ट्रा सोमं पिबेति मन्त्रात् त्वष्टुरपि देवतात्वम्। अतः सोऽप्यग्निवदुपलक्षणीय इति प्राप्ते।

युक्तमग्नौ पत्नीवच्छब्दस्य यौगिकत्वेन विशेष्यमात्राकाङ्क्षस्य सामानाधिकरण्येन विशेष्यवाचकत्वात्। त्वष्टुस्तु तृतीयया सहभावमात्रं प्रतीयते। न चासौ पानक्रियाऽव्यभिचारी। सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यादौ व्यभिचारात्। सत्यपि पाने देवतात्वस्याप्रामाणिकत्वाच्च। अतः पात्नीवतमिति निरपेक्षतद्धितेन पत्नीवतोऽग्नेरेव देवतात्वमिति स एवोपलक्षणीयो न त्वष्टा॥३॥२८॥

त्रिंशच्च॥ तस्मिन्नेव यान्यामन्त्रे, एभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः। पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्वेत्यत्र त्रयस्त्रिंशतां देवतानां पत्नीवच्छब्दसामानाधिकरण्यादग्निवद्विशेष्यत्वोपपत्तेर्मदश्रवणाच्च पानोपपत्तेर्देवतात्वावगमान्नोपलक्षणं भवति। अश्वमादयिताश्रवणात् तेऽग्निद्वारेण कामं माद्यन्तु यजमानद्वारेव एव दृष्टान्तोऽप्यवगमात् तस्यैव देवतात्वं न त्रयस्त्रिंशताम्। एवञ्च पात्नीवतमिति तद्धितोऽप्यसति बहुवचनग्राहकप्रमाणे एकवचनेनैव विरुद्धो भवतीत्यपि लाघवम्। अतो नोपलक्षणीयास्ते॥३॥२९॥

त्वात् तदनुरोधेन च तत्प्रकाश्ययोर्मानग्रहणयोस्तत्संस्कार्यस्य सोमस्य तत्संस्काराणां चाभिषवादीनां तन्त्रियाणां चाङ्गान्तराणामैन्द्रमात्रविषयत्वप्रतीतेरितरेषामेकधर्मकाणां युक्तोऽतिदेशः। भवति चाङ्गगुणेनापि प्रधानसङ्कोचः। अग्न्याद्यनुरोधेन क्रतूनामाहिताग्निविषयत्वात्। अतश्च प्रकृतापूर्वीयदेवताप्रकाशकस्य भक्षमन्त्रस्य कार्यमुखेन विकृतावागतस्य भवत्येव यथादेवतमूह इति। एवं स्थितेऽन्तरा चिन्ता ॥३॥२५॥

पुनरभ्युन्नीतेषु ॥ सवनमुखीयेषु चमसेष्वैन्द्रेषु सर्वेषु हुतेषु ये होत्रकाणां मैत्रावरुणादीनां चमसास्तेष्वभिषवेणैव पुनः सोमोऽभ्युन्नीय देवतान्तरेभ्यो मित्रावरुणादिभ्यो हुत्वा भक्ष्यते। तत्र पूर्वप्रदानदेवताभूत इन्द्रोऽप्युपलक्षणीयो न वेति चिन्तायाम्, उन्नयनकाले न देवतान्तरोद्देशः। येनोन्नीतस्तस्यैव तत्सम्बन्धात् पूर्वशेषस्य पूर्वदेवतासम्बन्धो नापेयात्। प्रदानकाले तु संसृष्टस्यैव देवतान्तरसम्बन्धात् पूर्वदेवतासम्बन्धापनयप्रतीतेर्नोपलक्षणमिति प्राप्ते।

उन्नयनकाले देवतासम्बन्धाभावेऽपि सामर्थ्याद्विशेषवपनस्य करिष्यमाणकर्मार्थत्वप्रतीतेः पूर्वशेषस्य संसृष्टत्वेऽप्येतदर्थत्वे प्रमाणाभावादनपनीतसम्बन्धा पूर्वदेवताऽप्युपलक्षणीया ॥३॥२६॥

पात्नीवते ॥ द्विदेवत्यानामैन्द्रवायवादीनां शेषा आदित्यस्थाल्यामागत्य ततोऽप्याग्रयणस्थालीमागच्छन्ति। पात्नीवतस्याग्रयणात् गृह्यते, तस्मिन् भक्ष्यमाणे द्विदेवत्या अपि उपलक्षणीयाः। पूर्ववदाग्रयणस्यैव पत्नीवद्देवतासम्बन्धादिति प्राप्ते।

पात्नीवतमाग्रयणाद् गृह्णातीत्यपादानत्वश्रवणात् तस्मादपेतस्य

सत्यं पीतपदेन स्वीकारलक्षणा। पानस्य नवमे निषेध्यमानत्वात्। त्यागस्य त्वदुक्तरीत्या लक्षयितुमशक्यत्वाच्च। स्वीकारस्य तु देवत्वादिपदालम्बनतया कल्प्यमानस्य क्लृप्तावविशिष्ट एव कल्पनीयत्वाद्युक्ता लक्षणा। तथापि तस्य लाघवेन धात्वर्थवृत्तित्व एव कल्पने प्रत्येकवृत्तित्वे प्रमाणाभावाच्चतुर्थाकरणाधिकरणविषयत्वोपपत्तेर्न तस्य समस्तकभक्षणम् ॥२॥२९॥

छन्दश्च॥ तत्रैव मन्त्रे गायत्रच्छन्दस इत्यादि श्रुतम्। तदेव सोमविशेषणमेवास्मिन् पूर्वपक्षे। अतश्च केवलमेव यथैन्द्रप्रदाने गायत्रच्छन्दो यथा इन्द्रपीतस्येत्यादौ, गायत्रमेतदहर्भवतीति श्रुतेः, तत्रैवास्योत्कर्षो न तु ज्योतिष्टोमे निवेशः। केवलगायत्रच्छन्दस्कप्रदानाभावात्। न च सामान्यसम्बन्धबोधकप्रमाणाभावः। इन्द्रदेवत्यत्वमात्र सवनादीनामन्यत्र लोकादावभावेन पारिशेष्यादेव इन्द्रपीतत्वोपस्थितिसम्भवादिति प्राप्ते।

इन्द्रपीतपदेऽपि सवनमुखीये चमसगणस्य पठितत्वाद्गायत्रमेतदित्यादेश्च श्रुत्याऽपि व्याख्यानोपपत्तेः, प्रकृतौ विकृतौ वा केवलगायत्रच्छन्दस्कत्वाभावात्त्रित्वापेक्षत्वेन समासोपपत्तेः, प्रकृतावेव निवेशः। वस्तुतस्तु गायत्र्याः प्रत्येकमेव साधनत्वात् अत्रापि चमसान्तरे न समासभङ्गाशङ्काऽपि ॥२॥२२॥

सर्वेषां वा॥ स्थितादुत्तरम्। नेन्द्रपीतपदे तत्पुरुषोऽपि तु बहुव्रीहिरेव। तत्पुरुषेऽपि पूर्वपदे तावदेका सम्बन्धिलक्षणा पीतपदे च स्वीकृतावयवलक्षणा। यद्यपि चेयं सिद्धान्तिनोऽपि तुल्या, तथापि अवयवस्वीकारस्यावयविस्वीकारसापेक्षत्वेन विलम्बोपस्थिति-

वषट्कारश्च ॥ अनुवषट्कारयागदेवताया अग्नेर्देवतात्वस्य निःसन्दिग्धत्वादुपलक्षणम्। प्रकृतौ त्वसौ विद्यमानाऽपि नोपलक्षिता। अनुवषट्कारयागस्य सोमयागात्मकसंस्काररूपस्य पूर्वयागीयसोमप्रतिपत्तिभूतस्य इन्द्रविधानत्वेनातिदेशाकल्पनात्। उपदेशेन कथञ्चिद्ग्रहणप्राप्तावपि सोमौषां मेध इति वदैन्द्रमन्त्रस्य प्राप्त्यनुपपत्तेश्च। अतश्च विकृतावपि प्रधानदेवतैव तत्कार्यापत्त्योपलक्षणीया नानुवषट्कारदेवता ॥ ३।२।४० ॥

छन्दः ॥ एवमुक्तं विचार्याधुनाऽऽद्यपूर्वपक्षवादी पुनस्तं दूषयति। सोमः कर्मण एकत्वात्। अभ्यासानामपि फलचमसवदसमानविधानत्वे प्रमाणाभावाच्च। न हि सामग्रहणमन्त्रानुरोधेन तदुद्देश्यानां सङ्कोचो युक्तः। अग्निविषयोऽस्तु स्वत्वविधिप्रयुक्तत्वेन क्रतुविधिप्रयुक्तत्वाभावाद्युक्तः परप्रयुक्ताग्निविशेषोपजीवकतया क्रत्वधिकारसङ्कोचः। अतो सामग्रहणमन्त्रस्यैव कामं ऐन्द्रमात्रपदग्रामविषयौ भवेतां न तु सामान्याद्यपि। यद्वा तस्य वस्तुतः इन्द्रवत्त्वेन देवतान्तरस्याप्यभिधानात् तयोरपि सर्वार्थत्वमेव। अतो भक्षमन्त्रस्यैवैन्द्रप्रदानविषयत्वादनैन्द्राणाममन्त्रकं भक्षणम् ॥ ३।२।४१ ॥

ऐन्द्राग्ने ॥ एवं स्थिते पुनश्चिन्ता। ऐन्द्राग्नेऽप्यभ्यासे इन्द्रपीतस्येव समन्त्रकं भक्षणम्। यागस्य यागसमुदायत्वेऽपि यागस्य पीतपदश्रवितत्वोकारस्य वा प्रत्येकवृत्तित्वेन द्वित्वमात्रवदेकेन व्यपदेष्टुमशक्यत्वात्। यागस्य च कृताकृतसमुदायविषयत्वेन भक्ष्यमाणकृतान्यतमार्थविषयत्वाभावाच्च पीतपदे तद्युक्तत्वसम्पत्त्या। अतदर्थाधिकरणाधिकरणविषयत्वाभावात् तत्रापि समन्त्रकं भक्षणमिति प्राप्ते।

## अथ तृतीयः पादः।



श्रुतेः ॥ इदानीं वाक्यादिविनियोगो निरूप्यते। तत्र वाक्यं नाम अङ्गत्वघटकीभूतपरोद्देश्यताप्रतिकारकत्वान्यतरपदार्थकल्पनाऽनुकूलमश्रुतपदसन्निधिः। अस्ति चेद् धेनुर्दक्षिणा, उच्चैर्ऋचा क्रियते, प्रयाजशेषेणेत्यादौ। अत्र कल्पनाशब्देन कर्मत्वकरणत्वादिविषयकं संसर्गविधया लक्षणादिसाधारण्येन सन्निहितान्यपदार्थोपस्थितिभिन्नबोधमात्रं विवक्षितं। तेन धेनुर्दक्षिणेत्यादौ संसर्गविधया भासमानकरणत्वादौ नाव्याप्तिः।

वस्तुतस्तु सुबन्तपदयोः परस्परान्वयस्याव्युत्पन्नत्वादव्ययस्य भावनान्वयानुरोधेन धेनुरिति प्रथमया करणत्वलक्षणाद् दक्षिणापदेन च तत्कार्यदक्षिणाकर्मत्वलक्षणात्कल्पनापदेन लक्षणाजन्योपस्थितिरेवाभिप्रेता। उच्चैरित्यादौ लुप्तविभक्त्यर्थस्य करणत्वस्य प्रातिपदिकेनैव लक्षणान्नाऽव्याप्तिः। अथवोच्चैरित्यादौ करणत्वस्य संसर्गविधयैव भानोपपत्तेः कल्पनापदेनोभयं विवक्षितम्। प्रयाजशेषेणेत्यादौ तृतीयया कर्मत्वस्य धातुना कारकत्वस्य लक्षणात्कल्पना स्फुटैव।

श्रुतपदसन्निधेश्च योग्यताज्ञानं विना कर्मत्वादिकल्पकत्वानुपपत्तेर्योग्यतारूपलिङ्गानुमापकत्वम्। श्रुतस्यैव पदस्य कर्मत्वादिलक्षकत्वाङ्गीकारेण तद्वाचकपदरूपश्रुतिकल्पकत्वाभावेऽपि च श्रुतपदस्य तत्तात्पर्यकत्वरूपधर्मविशिष्टरूपेण कल्पनात् श्रुतिकल्पकत्वोपपत्तिः। अतश्च वाक्यं, लिङ्गं श्रुतिं च कल्पयित्वाऽङ्गत्वे प्रमाणम्। यदि च

कत्वाच्च तुल्यत्वम् । ततश्च पीतपदे अर्शआद्यच्प्रत्ययं मत्वर्थीयं पाधातुना चावयविगतमेव तत्सम्बन्धिस्वीकारं लक्षयित्वा इन्द्रः पीतः स्वीकारकर्त्ता यस्मिन् सवने इति व्युत्पत्त्या समानाधिकरणबहुव्रीहिरङ्गीक्रियते । प्रकरणविशेषाच्च निर्णयः । अतः सर्वस्यैव सोमस्तोत्रविशिष्टप्रातःसवनादिसम्बन्धित्वादैन्द्राणामपि समस्तकमेवाविकारेण भक्षणम् ।

यदि तु पीतपदस्य पूर्वं निपातापत्तिराशङ्क्यते, तदाऽस्तु इन्द्रे पीतं पानमस्मिन्निति सप्तमीबहुव्रीहिः। यदि तथापि निष्ठान्तत्वेन पूर्वनिपातापत्तिरविशिष्टेति विभाव्यते, तदाऽस्त्वयं तत्पुरुष एव। तदापि तु लक्षणया सोमसम्बन्धिसवनपरत्वम् । न च तत्र प्रमाणाभावः। तैत्तिरीयशाखायां प्रातःसवनादिभेदेन इन्द्रपीत-नराशंसपीत-पितृपीतानां त्रिवार पाठस्यैव प्रमाणत्वात्। सोमसामान्यपरत्वे हि तत्तन्मन्त्रेषु लिङ्गादेरिन्द्रपीतादिपदानां सकृत्पठितानामेव पाठोपपत्तौ तत्र श्रौतत्वेनैव प्रातःसवनादिपदानां विभागेन विशेषणत्वोपपत्तिः। अतस्तेषां प्रातःसवनादिभेदेन त्रिवारं पाठ एव वैयर्थ्यभिया सवनपरत्वलक्षणातात्पर्यग्राहकः। अतश्चेन्द्रपीतादिविशेषणत्रययुक्तस्य तत्तत्सवनस्य सम्बन्धिनं सोमं अन्यदेवत्यमपि भक्षयामीति मन्त्रार्थावगतेः सर्वैकमन्त्रत्वम्। विभागोऽपि तैत्तिरीयशाखाऽऽम्नातक्रमेणैव बोध्यः। कल्पसूत्रकारास्तथैवामनन्ति* ॥ २ ॥ २४ ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
तृतीयाध्यायस्य द्वितीयः पादः ॥

---

* कल्पसूत्रकारास्तु एवामनन्ति,– इति ख॰ ग॰ पुस्तकयोः पाठः।

ध्ययनेनापि अध्ययनविध्यर्थसम्पत्त्यापत्तेः। शूद्रस्यैकपदश्रवणनिषेधस्य दृष्टार्थकावयवशादिनिषेधवच्चानुपपत्तेः। तथा* चैतादृशविषये निषेधस्य विध्यपेक्षया वैलक्षण्यं, तथा कौस्तुभे द्रष्टव्यम्। तस्मादुपक्रमानुसारेण ऋग्वेदविहितकर्माङ्गभूतमन्त्राङ्गत्वमेवोच्चैस्त्वादीनाम्। एवञ्च वेदत्वस्य प्रकरणस्थवाक्यमात्रेषु अपर्याप्तत्वात्प्रकरणेन वाक्यस्य स्वविषये उपसंहारानुपपत्तेर्वेदत्वावच्छिन्नविहितकर्ममात्रोद्देशेन वाक्येन स्वरविधानावगतेः प्रकरणबाधेऽपि न क्षतिः॥३।३।५॥

गुणमुख्य॥ याजुर्वैदिके आधाने सामवेदपठितानि वारवन्तीयादीनि सामान्यङ्गत्वेन श्रुतानि। तेषु सामवैदिकः स्वरः स्ववेदनिबन्धनत्वादङ्गीयस्तूपस्थितो न तु प्रधानविधिनिबन्धनो याजुर्वैदिकः, प्रधानैकवाक्यतापेक्षणेन विलम्बोपस्थितिकत्वादिति प्राप्ते।

सामान्यवाधानस्य यजुर्वेदेन विधानादङ्गेषु विलम्बोपस्थितिरप्ययं प्रधानाश्रितत्वाद्बलीयान्। अतस्तेषु याजुर्वैदिक एव स्वर उपांशुत्वमिति भाष्यकारः।

वार्त्तिककारस्तु प्रयोगविध्याश्रितस्वरस्य प्रधाने श्रुतस्याप्यङ्गकल्पत्वेन दौर्बल्यमेव। इतरथा ज्योतिष्टोमाङ्गभूतदीक्षादेरप्याध्वर्युकर्तृकत्वापत्तेः। वारवन्तीयस्यापि यजुर्वेदे वारवन्तीयं गायतीति विनियोगविधेराम्नानादेवस्थितनीयम्। यच्च वेदान्तरे उत्पत्तिर्वेदान्तरे च विनियोगस्तत्र वारवन्तीयादौ कः स्वर इति चिन्तायाम्। उत्पत्तेः पूर्वभावित्वादन्तरङ्गत्वाविरोधित्वेन तन्निबन्धन एव स्वरो बलीयान्। अतश्च यथा सामवेदेन क्रियते उत्पाद्यत इति मुख्यं इति प्राप्ते।

* यथा,— इति मतिपुस्तकम्।

ज्योतिष्टोमे श्रुतेनोच्चैर्ऋचा क्रियत इत्यादिना वाक्येन विधीयमान-
स्योच्चैस्त्वादेरुद्देश्यसमर्पकेन ऋगादिपदेन किं ऋगादीनां मन्त्राणा-
मेवोद्देश्यत्वं प्रतिपाद्यते, उत त्रयो वेदा अस्जायन्तेत्याद्युपक्रमस्यार्थ-
वादवशेन लक्षणया ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रमात्रस्येति
चिन्तायाम् ।

उपक्रमस्थस्यापि वेदपदस्य गुणभूतान्यपदार्थवादस्थत्वेन प्रधान-
भूतविध्युद्देश्यऋगादिपदे निःसन्दिग्धेऽर्थे गुणविरोधन्यायेन लक्षणा
तात्पर्यग्राहकत्वायोगाद्वेदपद एव तदेकदेशऋगादिलक्षणा । वस्तु-
तस्तु वेदशब्दस्यावयवेऽपि न लक्षणा । वेदत्वस्य प्रत्येकवृत्तित्वादि-
तरथा शूद्रस्यैकवाक्याध्ययने दोषाभावापत्तेरिति प्राप्ते ।

उपक्रमे वेदपदश्रवणे एवैतावद्गम्यते नूनमत्र वेदस्य स्वरूपमा-
त्रादुद्देश्यत्वं विधेयत्वं वा तस्यास्य वाक्ये* विवक्षितमिति । तच्च
न विधेयस्य उच्चैस्त्वादेराभावात्परिशेषादेव तस्योद्देश्यत्वावगतेरेवमुत्तो-
ऋगादिपदमनुवाद एव तदुद्देश्यपरम् । अतश्चासञ्जातविरोधिन-
उपक्रमस्थस्य वेदपदस्यैव तात्पर्यग्राहकस्य सत्त्वात् ऋगादिपदे तद-
नुरोधेन ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रलक्षणा ।

न चोपक्रमाधिकरणस्याप्यपच्छेदाधिकरणन्यायेन परेण बाधः ।
तत्रैव हि श्रुतिमात्रापेक्षितार्थाद्यैकवाक्यताया असम्भवात् पूर्व-
विरोधे परस्यानुत्पत्त्यादेशापत्तेः । न च वेदस्य ऋगादिष्वपि
प्रत्यासत्त्यादुपक्रमाविरोधः । वेदत्वस्य मन्त्रब्राह्मणसमुदायात्मके वेद-
विषये एव पर्याप्ततया प्रत्येकपर्याप्त्यभावात् । इतरथा एकवाक्या-

* वाक्ये — इति ग० पुस्तके पाठः ।

गम्यादीनामपि तदापत्तेः । प्रयाजादीनामनाकाङ्क्षितत्वेन तदनापत्तेश्च । अथ दर्शपूर्णमासयोः प्रकारान्तरेण प्रयाजानाकाङ्क्षत्वेऽपि इतिकर्तव्यतात्वेन तदाकाङ्क्षोपपत्तेर्युक्तं प्रकरणमिति चेत् । किमिदमितिकर्तव्यतात्वं नाम ? न तावत्फले अपूर्वे वा सहकारित्वम् । प्राधान्यापत्तेः । प्रयाजादिष्वदाग्नेयस्यापि विकृतावतिदेशापत्तेश्च । नापि करणजनकत्वम् । प्रयाजादिषु बाधादिति चेत् ।

न । सन्निहितस्य फलवतोऽनवगताङ्गताकपदार्थविषये इतिकर्तव्यतात्वेनापेक्षणस्यैव प्रकरणपदार्थत्वात् । अथासन्निहितज्योतिष्टोमाद्यङ्गत्वस्य प्रयाजादौ वारणायाद्य विशेषणम् । अनूयाजाद्यङ्गत्ववारणाय फलवत इति द्वितीयम् । प्रोक्षणादेः श्रुत्यादिप्रमाणविनियुक्तस्य प्रकरणविषयत्ववारणाय तृतीयम् । सिद्धरूपस्य लिङ्गविनियुक्तमन्त्रादेः प्रकरणाविषयत्वसिद्ध्यर्थमितिकर्तव्यतात्वेनेति चतुर्थम् ।

इतिकर्तव्यतात्वञ्च करणानुग्राहकत्वम् । सर्वत्र हि प्रमाणस्य करणत्वायोग्यव्यक्तिः कारणनिष्ठा समस्तीति निर्विवादम् । सा च कारणतावच्छेदिका कारणरूपा चेत्यन्यदेतत् । तस्याश्च जन्यवृत्तित्वे जन्यतैवेत्युत्सर्गः । सामग्र्यभावे परमनादितैत्यपवादः । तत्र तस्याम-प्यपेक्षैवेतिकर्तव्यताऽपेक्षा । तथा च सन्निहितप्रयाजादेरङ्गत्वबोधः । प्रयाजादेस्तत्सामर्थ्यत्वात् । सिद्धरूपस्य च द्रव्यादेर्व्यापारावेशं विना तत्सामर्थ्यासम्भवात्तथा अग्रहणम् ।

अत्र च प्रधानगतेतिकर्तव्यताऽऽकाङ्क्षाया. प्रयाजादिगतप्रयोजनाकाङ्क्षासहकृतायास्तत्संबन्धस्य स्वस्वावान्तरबोधार्थं समाप्तस्यापि [illegible]. नि-

आम्नानमात्रेण मन्त्रस्य प्रयोजनानवगमेन प्रयोज्यत्वानवगतेः स्वरानपेक्षत्वादिविनियोगोत्तरकालमेव स्वरश्चमन्त्राक्रियत इत्यस्य प्रयुज्यत इत्यर्थावगतेः प्रयोगस्य च विनियोगाधीनत्वेन विनियोगस्यैवाव्यवहितपूर्वं पुरःस्फूर्त्तिकत्वात्तद्विधिनिबन्धन एव स्वरोऽसति बाधकेऽनुष्ठेय इत्याह ॥३॥२६॥

भूयस्त्वेन ॥ यत्रैकमेव कर्मानेकेषु श्रुतं, तत्र कोत्पत्तिः क च तदनुवादेन गुणार्थं श्रवणमिति जिज्ञासायां, यत्राङ्गवाक्यं तत्रोत्पत्तिः। सेवकवाक्येन राजावस्थाननिर्णयवत्। वस्तुतस्तु कर्मस्वरूपपरिचायकद्रव्यदेवतादिवाक्यस्यैव निर्णायकत्वम्। तथापि द्वैविध्ये, बहिरङ्गत्वेऽव्यभिचाराद्देवताया एव, न तु द्रव्यस्येत्यूह्यम्। अतस्त्वेवंविधनिश्चायकत्वे तत्रैवोत्पत्तिः। अन्यत्र तदनुवादेनाविरोधिगुणान्तरविधानम्। विरोधिनि तु गुणाद्भेद एव। एवं यत्र कस्यचिदपि नियामकस्याभावस्तत्राभ्यासाद्भेदः। न ह्यत्र शाखान्तरन्यायेन सत्यपि सर्वेषामुत्पत्तिपरत्वे कर्मैकत्वम्। तदविशेषेऽभेदाभावात्। अतो नियामकबलेन यत्रैवोत्पत्तिस्तद्वेदनिबन्धन एव स्वर इति सिद्धम् ॥३॥२७॥

असंयुक्तम् ॥ एवं वाक्ये निरूपिते प्रकरणमिदानीं निरूप्यते। ननु किमिदं प्रकरणं नाम? न तावत्सन्निधिमात्रं, गोदोहनादेरपि दर्शाङ्गत्वापत्तेः। अथ* साकाङ्क्षत्वमात्रम्। विश्वजितेरपि प्राशनाङ्गविषये तदापत्तेः। नापि साकाङ्क्षत्वे सति सन्निधिपठितत्वम्। उपहोमादावपि तदापत्तेः। अथोभयाकाङ्क्षत्वविशिष्टं तत्। सिद्धरूपाणां

* न च,— इति पठितुमुचितम्। एवं परत्र।

यागादिसन्निधेरपि तथात्वापत्तेर्वाक्यार्थेत्युक्तम्। प्रयाजादीनां स्थानविषयत्वापत्तिनिरासार्थमाद्यं विशेषणम्।

तत्सादेश्यापरपर्यायं द्विविधं, पाठसादेश्यमनुष्ठानसादेश्यञ्च। आद्यञ्च द्विविधम्। यथाक्रमं पाठः सन्निधौ पाठश्च। द्वयमपीदमुभयाकाङ्क्षयाऽन्यतराकाङ्क्षया चेति। तत्रोभयाकाङ्क्षा घटकप्रधानाकाङ्क्षा चेतिकर्तव्यताऽऽकाङ्क्षाभिधा द्रष्टव्या। तत्र पाठक्रमात्काम्ययाज्यानुवाक्यामन्त्राणां काम्येष्ट्यङ्गत्वम्। सन्निधेस्तु, साम्नाय्यपात्रशुन्धनविधिसन्निधौ समाम्नातस्य शुन्धध्वमिति मन्त्रस्य तदङ्गत्वम्। अनुष्ठानसादेश्यात्तु पशुधर्माणां दैक्षपश्वङ्गत्वम्।

यद्यपि चैषां लिङ्गादिप्रमाणान्तरैरेव विनियोगात्क्रमादीनां क्वचिदपूर्वसाधनत्वलक्षणतात्पर्यग्राहकत्वमात्राङ्गत्वे प्रामाण्यम्। तथापि षड्विधस्यापि क्रमस्यासङ्कीर्णोदाहरणानि कौस्तुभोक्तरीत्योहनीयानि।

अत्र षड्विधेऽपि क्रमे आरादुपकारकत्वे तावदितिकर्तव्यताऽऽकाङ्क्षया कल्पनीयत्वात्प्रकरणकल्पकत्वम्। मन्त्रादिरूपसन्निपत्योपकारकत्वेऽपि मन्त्रादेः स्वरूपेण यागाङ्गत्वेऽपि तन्नियमादृष्टोपहितस्य तदुपजनकत्वात्करणनिष्ठयोग्यताजनकत्वरूपेतिकर्तव्यतात्वात्मकप्रकरणकल्पनावश्यकैव। अत एव तदपेक्षया तस्य दौर्बल्यम्। षड्विधे तु क्रमे उभयाकाङ्क्षालक्षणादन्यतराकाङ्क्षालक्षणस्य। तत्रापि पाठक्रमादनुष्ठानसादेश्यस्य। विधिसन्निधानस्य पुरःस्फूर्तिकत्वात्। तयोस्तु मध्ये सन्निधानस्य प्राबल्यम्। एकग्रन्थस्थत्वादित्यादि कौस्तुभे द्रष्टव्यम्॥१॥२८॥

रूपपदानाञ्च स्वार्थोपस्थितिद्वारा तन्निधाश्रुतपदान्तरकल्पनाऽनुकूलयोग्यताद्रूपलिङ्गकल्पनया च, समिधो यजति इत्थं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यश्रुतेतिकर्त्तव्यतात्ववाचिपदरूपश्रुतिकल्पनया चेतिकर्त्तव्यतात्वरूपफलितकारकत्वे प्रामाण्यम् । सम्भवति हि प्रयाजादीनामपि उपकारजनकत्वेन भावनायामन्वयः । तथाविधं प्रकरणं नाम चतुर्थप्रमाणम् ।

यत्तु पार्थसारथिना, अननुष्ठीनस्यापि कर्मादेः प्रयोगविभागारम्भकत्वदर्शनान्नेदं प्रकरणम् । अपि तु व्यापारसामान्यव्याख्यानापेक्षमङ्गीत्वम् तद्विशेषापेक्षैवेतिकर्त्तव्यताऽपेक्षा । तयैव च प्रयाजादीनां तत्त्वेनान्वय इति तदेव च प्रकरणमित्युक्तम् । तन्नामयाले निरुक्तप्रकरणस्य तद्घटिताङ्गत्वबोधकत्वानुपपत्तेः । प्रयाजादेर्भावनात्वे तस्यैव फलसम्बन्धापत्तेश्च । अस्मन्मते तु यागस्यैव भावनात्वात्तस्य च यागत्वमत्वेनैव फलार्थत्वाच्च तदापत्तिरिति वैषम्यम् । न चैवं प्रधानस्य स्वतो निराकाङ्क्षत्वात्परतराकाङ्क्षयैव प्रवृत्तौ प्रयाजाद्यङ्गत्वापत्तिः, विकृतौ च भावनाया विशेषापेक्षायां क्लृप्तोपकारैरपि सन्निहितैरुपहोमैरेव निराकाङ्क्षत्वोपपत्तेर्नातिदेशकल्पनापत्तिरित्यादि कौस्तुभे विस्तरः ॥१॥२८॥

क्रमस्थ ॥ स्थानमाङ्गत्वे पञ्चमं प्रकरणम् । तथेतिकर्त्तव्यतात्वेनायोग्ययोरनुष्ठेयोर्वाक्यार्थयोः सन्निधिः । इतिकर्त्तव्यतात्वेनायोग्यत्वं द्वेधा । क्वचिदाकाङ्क्षाविरहात् । यथा विकृतेरुपहोमादिविषये, क्लृप्तोपकारप्राकृताङ्गैरेव निराकाङ्क्षत्वात् । क्वचिद्व्यापारात्मकत्वात् । यथा अपादिमन्त्रादौ । अत्र चैकवाक्योपात्तव्रीहि-

माख्या चैवम्। ऋग्वेदादिविहितपदार्थेषु हौत्राध्वर्यवादिसमाख्या वेदे याज्ञिकैश्च प्रयुज्यते। साऽप्यङ्गत्वे प्रमाणम्। तथा हि। सर्वत्र रूढ्यावयवशक्तिकं द्विविधं पदं प्रकृतविधौ वाक्यार्थान्वय्यर्थकं तद्भिन्नञ्चेति। तत्राद्यं निर्मन्थ्येनेष्टकाः पचन्ति, प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीत्यादौ निर्मन्थ्यादिपदम्। तत्र वाक्येनैव मन्थनादीनां पाकाद्यङ्गत्वस्य सामाख्यानिको विनियोगः। द्वितीयन्तु आध्वर्यवमधीते हैत्र हौत्रमध्म इत्यादौ। तत्र विशेष्यस्य काण्डस्यैव प्रकृतविध्यन्वये जाते विशेषणस्याध्वर्युकर्तृकत्वादेः सिद्धवन्निर्देशान्यथाऽनुपपत्त्या विनियोगः कल्प्यत इति तत्र समाख्यया विनियोगः।

अत्र समाख्याऽवयवार्थयोः सम्बन्धे प्रसङ्गमर्यादया बुद्धे न तन्निर्देशान्यथाऽनुपपत्त्या स्वतन्त्रविधिकल्पना, गौरवापत्तेः। किन्त्वन्वाधानादिकाण्डमाध्वर्युं वृणीत इति वाक्यस्य चैकवाक्यतासम्पादकपदमात्र, यमध्वर्युं वृणीते सोऽग्नीनन्वादधातीति। तत्र द्वयोर्विध्योः कथञ्चिदव्येकबुद्धिस्थत्वेनैवविधस्वलक्षणापूर्वकमध्वर्यात्रिकसंव्यतात्वबोधकाकाङ्क्षारूपप्रकरणकल्पनया तद्विध्योर्मध्यावाक्यैकदेशत्वात्स्वपदसन्निधिरूप वाक्यं कल्प्यते। तेन चाध्वर्युमात्रनिष्ठयोग्यतारूपलिङ्गकल्पनया एकवाक्यतासम्पादकपदरूपश्रुतिकल्पनानुक्रमध्यः षष्ठप्रमाणत्वम्। ३।४०॥

श्रुतिलिङ्ग॥ तदेव षट्सु प्रमाणेषु निरूपितेषु अधुना विरोधे बलाबलं निरूप्यते। विरोधश्चैकस्य शेषस्य शेषिद्वये प्रमाणद्वयसत्त्वे। यथैन्द्रीमन्त्रस्य श्रुत्या गार्हपत्याङ्गत्वे लिङ्गाच्चैन्द्राङ्गत्वे। यथा वा एकस्मिन् शेषिणि शेषद्वयविनियोजकप्रमाणद्वये। यथा गार्हपत्ये श्रुत्ये-

नोपांशु चरन्तीत्यनेन सन्निहितयत्किञ्चित्पदैकवाक्यतयाऽवगतपदार्थधर्मत्वेन बाध्यते ।

वाक्यप्रकरणविरोधे च वैमृधस्य वाक्यावगतेन पौर्णमास्यङ्गत्वेन प्रकरणावगतदर्शाङ्गत्वबाधः ।

यत्तु अग्नीषोमादिपदैकवाक्यतापन्नानां इदं हविरित्यादिपदानाममावास्याङ्गदेवताप्रकाशनार्थत्वं प्राकरणिकं वाक्येन बाध्यत इत्युदाहरणमुक्तम् मूले । तच्छ्रुतिलिङ्गविनियुक्तस्य सिद्धरूपत्वेन प्रकरणाविषयस्य च सूक्तवाकस्य मुख्यप्रकरणविनियोज्यत्वप्रसक्त्यभावेऽपि अधिकाराख्यगौणप्रकरणस्यापूर्वसाधनत्वबोधनतात्पर्यग्राहकस्य प्रसक्तत्वात्तद्बाधाभिप्रायेण द्रष्टव्यम् । प्रकरणयोर्विरोधे महाप्रकरणमवान्तरप्रकरणेन ।

प्रकरणक्रमयोर्विरोधे अवेष्टियतीत्यादिविदेवनादीनां सन्निधानादभिषेचनीयाख्यसोमयागाङ्गत्वप्रसक्तौ प्रकरणाद्राजसूयाङ्गत्वम् । न चाभिषेचनीयस्यापि फलवत्त्वेन प्रकरणग्रहः । तस्य विकृतित्वेन क्लृप्तोपकारमात्राङ्गनिराकाङ्क्षस्य तदभावात् ।

न च विकृतावपि अप्राकृताङ्गानुवादेन वैकृताङ्गं वाचनिकं विधीयते यथा दृषदादि, तथापि विकृतिगताङ्गाकाङ्क्षायामनिवृत्तायामेव विधेयत्वात्तत्सन्दष्टस्य तत्पूर्वभावित्वे सति प्रधानोपकारभाविनोऽपूर्वाङ्गस्य वा प्रकरणेनैव ग्रहणोपपत्तेः विदेवनादीनामभिषेचनीयोत्तरमुक्तविधाभिषेकपूर्वभावित्वेन पाठात्प्रकरणग्रहणोपपत्तिरिति वाच्यम् । प्राकृताङ्गानुवादेन विहितस्याप्यपूर्वाङ्गकोपयोगरहितस्याकाङ्क्षायां निवृत्तायामेव विधानात् । यत्र हि

स्यार्थत्वेन निराकाङ्क्षाणामपि विकृत्याकाङ्क्षयैवातिदेशकल्पनवदिन्द्रा-द्याकाङ्क्षयैव लिङ्गस्य श्रुतिकल्पकत्वोपपत्तेः। तस्य स्थानाद्युपायान्तरेणापि स्मृतिसिद्धेर्नियमेन विकृतिवदनाकाङ्क्षत्वात्। अतः श्रुत्या गार्हपत्याङ्गत्वमेव। न च श्रुतेः करणत्वमात्राभिधायित्वेन गार्हपत्यनिरूपितत्वस्य वाक्याधीनत्वान्नायं श्रुतिलिङ्गविरोध इति वाच्यम्। तथात्वेऽपि ब्राह्मणवाक्यत्वेन मन्त्रलिङ्गापेक्षया* वचनमन्यदेवत्यः पशुरितिवत्प्रबलत्वोपपत्तेः। वस्तुतस्तु यथा न केवलया श्रुत्या विरोधो नैवं वाक्येनापि। गार्हपत्यसमीपे इन्द्रस्योपपत्तेः। अतश्चोभयविरोधत्वेऽपि प्रधानेन व्यपदेशा भवन्तीति न्यायेन श्रुतिलिङ्गविरोधोदाहरणत्वम्।

लिङ्गयोर्विरोधे मुख्यसामर्थ्येन गौणस्य बाधः। लिङ्गवाक्ययोस्तु स्योनन्ते इति सदनकरणप्रकाशकस्य पूर्वार्धस्य तस्मिन्त्सीदेत्युत्तरार्धेन सादनप्रकाशकेन तस्मिन्त्सीदेति विभागे साकाङ्क्षैकवाक्यत्वात्सकलस्य मन्त्रस्य सदनसादनयोरन्यतरत्रोभयत्र वा प्रतिष्ठापन एव वाऽस्य तस्मिन्त्सीदेति पदसन्निधिरूपेण वाक्येन विनियोगे प्रतीप्सिते, ततः पूर्वभक्तेन लिङ्गेन तत्पदाख्यातस्य मुख्यविशेष्यत्वेन स्वार्थबोधकस्य परोपसर्जनकत्वकल्पने प्रमाणाभावात्तच्छब्दस्य च सा वैश्वदेवीतिवद्वाक्यान्तरोपस्थितार्थपरामर्शकत्वेनापि चरितार्थत्वात्प्रत्येकमेव विनियोग इति।

वाक्ययोर्विरोधे उपांशुत्वस्य एवा एषा यज्ञस्येति व्यपेतयज्ञपदैकवाक्यत्वाद्दर्शभागधर्मत्वं, तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात्ते-

* लिङ्गाद्यपेक्षया,— इति ग० पुस्तके पाठः।

ख्यया बाधः। एवं व्यवहितव्यवहितादिप्रमाणस्य पूर्वेण सह विरोधे शेषानेकत्वे च उदाहरणानि कौस्तुभे द्रष्टव्यानि।

स चायं श्रुतिलिङ्गादिबाधोऽप्राप्तबाधः। तत्र चाङ्गताबोधकलिङ्गादिकस्याप्रमाणप्रतिबन्धकत्वम्। पूर्वपूर्वप्रकारेण हि अङ्गत्वेऽवधारिते निराकाङ्क्षत्वादुत्तरोत्तरेण पूर्वपूर्वप्रमाणकल्पनैव नोदेतीति। सोऽयमप्राप्तबाधः। एवं अश्वमेधीये आज्यभागौ यजतीत्यादावपि। अन्यत्र सामान्यविशेषनित्यनैमित्तिकभावादौ प्राप्तबाधः। तत्रत्य कृप्तस्य बोधकस्य विशेषविषयताप्रतिबन्धकत्वम्। सामान्यशास्त्रादेर्हि विशेषशास्त्राद्विना पदहोमादिविषयतामात्रं प्रतिबध्यते। न तु सामान्यशास्त्रमपि। तस्य कृप्तत्वेनाकल्पनीयत्वात्। होमान्तरेऽव्यवस्थापनीयाभावापत्त्या मिथ्यात्वस्यापि कल्पयितुमशक्यत्वाच्च।

अतएव येन सामान्यशास्त्रमेव पूर्वमालोचितं तस्य विशेषादर्शनजनितभ्रम एव विशेषविषयविषयको विशेषशास्त्रेण बाध्यते। एवं यत्रापि न गौ पशौ प्रकरोतीत्यादौ शास्त्रप्राप्तस्य निषेधस्तत्रापि प्रापकशास्त्रस्य यद्यपि निषेधस्य प्राप्तिसापेक्षत्वेनोपजीव्यत्वादत्यन्तबाधानुपपत्तेर्विशेषविषयत्वमावश्यकम्, तथापि तत्र विकल्पाङ्गीकारात्तदभावपक्षे विशेषविषयत्वप्रतिबन्धाप्रोक्तलक्षणव्याप्तिः। यथा च तत्र रागप्राप्तनिषेधवत् भ्रान्तिप्राप्तस्य बाधमङ्गीकृत्य न विकल्पस्तथा कौस्तुभे द्रष्टव्यम्। वक्ष्यते चात्रापि दशमे। इत्थं सिद्धं बाधस्य द्वैविध्यम् ॥ ७ । [illegible] १ ॥

अहीने वा ॥ एवं विरोधे बलाबलं निरूप्याधुना विरोध एव

प्राकृतकार्यापन्नतया वैकृताङ्गस्य विधानं यथौदुम्बरत्वशरादेस्तस्यैवानिवृत्ताकाङ्क्षाया विधानम् । तत्सन्दंशस्यैव च तत्पूर्वभाविनो वा प्रधानोत्तराङ्गस्य विकृतिप्रकरणेन ग्रहणम् । अभिषेकस्य तु प्राकृतकार्यापन्नत्वाभावात् तत्पूर्वपठितानां विदेवनादीनामभिषेचनीयप्रकरणग्राह्यत्वोपपत्तिः ।

वस्तुतस्तु अभिषेकस्यापि स्वतन्त्रोत्पन्नस्य प्रकरणाद्राजसूयाङ्गत्वावगतेर्माहेन्द्रस्तोत्रे प्रत्यभिषिच्यत इत्यत्र प्रतिशब्दयोगेन कालार्थसंयोग इति वक्ष्यते। अतो विदेवनाद्यभिषेकान्तानां सर्वेषामेव सन्निधानादिनाऽभिषेचनीयाङ्गत्वप्रसक्तौ प्रकरणेन तद्बाधः । न च राजसूयस्यापि प्रत्येकं विकृतित्वात्प्रकरणाभावः । पवित्रादारभ्य क्षत्रस्य धृति यावद्राजसूयत्वधर्मपुरस्कारेण वाचनिकाङ्गान्तानामसन्दष्टविदेवनादीनां प्रकरणग्राह्यत्वोपपत्तेः । एवं प्रकरणस्य क्रमान्तरैरपि उदाहरणान्यूह्यानि । एवं क्रमयोर्विरोधे सन्निधानेन याज्याद्वयस्य काम्येष्टिप्रदेयाङ्गत्वे अनियमेन प्रसक्ते यथाक्रमं पाठादाद्यस्याद्याङ्गत्वम् ।

क्रमसमाख्ययोर्विरोधे पौरोडाशिकसमाख्याते काण्डे समाम्नातस्य शुन्धध्वमिति मन्त्रादेः सन्निधानात्सान्नाय्याङ्गत्वम् । न च महाधिकारेण सन्निधिबाधः । तस्यापि वाचनिकाङ्गसन्दंशत्वेन प्रसक्तत्वात् । न चैवं तस्य प्रकरणतापत्तिः । मन्त्रस्य सिद्धरूपत्वेन लिङ्गविनियोज्यत्वेन च प्रकरणाविषयत्वात् । सन्निधानस्यापि समाख्यावदपूर्वसाधनत्वलक्षणतात्पर्यग्राहकत्व एव बलाबलं न तु विनियोगे । तत्र उदाहरणान्तरं मृग्यम् । एवं समाख्ययोर्विरोधे आध्वर्यवमिति सामान्यसमाख्याया याजमानमिति विशेषसमा-

तथात्वे चाद्युदात्तश्चेति सूत्रात् प्रत्ययादेरीकारस्योदात्तस्वर-सिद्धिः।

न चैकारस्येनादेशावयवत्वात् कथं प्रत्ययावयवत्वमिति वाच्यम्। प्रथमादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति उक्त्या प्रत्यय-स्वरसिद्ध्यर्थं ईनादेशस्यापि प्रत्ययोपदेशकालत्वरूपोपदेशिवद्भावस्य विहितत्वात्। अतो नात्र नञ्समास इति चेत्।

तथापि प्रकरणानुरोधादहीनशब्दस्य ज्योतिष्टोमे बहुदिन-कालसाध्यत्वेन गौणतयोपपत्तेः। वस्तुतस्तु अह साध्यक्रतुसमूहत्वस्य प्रकृततावच्छेदकस्य ज्योतिष्टोमेऽप्यभ्याससमूहात्मके सत्त्वादहीनशब्दस्य मुख्यस्यैवानुवादत्वोपपत्तिरिति भाति।

आस्तां तावदहीनपदं, चकार एव तावत् भिन्नातिरिक्त-सङ्ख्यायाः साधनत्वाभावमनुवदन् द्वादशत्वेन विकल्प्य समूहे। किञ्चैव प्रकरणादेव भिन्नद्वादशत्वयोर्ज्योतिष्टोमसम्बन्धोपपत्तेः साक्षादहीन-शब्दयोर्द्वयोरपि वैयर्थ्यप्रसङ्गः। अस्मन्मते तु एवेन अस्य प्रमाय-मानत्वेन खण्डकर्मणः खल्वेव सङ्ख्योक्तेति औचित्येन स्तुतिपरतया साक्षशब्दस्य न वैयर्थ्यम्। किञ्च द्वयोः सङ्ख्ययोरेकार्थत्वेन विधौ शब्द-भेदो न युज्यते। अतोऽहीनपदं साक्षादर्थान्तरपरमित्यविवादम्।

युक्तञ्चैतत्। तस्य समूह इत्यनुवृत्तिसहितया 'अह्नः' खः क्रताविति स्मृत्या वैदिकप्रयोगाच्च अहःसमूहसाध्यक्रतुविशेषत्व-स्यैव सत्रादिव्यावृत्तस्य प्रतिचोदनाचोदितसुत्यासमुदायात्मकत्वस्यैव योगरूढ्याऽहीनपदप्रकृततावच्छेदकत्वप्रतीतेर्न द्वादशत्वस्य ज्योतिष्टोमे निवेशसम्भव। अतश्चाहीनसम्बन्ध्युपसदुद्देशेन द्वादशत्वविधिः। यद्वौ-

क्वास्ति क्व नास्तीति चिन्तार्थ उत्तरः प्रपञ्चो यावदध्यायसमाप्ति। ज्योतिष्टोमे उपसदो विधाय तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येति श्रुतम्।

तत्र द्वादशत्वम् किं द्वादशाहे निविशते प्रकरण एवेति चिन्तायां, त्रित्वस्य तावदुपसदनुवादेन विहितस्य वाङ्नियमन्यायेन स्वापूर्वसाधनीभूतोपसदर्थत्वादुपसदाञ्च प्रकरणाज्ज्योतिष्टोमसमाचाराम्नानावगतेः साह्नपदं श्रुत्या समाप्यमानत्वात्तदनुवादमात्रं न तूद्देश्यविशेषणं, वाक्यभेदादिप्रसङ्गाच्च। अतश्च तद्वदेव द्वादशत्वमपि तदनुवादेन विधीयमानमुपसदर्थमेव।

न च तस्याहीनोद्देशेन विधिः। उपसदुपसर्जनत्वेन श्रुतस्य तस्याहीनसम्बन्धानुपपत्तेः। तस्याहत्या द्वादशत्वोपपत्तेश्च। द्वादशाहप्रकरणपठितवाक्यान्तरेण तस्य तत्र प्राप्तत्वाच्च। अतोऽस्यापि त्रित्वेन विकल्पः। अहीनपदं न हीयत इत्यादिव्युत्पत्त्या नञ्समासमङ्गीकृत्य ज्योतिष्टोमानुवादकम्। सर्वे ह्यन्ये क्रतवो विकृतित्वादेनमपेक्षमाणा न जहति।

अथ नायं नञ्समासस्तथात्वे तस्य तत्पुरुषत्वात् तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः इति सूत्रेण प्रकृत्या पूर्वपदमित्यनुवृत्तिसहितया अव्ययात्मकस्य नञः पूर्वपदस्याद्युदात्तस्य प्रकृतिस्वरत्वविधानादाद्युदात्तत्वापत्तेः। अपि तु मध्योदात्तत्वादह्नः खः क्रतौ इति सूत्रेण तस्य समूह इत्यनुवृत्तिसहितया अहः शब्दस्य क्रतुसमूहवाचि खप्रत्ययान्तत्वविधानात्तस्य चायनेनीयीयियः फढखछघां प्रत्ययादीनामिति सूत्रेणादेशविधानात् अहःशब्दः खप्रत्ययान्तः।

यदि [illegible] षष्ठी, तदाऽधिकारित्वाख्यसम्बन्धानुवादिका सती स्ववैयर्थ्यपरिहारार्थं पदद्वयेऽपि लक्षणामङ्गीकृत्य लाघवाद् दिनयजमानत्वयोरेकं व्यापकवृत्तिनिमित्तत्वं प्रतिपादयति। विशेषणविशेष्यभावे विनिगमनाविरहात्। एवं बहुभ्यो यजमानेभ्य इति तादर्थ्यचतुर्थ्याऽपि अधिकारित्वसम्बन्धानुवादिकया उक्तविधे निमित्तत्वे लक्षणा। अतश्च नान्यतराविवक्षाप्रसङ्गः। निमित्ते च प्रतिपदुद्देशेन मन्त्रविधानेऽपि विजातीयत्वान्नानेकोद्देश्यता। प्रकरणाद्वा प्रतिपत्सम्बन्धलाभ इति पक्षद्वयेऽप्यविवादम्।

तद्विहेमौ मन्त्रौ ज्योतिष्टोम एव निविशेते उत द्विबहुयजमानके कुलायाहीनादाविति चिन्तायाम्। प्रकरणाविरोधात् प्रकृत एव निवेशः। न च तत्र निमित्ताभावः। आख्यातेन वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिना उपादेयकर्तृविशेषणत्वेनोक्तस्य विवक्षायामपि नित्यत्वेन ज्योतिष्टोमे यथाशक्त्युपबन्धस्य वक्ष्यमाणत्वाद् यद्येको न शक्नुयात् तदा द्विबहुयजमानकत्वप्राप्तेः प्रतिपद्विधानसम्भवात्। अथवा यजमानशब्दस्य यागकर्तृमात्रवचनस्य पत्न्यामपि सम्भवादाद्यवाक्ये तावत् स्त्रीलिङ्गत्वे बाधकाभावात् पत्नीद्वित्वे स मन्त्रः। द्वितीयवाक्येऽपि पात्राधिकरणन्यायेन लिङ्गानुरोधेन प्रकरणबाधानुपपत्तेर्यथानुप्राप्तेन पुंलिङ्गस्य स्त्रीत्वपरत्वावगतेः पत्नीबहुत्वे द्वितीयो मन्त्रः। नित्यास्तु प्रतिपत्त्येक इति प्राप्ते।

नित्यत्वेऽपि ज्योतिष्टोमस्य नैकत्वे यथाशक्तिन्यायविषयता। सत्पत्न्यादिवाक्येषु समानाभिधानश्रुत्या भावनायामन्वितस्य तस्या-मारब्धस्याशक्तौ दक्षिणापरिमाणाद्यङ्गान्तरबाधेनाप्येवानुपादानात्।

स्थले च परस्परसम्बन्धस्य प्राचीनमते व्युत्पन्नत्वान् विशिष्टोद्देशे वाक्यभेदः।

वस्तुतस्तु, अहीनोद्देशेनानिर्देशप्राप्तेः पूर्वप्रवृत्त्या द्वादशोपसत्त्वमैवानेन वाक्येन द्वादशत्वप्राप्तिफलकं, तां चतुर्भिरितिवद्विधीयते। द्वादशाहप्रकरणस्थवाक्यान्तरं तु शाखान्तरीयतया सवचनापरतया न विरुध्यते इति भाष्यकाराभिप्रायः।

वस्तुतस्तु द्वादशाहप्रकरणस्थवाक्यस्य सत्राहीनोभयसाधारणत्वादेवाहीनेऽपि द्वादशत्वप्राप्त्युपपत्तेरेकवाक्यतालाभाय प्रकरणपाठार्थवत्त्वाय चौचित्येन चित्वविधेरेवायमर्थवादः। अथवा कर्मणो महती सद्योचिता न तु प्रकृत इति च स्मृतिः। अतो वाक्येन प्रकरणं बाधित्वा द्वादशत्वस्याहीनसम्बन्धावगतेर्न तेन ज्योतिष्टोमे द्वादशत्वम्। सूत्रे तु षष्ठ्या भाक्तश्रुतित्वमादाय श्रुतिप्रकरणविरोधोपन्यासइति द्रष्टव्यम् ॥१॥४२॥

द्वित्वबहुत्व॥ ज्योतिष्टोम एव उपासै गायता नर इति नित्यां प्रतिपदं विधाय, युवं हि स्थः स्वःपती इति दयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यइति श्रुतम्।

तत्रावश्यको दयोर्यजमानयोरिति यदि सप्तमी, तदा सा निमित्तस्वरः। यद्यपि च पृथक् विभक्तिश्रवण, तथापि हविरार्त्यधिकरणन्यायेन पाक्षिकत्वाभावेन प्रत्येक निमित्तत्वापर्यवसानात् प्रधानभूतनिमित्तत्वानुरोधेन मिलितयोरेव द्वित्वावच्छिन्नयजमानत्वावच्छिन्नयोर्निमित्तत्व प्रतिपाद्यते।

एवञ्च वाक्येन प्रकरणबाधात् पत्नीसंयाजानां पशुङ्गत्वमात्रप्रतीतावपि आज्येन पत्नीः संयाजयन्तीति वचनस्य निर्विषयत्वापत्तेः प्रकरणबाधायोगात्तेनारादुपकारकतया दर्शपूर्णमासाङ्गत्वावगमेऽप्यनेन वचनेन सन्निपत्योपकारकतया अग्नीषोमीयपशुयागाङ्गतया विधिर्नानुपपन्नः ।

न च आज्यस्य परप्रयुक्तस्यानुनिष्पन्नत्वस्य लोकेऽपि तस्याव्यभिचारित्वात्सम्बन्धाभावेन कथं यागीयत्वोपस्थितिः । अग्नीषोमीयप्रकरणे श्रुतेन आज्येन पत्नीः संयाजयन्तीति वाक्यान्तरेण प्रकृतापूर्वसाधनीभूताज्योद्देशेन पत्नीसंयाजविधायकेन यागसम्बन्धोपस्थितौ बर्हिः स्तृणातीतिवदनारभ्याधीतेऽप्यस्मिन् क्रतुसम्बन्धावगमोपपत्तेः ।

यत्तु कैश्चिदतिदेशादेव पत्नीसंयाजानां पशुयागसम्बन्धावगमात् प्राकरणिकं वाक्यं तद्धर्मककर्मान्तरविधायकं पूर्वपक्षे इत्युक्तम् । तदतिदेशेन पत्नीसंयाजानामारादुपकारकविधया पशुयागसम्बन्धावगमेऽपि तात्पर्यग्राहकाभावे अनारभ्याधीते वाक्ये आज्यस्य तदीयत्वोपस्थितौ प्रमाणाभावादतिदेशेन सन्निधाने प्रकरणान्तराभावेन कर्मान्तरत्वानुपपत्तेश्चोपेक्षितम् । तस्माद्वाक्येन प्रकरणं बाधित्वेदं विधानं अग्नीषोमीय उत्कृष्यत इति प्राप्ते ।

आज्यशब्दस्य घृतवाचित्वेऽपि उत्तरार्धादिशब्दवत् सम्बन्धिकत्वाभावात् लोकसिद्धद्रव्यस्याज्यस्यैवान्यवत् पत्नीसंयाजोद्देशेन विधिसम्भवे तृतीयाया लक्षणाङ्गीकरणे प्रमाणाभावः । अतिदेशात् प्राप्तानां पत्नीसंयाजानामारादुपकारकत्वबाधेन पशु-

किञ्च यत् कृतिसाध्यत्वेनानुष्ठेयतया प्रसक्तं तच्चैव यथाप्राप्त्युपपन्नो त्वनुष्ठेये कालादौ। अतश्च तद्देवास्यापि न तन्न्यायविषयतेति न प्रकृते यागे द्वित्वबहुत्वे। न च यजमानशब्दः पत्नीपरः, पुंस्येव प्रचुरप्रयोगेण प्रसिद्धावगमेन लक्षणायां प्रमाणाभावात्। यजमानेभ्य-इति पुल्लिङ्गस्य प्राप्ता इत्यस्य मे * * मित्र* निषिद्धत्वेनागतिक-न्याययानुशासनाङ्गीकारानुपपत्तेश्च। अतश्च वाक्येन प्रकरणबाधा एव च, एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्, एको द्वौ बहवो वा यजेरन्नित्यादावपि कुलायाहीनादिषु द्वित्वबहुत्वविधानं तत्रैवास्योत्कर्षः। न चात्र तत्सदृशपदार्थाभावः। प्रतिपदसम्बन्धेनैव सामान्यतः क्रतुसम्बन्धेऽवगते निमित्तवशेन तद्विशेषोपस्थितौ बाधकाभावात् ॥३।४२॥

जाघनी॥ दर्शपूर्णमासयोः पत्नीसंयाजानामन्तरप्रकरणे, जाघन्या पत्नीः संयाजयन्तीति श्रुतम्। तत्र किमनेन वाक्येनाग्नीषोमीय-पशुनिष्पन्नजाघन्युद्देशेन पत्नीसंयाजा विधीयन्ते। ततश्चैतस्य विधानस्य प्रकरणादुत्कर्षः। उत पत्नीसंयाजोद्देशेन जाघनीद्रव्येण विधीयत इति चिन्तायाम्।

जाघनीशब्दस्योत्तरार्धादिशब्दवदेकदेशद्रव्यवाचित्वेन जाघन्या† परप्रयुक्तत्वावगमात् प्रयोजनवत्त्वावगमेन प्रयाजशेषवदुद्देश्यत्वावगते-स्तृतीयया द्वितीयार्थलक्षणामङ्गीकृत्य पत्नीसंयाजा एव तदुद्देशेन विधीयन्ते। एवञ्च द्वितीयविधिप्रकाराङ्गीकरणाल्लाघवम्। इतरथा तृतीयविधाप्रकारापत्ते।

* सर्वत्रैवमेव पाठः।

† इत्यमेव पाठः सर्वत्र। तृतीयविधि,– इति तु प्रतिभाति।

दीर्घस्य यजमानस्य सोमो दीर्घसोम इत्येव षष्ठीतत्पुरुषमपि प्रकरणानुरोधेनाङ्गीकृत्य यजमानदैर्घ्ये निमित्ते मन्तर्दनविधानम्।

यदि तु निषादस्थपत्यधिकरणन्यायेन कर्मधारयस्यैव न्याय्यत्वात् यजमानदैर्घ्येण च फलकविदारणप्रसङ्गाद्वारकत्वेन मन्तर्दनश्रुतेरपप्रयत्नेन एतया इत्यर्थवादानुपपत्तेर्दीर्घत्वावी सोमस्येति कर्मधारय एवाङ्गीक्रियते। तथापि ज्योतिष्टोम एव वक्ष्यादिसङ्गान्तरयुक्ते प्रदानविवक्षा प्रदेयसोमविवृद्धेरावश्यकत्वात् दीर्घसोमत्वोपपत्तेर्वाक्यप्रकरणयोरविरोधात्त्विदेव।

न च प्रदानविवृद्धेस्तोयादिना सम्पादनम्। सोमद्रव्यकस्य यागस्य विना वचन द्रव्यान्तरसहत्वेन सोमेन करणायोगात्। न च त्रिपर्वदर्भमुष्टिलक्षणसोमपरिमाणबाध। सूक्तदीर्घपर्वसोमग्रहणेन तद्बाधाभावात्। अत एव सोमपदेन यागलक्षणाऽभावात सोमदीर्घपर्वत्वमेव मन्तर्दने निमित्तमित्यपि शक्यं वक्तुम्।

वस्तुतस्तु। त्रिपर्वदर्भमुष्टिपरिमितसोमग्रहणोत्तरमवशिष्टान् घृनुपसमूहतीत्युपसमूहनविधानात्तत्र चार्थवादे यदे सावनेव सोम आप्यायक मिमीते यजमानस्यैव त्वात्रापि सद्यात्ना प्रजास्यस्येत्यवशिष्टानघृनुपसमूहतीति पूर्वोक्तमानमिन्द्रयोस्तराद्रोहनत्वावदपेक्षितपरत्वप्रतीते कपिञ्जलाधिकरणन्यायप्राप्त्या परिमाणाभावात् प्रदेयविवृद्धि सुलभैव।

न चैवमपि अग्निष्टोमसंस्थाया अङ्गत्वादन्यासा काम्यासंस्थाना सन्यानाञ्च विकृतित्वेन स्वतःप्रकरणाभावात् ज्योतिष्टोमे च प्रदानवृद्ध्यभावेन प्रदेयवृद्ध्यभावात् कथं वाक्यप्रकरणयोरविरोध

प्रयुक्तसोमविरुद्धिकृतमिति भवतोऽप्यविवादम्। विरुद्धग्रहणानि च सप्ताङ्गानि वचनात्तु ज्योतिष्टोमाङ्गानि। अतश्च दीर्घसोमत्वस्य ज्योतिष्टोमसम्बन्धाभावाद्विकृतिमात्रपरत्वमिति।

न चोक्तग्रहणानां ज्योतिष्टोमाङ्गत्वाभावेऽपि संस्थाद्वारा तत्सम्बन्धसत्त्वात्तस्य दीर्घसोमत्वोपपत्तिः। सर्वतोमुखादौ पूर्वादिदिक्षु अग्निष्टोमादिनानासंस्थाके दिगन्तरे दीर्घसोमत्वस्य सत्त्वादग्निष्टोमसंस्थाकेऽपि मन्त्रदर्शनापत्तेर्यद्ग्रहणविरुद्धिप्रयुक्तविरुद्धप्रदेयकत्वं यत्प्रयुक्तविरुद्धप्रदेयकत्वमेव वा यत्र, तत्र तदपूर्वसाधनीभूतफलकसंस्कारकतया मन्त्रदर्शनविध्यवगमादुक्तविरुद्धेश्च संस्थाप्रयुक्तत्वेन ज्योतिष्टोमप्रयुक्तत्वाभावात् तदङ्गत्वेन मन्त्रदर्शनविध्यनुपपत्तेर्वाक्येन प्रकरणं बाधित्वोक्तविधसर्वविकृतावेव निवेशः। न तु संस्थास्वेव, तासां विकृतित्वेन प्रकरणाभावादिति।

अत एव सन्नूर्यादिति धातौ. अकर्मकत्वादनुपक्तविनीयाल्पदेन फलकस्यैव संस्कार्यत्वावगमाद्दीर्घसोमयोरुद्देश्यत्वतद्विशेषणत्वयोरसम्भवेन निमित्तत्वमेव। अत एव नायं 'यज्ञसोऽयं वा सोमपदेन यागमस्यायत्र स्वराम्नातोऽपि तत्पुरुषः। अतश्च सोमेचोक्ता + + तत्पुरुषः* समासत्वाच्च न निमित्तेऽपि विशिष्टोद्देशे वाक्यभेदः॥३।६।११॥

सत्राह्युक्त ॥ अनारभ्याधीत. प्रवर्ग्यं यमवत्सं प्रवृणक्तीति श्रुतः। तस्य च पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्तीति ज्योतिष्टोमाङ्गत्वेन विनियोगः। अव्यभिचारिक्रतुसम्बन्धप्रवर्ग्यादिक्रमसम्बन्धादेन तद्-

* इदमेव पाठ सन्देहं।

इति वाच्यम् । काम्यसंख्यास्तु ग्रहणविवृद्धा आश्रयभूतज्योतिष्टोमाभावे विवृद्धेरावश्यकत्वात् संख्यानां चतुर्णामपि स्वतः प्रकरणाभावेऽपि च ज्योतिष्टोमस्य सर्वत्रानुस्यूतत्वात् काम्यसंख्याकज्योतिष्टोमप्रयोगे संमर्दनविधानेन प्रकरणानुग्रहोपपत्तेः । अत एवाग्निष्टोमसंख्याकज्योतिष्टोमप्रयोगेऽसंमर्दनं प्रदानविरहाभावादिति न विकल्पोऽपि । अत एव च दौर्बल्यानुयोगिनः काम्यसंख्याकज्योतिष्टोमस्य प्रतियोगिनश्च नित्यसंख्याकज्योतिष्टोमस्य प्रकरणादेव लाभादिति लाघवम् ।

न चेतरसंख्याकज्योतिष्टोमस्यापि प्रकरणे अङ्गीक्रियमाणे एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वा अथान्येन यजते गर्तपत्यमेव तद्भवतीत्यत्रापि एतच्छब्देनेतरसंख्याकस्य ज्योतिष्टोमस्य ग्रहणापत्तेरग्निष्टोमसंख्याकस्यैव प्रकरणात् ग्रहणं वक्ष्यमाणं विरुध्येतेति वाच्यम् । ज्योतिष्टोमत्वावच्छेदेनैव फलवत्त्वेन प्रकरणाङ्गीकारात् । अग्निष्टोमसंख्याया अङ्गत्वेनेतराङ्गवत्प्रकरणावच्छेदकत्वानुपपत्तेश्च । एतच्छब्देन तु ज्योतिष्टोमत्वावच्छिन्नस्योक्तावपि अन्यशब्देन तद्विकृतिमात्रवाचनेन संख्याप्रयुक्तत्वात् तासामपि ज्योतिष्टोमोपकारकाङ्गविधिप्रतीतेरर्थादग्निष्टोमसंख्याकस्यैव प्रथम करणोपपत्तेः । अतो वाक्यप्रकरणयोरविरोधात् प्रकरण एव संमर्दनस्य निवेश इति प्राप्ते ।

भाष्यकारेण तावदिष्टापत्त्यैव सिद्धान्तितम् । पूर्वपक्षश्चायप्रकारद्वयेनैव कृतः । वार्त्तिककारेण तु विकृतिमात्रे विवृद्धस्तोमके निवेश इत्युक्तम् । तत्रायमाशयः । दौर्बल्यं तावत् ग्रहवद्विवृद्धि-

प्रत्येकशक्त्यैवार्थबोधोपपत्तौ अतिरिक्तशक्तिकल्पनायां प्रमाणाभावात् प्रथमशब्दस्य चाप्रवृत्तप्रवर्त्तनविषयवाचित्वादाद्यप्रयोगपरत्वावगतेर्यज्ञशब्दस्य च लक्षणया प्रयोगपरत्वं प्रकरणाज्ज्योतिष्टोमरूपयज्ञपरत्वमेव चाङ्गीकृत्य प्रथमयज्ञपदेन ज्योतिष्टोमप्रथमप्रयोगोऽभिधीयते। स चाग्निष्टोमसंस्थाकस्य ज्योतिष्टोमस्य प्राथमिकन्यायेन प्रथमं यजमानोऽतिरात्रेण यजेतेति वचनादतिरात्रसंस्थाकस्य च। अत उभयत्राप्यनेन वचनेन प्रवर्ग्यस्य प्रतिषेधः पर्युदासो वा। न तु विकृत्यन्तरे। तयोरुपदेशातिदेशाभ्यां तत्प्राप्तेः।

न च ज्योतिष्टोमे द्वितीयादिप्रयोगापेक्षया प्राथम्यस्य विवक्षितत्वाद्विकृतावपि तद्द्वितीयादिप्रयोगापेक्षया प्राथम्यस्य सत्त्वात् कथं न तत्प्राप्तिरिति वाच्यम्। प्राथम्यस्य निरूपकापेक्षायां द्वितीयादिप्रयोगस्य निरूपकत्वाकल्पनात्। एष वाव प्रथमो यज्ञो यज्ञानामिति वचनेन ज्योतिष्टोमविकृतिमात्रस्यैव तदवधारणात्। अत एव प्रथमप्रयोगविषयोऽपि ज्योतिष्टोम एव बोध्यः।

तथाच प्रथमयज्ञशब्दो वाक्यशेषाद्वैदिकप्रयोगाच्च निरूढलक्षणया सोमान्तरनिरूपितप्राथम्यवत्प्रयोगविषयज्योतिष्टोममेवाभिधत्ते। अन्यथा स्व-स्व-द्वितीयादिप्रयोगनिरूपितप्राथम्यवत्प्रयोगविषययज्ञमात्राभिधाने, आहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशा सत्त्रमासीरन्नित्यादौ सत्त्रे यज्ञमात्रोत्तरकालताऽऽपत्तेः। अत उक्तद्विविधज्योतिष्टोमप्रथमप्रयोग एव प्रवर्ग्यप्रतिषेधः।

वस्तुतस्तु। नायं प्रतिषेधस्तथात्वे न तौ पशौ करोतीतिवदतिरात्रप्रथमाहारेऽपि विकल्पापत्तेः। न च क्रियायाः स्वरूपेणोद्देश्य-

पस्थिते । न चोपसद्गुणत्वमेव किं न स्यादिति वाच्यम् । उपसत्-पदस्य पुरस्तात् कालप्रतियोगित्वेन स्वार्थोपस्थापकस्योद्देश्यसमर्पक-स्याभावात् । उपस्थितत्वात् तद्वाचकपदान्तरकल्पनयोद्देश्यत्वाङ्गीकारे तु उपसद्रूप फलवत्त्वज्ञानार्थे ज्योतिष्टोमोपस्थितेरावश्यकत्वात् लाघवेन तदर्थत्वोपपत्तेः । कौषितकिब्राह्मणे* प्रकरण एव प्रवर्ग्याम्नानाच्च । तच्च च, न प्रथमयज्ञे प्रवृञ्ज्यादिति श्रुतम् ।

तत्र प्रथमयज्ञपदेन सर्वस्य प्रथमस्य ज्योतिष्टोमोऽभिधीयते उत तदीयप्रथमप्रयोगमात्रमिति चिन्तायाम् ।

प्रथमयज्ञशब्दो ज्योतिष्टोमनाम, एष वाव प्रथमो यज्ञो-यज्ञानां यज्ज्योतिष्टोम इति सामानाधिकरण्यात् । तस्य प्रथमं प्रयुज्यमानत्वेन प्रवृत्तिनिमित्तत्वाच्च । यद्यपि न संस्थानामन्यपदे-नाभिधानात् तासु ज्योतिष्टोमोत्तरकालत्वविधानात् न सर्व-संस्थाकज्योतिष्टोमस्य प्रथमं प्रयुज्यमानत्वम् । तथापि ज्योतिष्टोम-त्वसामानाधिकरण्येन तावत् तदस्तीति प्रवृत्तिनिमित्तत्वविधान ।

अतो वाक्यात् प्रकरणाच्च ज्योतिष्टोमत्वावच्छेदेनैवायं प्रतिषेध पर्युदासो वा । ज्योतिष्टोमभिन्ने प्रवृणक्तीति । अन्यथा विकल्पापत्तेः । यच्चाग्निष्टोमे प्रवृणक्तीति वचनं तत्पर्युदासप्रतिप्रसवार्थम् । तदपि च कामं तु योऽनूचानः श्रोत्रियः स्यात् तस्य प्रवृञ्ज्यादि-त्यनेनोपसंह्रियते । तेनानूचानस्य श्रोत्रियस्याग्निष्टोमसंस्थाकज्योति-ष्टोमे नित्यं करणम् । अन्यज्योतिष्टोमेषु न करणम्† । चितिषु नित्यं करणमिति प्राप्ते ।

---

* कौषीतकिब्राह्मणे, इत्यत्र पाठ † इत्ययमेव पाठः सर्वत्र ।

प्रथमप्रयोगविषयतैव । अनेन च काममित्यनूचानवाक्योपसंहारः । तेनाग्निष्टोमस्याद्यप्रथमप्रयोगे अनूचानस्य नित्यकरणम् । तथा श्रोत्रियस्यापि । अनूचानो वेदाध्यापकः । तेन श्रोत्रियत्वेऽप्यनयो-र्निवृत्तिः । श्रोत्रियः प्रकर्षेण वेद तदर्थज्ञः । कामपदेन प्रकर्षाभिधानात् । तस्येत्येकपदेनोभयोः कर्त्रोर्विधानाच्च न विधेयानेकत्वम् । तदन्येषामग्निष्टोमप्रथमाहारेऽपि नित्यमकरणम् ।

यत्तु वार्त्तिके अनूचानादेर्विकल्पोऽन्येषां नित्यमकरणमित्युक्तम् । तत्प्रौढिमात्रम् । अत एव पार्थसारथिना अनूचानादेर्नित्यमेव प्रयोग इत्युक्तम् । यदि तु तदेव समर्थनीयमित्याग्रहस्तदा कामपदेन विकल्पाभिधानादग्निष्टोमवाक्यस्य च तेनोपसंहारादनूचानादेर्विकल्प इत्येव समर्थनीयम् । सर्वथा अतिरात्रप्रथमाहारे प्रतिप्रसवाभावान्नित्यमेवाप्रयोगो विकृतौ तु प्रथमप्रयोगे नित्य करणमिति स्थितम् ॥१॥४६॥

पौष्णम् ॥ दर्शपूर्णमासप्रकरणे, पूषा प्रपिष्टभागोऽदन्तको हि स इति श्रुतम् । तत्र किं दर्शपूर्णमासयोरेवाङ्गत्वेन कर्मान्तरविधिरुत पूषदेवत्ययागे पेषणमात्रविधिरिति चिन्तायाम् । न तावद्यागमन्त्र-लक्षितयागोद्देशेन पेषणविधिः । एकप्रसरताभङ्गापत्तेः । पूषपदेन विशेषणे वाक्यभेदाच्च । अश्रुतयागार्थद्रव्योपसर्जनपेषणस्य यागान्वयानुपपत्तेश्च । अत एव न पूषपदमेव प्रकृत्यर्थस्य लक्षितपूषदेवत्ययागस्य वोद्देश्यतापरम् । पूष्णोऽव्यभिचरितक्रतुसम्बन्धाभावेन क्लृप्तोपस्थितौ प्रमाणाभावाच्च । अतो गुणद्रव्यदेवताविशिष्टकर्मान्तरविधिरेवायमिति प्राप्ते ।

सम्बन्धित्वेन वा निषेध एव कल्प्यो यथोक्तस्थले। यत्र तु कारक-निषेधो यथा रात्रौ श्राद्धं न कुर्वीतेत्यादौ, तत्र निषेधस्य कारक-मात्रविषयत्वेन क्रियाविषयत्वाभावात् क्रियाविषयविधिविकल्पा* पादकत्वानुपपत्तिः। प्रकृते च प्रथमयज्ञशब्दस्य नोद्देश्यत्वपरत्वम्। अपि तु मध्यं प्रातःसवन इति वदधिकरणकारकत्वम्। अतश्च न विकल्पापादकत्वापत्तिरिति केषाञ्चिदुक्तं युक्तमिति वाच्यम्। कारक-स्यापि प्रथमप्रयोगाधिकरणत्वस्य विधितः प्राप्तौ न्यायतौल्येन प्रथमप्रयोगाधिकरणत्वस्यैव विकल्पापत्तेरावश्यकत्वात्। अत एवा-क्षेपेण यत्किञ्चित्कालप्राप्तौ रात्र्युपादानस्यैच्छिकत्वेन रागप्राप्ता वैधत्वाभावाच्च तन्निषेधस्य विकल्पापादकत्वम्। प्रकृते तु प्रथम-प्रयोगाधिकरणत्वं नैच्छिकं प्रतिप्रधानं गुणान्वयस्य वैधत्वात्। अत-स्तन्निषेधोऽपि विकल्पापादक एव।

वस्तुतस्तु। प्रथमप्रयोगस्य उद्देश्यत्वमेव शास्त्रदीपिकायामुक्त-मिति न किञ्चिदेतत्। अतो नानूयाजेष्विति पर्युदास एवाय-मनारभ्यवाद्वाक्यशेषः। उक्तविधप्रथमप्रयोगभिन्ने सङ्ख्यादिति। तन्न प्रापकप्रमाणाभावात् प्रथमप्रयोगे अकरणप्रसक्तावग्निष्टोमे मद्यक्रौति वचनं वस्तुतोऽत्यन्ताप्राप्तप्रापकमपि प्रतिप्रसवफलकं यदग्निष्टोमसंस्थाकाले निमित्ते प्रथमप्रयोगेऽपि नित्य प्रवर्ग्यविधा-नार्थम्। न तु विकल्पेन। विकल्पे प्रमाणाभावात्।

अस्य च नान्यविषयता। सामान्यविधित एव सर्वत्र प्राप्तत्वादिति

---

* विकल्पा,—इति ख. ग॰ पुस्तकयोः पाठः। एवं परत्र।

चरावेवेति चिन्तायाम् । अविशेषाद्दन्तकलहेतुत्वाच्च सर्वत्रेति प्राप्ते ।

पुरोडाशे तावत्पाकात्पूर्वं पेषणस्य प्राप्तत्वादेव विधानं व्यर्थम् । तदुत्तरं तु पुरोडाशपदवाच्यत्वात्तनिविनाशापत्तिः । एवं पशुचरु-धानादावपि । तेषामप्याकारविशेषविशिष्टानामेवाभिधानात् । न चोभय-थावदानोत्तरकालं पेषणविधिः । अप्राप्तपेषणविधौ गौरवा-पत्तेः । चरावतिदेशेन प्राप्तस्य प्रयोजनाभावेन निवर्त्तमानस्य प्रतिप्रसवमात्रकरणे तु लाघवम् ।

प्रकृतौ हि प्रदेयपुरोडाशसिद्धेरन्यथोपपादयितुमशक्यत्वादर्थ-प्राप्तमपि पेषणमध्वर्युकर्तृकत्वादिप्रयोजनसिद्ध्यर्थं स्वधर्मकं विहितम् । तच्चरौ प्रदेयसिद्धेस्तद्व्यतिरेकेण जायमानतया चरुत्वावच्छिन्नं प्रति पेषणस्याकारणत्वान्निवर्त्तमानं प्रतिप्रसूयते । अत एव प्रसक्तप्राप्तिकस्य कारणान्तरेण निवृत्तिप्रसक्तौ विधिः प्रतिप्रसवः । तत्र चोत्पत्ति-विनियोगाङ्गसम्बन्धादौ यथासम्भव विधेर्व्यापाराभावाल्लाघवम् * ।

अत एव पेषणस्य प्रदेयसिद्धिरूपप्राकृतप्रयोजनलोपेनादृष्टप्रयो-जनान्तरकल्पनेऽपि न प्रतिप्रसवत्वविघातः । धर्मान्तरस्तु पेषणस्य कर्मान्तरत्वाभावेन,

प्रधानं नीयमानं हि तथाङ्गान्यपकर्षति इति ।

न्यायेन प्राकृतपेषणाङ्गतया प्राप्तानामेवादृष्टरूपकार्यान्तर-कल्पनं न दोषाय । दृश्यते चायमर्थोऽग्निसंस्कारकमन्थनादेः

---

* पुनः करणमात्रे व्यापाराल्लाघवमित्यर्थः,—इति टीका ।

प्रपिष्टभागपदेन तावद्भागो भजनीय सेव्य अस्येति व्युत्पत्त्या सेवनासम्भवेऽपि सम्बन्धमात्र देवत्वादिव्यवहारप्रमाणक प्रपिष्ट-पूष्णो प्रतीयते। तच्च याग विनाऽनुपपन्नमिति यागमनु-मापयतीत्येतावत्तु उभयोरविवादम् । तत्र च विशेषणमात्रसम्भवे विशिष्टविध्यादिकल्पनस्यान्याय्यत्वात् प्रमाणाभावेन नापूर्वयागान्त-रानुमितिरित्यपि प्रथमतोऽवगतमेव ।

अतश्चानुमीयमानयागे अनुमापकपूषसम्बन्धेन प्रसिद्धपूषदेव त्यपागतोपस्थितिरपि सुलभैव। अतश्च यागविशेषानुमितेरेव तात्पर्यग्राहकत्वात् पूषपद विजातीयापूर्वसाधनीभूतपूषदेवतापरम् । तदुद्देशेनैव च सजन्ययागप्रदेयचरुप्रकृतितिलसम्बन्धेन प्रपिष्टद्रव्यकत्व प्रपिष्टभागसमासार्थो विधीयते । सम्भवति च द्रव्योद्देशेन देवता-विधिवद्देवतोद्देशेनापि निरूढसम्बन्धेन द्रव्यविधिर्विशेषणमात्रविधि-फलक । यद्यपि च प्रकृतिद्रव्यस्याप्यनिर्देशेन सम्भवत्प्राप्तिकता, तथापि तत्र पूर्वं विधानाङ्गीकारानैकप्रसरताभङ्गाद्यापत्ति । पेषणमात्रविधिश्च फलमिति गुणादिप्रमाणाभावाच्च कर्मान्तरता । एतेन पूषपदेन तद्देवत्यकर्मलक्षणया तदुद्देशेन प्रपिष्टभागपदल-क्षितपेषणविधिरिति प्रकाशोऽपि, निषादस्थपत्यधिकरणन्यायेन लक्षणापेक्षया कर्मान्तरविधेरेव न्याय्यत्वादपकर्षं प्रथमभक्ष-इत्याद्यावृत्तिप्रसङ्गापत्तेश्चोपेक्षित । तत्रास्मदुक्तप्रकारस्तु भवत्व प्रत्यक्षविधिनैव प्राप्तत्वेन तत्र पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेरसम्भवी । तदेतत्सर्वं सिद्धमेवोत्तरत्रिचचया स्मार्यत इति प्राञ्च ॥२॥४७॥

तत्सर्वार्थम् ॥ तत्पेषण पूषदेवत्ये चरौ पशौ पुरोडाशे च स्यादुत

सति पाकसम्पत्तिस्तया यतितव्य अन्तरायकरणेन वा कामिकनिवेषेण वा पाचभेदेन वेति प्राप्ते।

आनर्थक्यपरिहारायापूर्वसाधनत्वलक्षणाया आवश्यकत्वादधिष्ठानद्वारकत्वकल्पनस्य च पूष्णोदेवतात्वोपस्थितिमन्तरेणानुपपत्ते तदुपस्थितौ च तद्द्वारकत्वमात्रकल्पनयैवानर्थक्यपरिहाराद् द्विदेवत्ये च चतुर्थाकरणाधिकरणन्यायेन केवलस्य पूष्णोदेवतात्वाभावादत्र केवल एव पूषा तस्यैव पेषणम्।

न चापूर्वसाधनीभूतदेवतात्वस्यैव प्रकारतया पूषपदेन लक्षणेऽपि तस्य पूष्णोपरिभाने स्वरूपसम्बन्धस्यैव संसर्गविधया विवक्षणेन पर्याप्तेरविवक्षणात्तस्य च द्विदेवत्येऽप्येकस्मिन् पूष्णि सत्त्वेन तस्याप्युद्देश्यरूपत्वोपपत्तेः कथं न पेषणादीति वाच्यम्। व्यासज्यवृत्तिधर्मस्य यत्किञ्चित्मकारताया एकमात्रवृत्तिसम्बन्धस्य संसर्गत्वानुपपत्ते। अन्यथा एको द्वित्वसमवायवानितिवदेको द्वित्ववानेको द्वौ इत्यादिप्रामाण्यबोधापत्ते। अतो व्यासज्यवृत्तिदेवतात्वस्य पर्याप्तिसम्बन्धेनैव प्रकारत्वात् तस्य च पूष्णि केवले सत्त्वात् पूषमात्रवृत्तिदेवतात्वस्यैव प्रकारत्वेन तस्यैव पेषणादि। अदन्तकत्व त्वर्थवादमात्रत्वात्त्व विरुध्यते। नैमित्तिकत्वेऽपि च तस्यैव विधेयत्वाच्चारकारादिविशिष्टभावनाविधानेन चावाक्यभेदाद्गमकत्वम् ॥२॥४८॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां तृतीयाध्यायस्य तृतीयः पादः ॥

पशुप्रकरणाम्नातस्य वचनाच्चातुर्मास्याङ्गत्वेन विनियोगे मद्गुमर्णा कार्यान्तरप्रयुक्तत्वकल्पनादौ ।

वस्तुतस्तु अत्र पेषणस्य न कार्यान्तरकल्पनाऽपि । प्रदेयसिद्ध्यर्थ-त्वादेव । यद्यपि हि चरुत्वावच्छिन्नं प्रति पेषणस्याकारणत्वं, तथापि पिष्टकचरावपि चरुशब्दप्रयोगात् पेषणविधिबलेन च पौष्णं चरु-मित्यत्र सामान्यवाचिनोऽपि चरुशब्दस्य पिष्टकचरुविशेषपरत्वनिश्च-यात् तस्य प्रदेयस्य पेषणमन्तरेणासिद्धेर्न पेषणस्य कार्यान्तरकल्पना-ऽपि । अत एव चरुत्व सामान्यव्याविततन्तदपक्वतण्डुलप्रकृतिकत्वम् । अत्र भक्ताख्यावृत्त्यै अनवस्रावितेति । मण्डकाख्यावृत्त्यै अन्तरिति । सूपशाकादिव्यावृत्त्यै तण्डुलेति । अत एव पिष्टकचरावपि तदभा-वाच्च पेषणस्य विघातकत्वमिति तत्रैव पेषणम् ॥३॥४८॥

एकस्मिन् ॥ यत्रान्यसहितः पूषा देवता, यथा राजसूये ऐन्द्रापौष्णश्चरुरिति, तत्रापि पेषणमुत यत्र केवल एव देवता तत्रैवेति चिन्तायाम् । अदन्तको हि स इति अर्थवादानुसारात् पेषणस्य पूषस्वरूपप्रयुक्तत्वावगतेस्तत्स्वरूपस्य चान्यसाहित्येऽपि सत्त्वा-दुक्तमेव पेषणम् । अत एव सोमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशु-काम इति नेमपदवाच्यार्द्धपिष्टत्वानुवादोऽपि सङ्गच्छते ।

यदि तु नवमाद्यन्यायेन पूषस्वरूपे आनर्थक्यादपूर्वसाधनत्वल-क्षणाया आवश्यकत्वमापद्येत, तदाऽस्तु पूर्वोक्तविधया पूषप्रपिष्ट-सम्बन्धज्ञानजन्ययागानुमितेरेव तात्पर्यग्राहिकायाः सत्त्वात् साऽपि पूषपदे । परं तदर्थवादाद्यनुरोधात् पूषाधिष्ठानकदेवतात्वप्रयोज्या-पूर्वीयत्वलक्षणाया एवाङ्गीकाराद् द्विदेवत्येऽपि पेषणधर्मस्य । यथाचैवं

पाकाद्यर्थत्वमेव वाऽङ्गीक्रियतामिति न दोषः। अतः सर्वप्रमाणबाधान्माकरणिकमनुष्योद्देशककर्माङ्गमित्येव सिद्धान्तः।

यत्तु सूत्रे पक्षान्तरं सिद्धान्तत्वेनोपन्यस्तम्। तथा हि। वाक्यादेव प्रकृतमनुष्यप्रधानकातिथ्यादिकर्माङ्गतया विधिः। न च तदुपस्थापकाभावः। मनुष्यपदस्य लक्षणया सनकादिमनुष्यपरत्वेन तत्प्रधानकस्य हन्तकारातिथ्यादेरुपस्थितिसम्भवात्। अत एव न फलकल्पनाऽपीति। तद्वाक्याबाधस्यास्मन्मतेऽप्युपपादितत्वात् सनकादिपरत्वस्य तेन चातिथ्याद्युपस्थितेरव्यभिचरितत्वाभावेन वक्तुमशक्यत्वात् प्रकरणवाक्ययोर्बाधे प्रमाणाभावात्क्लृप्ताचिन्त्यत्वेन च सिद्धान्तनियमस्यानावश्यकत्वादस्य पक्षस्य वार्त्तिककृता क्लिष्टत्वाभिधानाच्चोपेक्षितम्।

अतः प्राकरणिकमनुष्यप्रधानकर्माङ्गत्वमेव सिद्धान्तः। वस्तुतस्तु नास्य विधित्वं वाक्यभेदापत्तेरपि तु उपवीतविधेरेव शेषः प्राचीनावीतवत्। यथा च निवीतप्राचीनवीते तत्तत्प्रधानकर्मकालसम्बन्धेन मनुष्यपितृसम्बन्धिनी उचिते, तथोपवीतमपि देवसम्बन्धितया। अतस्तदेव दर्शपूर्णमासयोः प्रशस्तमिति स्तुतिः। अथवा ते तत्र तत्र वक्ष्यमाणवचनाभ्यामस्ते अत्र तु दैवत्वादुपवीतमेवेति स्तुति ॥३॥५०॥

उपवीतम्॥ तदिदमुपवीतं सर्वकर्माङ्गम्। न्यताग्निहोत्रे प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयतीति मीवद्वव्याख्यायां यज्ञोपवीतानुवादसिद्धस्य प्राप्त्यभावेन सर्वार्थत्वगमकत्वात्। विप्रतिलम्भत्वेन दर्शपूर्णमासप्रयासानुवादानुपपत्तेश्च। वैकल्पिकेन्द्रमहेन्द्रदेवत्यदार्शिकदोहने देवतावक्तृत्वाभावेन तदनुवादानुपपत्तेः च।

## अथ चतुर्थः पादः ।

निवीतम् ॥ दर्शपूर्णमासयोः, निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत इति श्रुतम्। तत्र सर्वोऽप्ययमुपव्ययत इत्यस्योपवीतविधेः शेषो न तु स्वतन्त्रो-विधिरित्यौदुम्बराधिकरणेनैव स्थितम् । यदा विधिस्तदा कृत्वा चिन्तया निवीतवाक्ये विचारः ।

तत्र प्रकरणात्क्रतुधर्मः । मनुष्यपदन्तु सम्बन्धसामान्यवा-चिन्या षष्ठ्या अङ्गाङ्गिभावसम्बन्धपरत्वावसायात् । निवीतस्य मनु-ष्याभिलषितफलजनकत्वाङ्गीकारात्क्रतुमनुष्यधर्मः, षष्ठीश्रुत्या प्रक-रणबाधादिति द्वितीयः । अबाधेनोपपत्तौ बाधायोगात्फलकल्पना-पत्तेश्च सन्निपत्योपकारकत्वलाभाच्च प्रकरणसहकृतया तया अन्व-भ्यमानमन्त्रवाक्यगतक्रतुमनुष्यधर्म इत्यपरः । अत्र पूर्वपक्षत्रयस्यामी-सूत्रेऽन्यथा स्पष्टोऽप्ययुक्तिमत्त्वादुपेक्षितः ।

सिद्धान्तस्तु प्राचीनावीतवैयर्थ्यापत्तेस्तत्समभिव्याहारात्तदेकवाक्या-नुरोधात् षष्ठ्या मनुष्यसम्प्रदानकप्राकरणिकान्वाहार्यदानपाकादिप-दार्थोपकारकत्वरूपसम्बन्धपरत्वावसायादुक्तविधसम्बन्धेन मनुष्यार्थ-त्वम् । सम्भवति हि प्राचीनावीतस्य पितृदेवत्यप्राकरणिकप्रोक्षणी-शेषनिनयनाङ्गत्वात् पितृदेश्यकप्राकरणिककर्माङ्गत्वम् । अतस्तत्सम-भिव्याहारादस्यापि तत् । एवञ्चाध्वर्यवसमाख्याऽप्यनुगृहीता भवति । निवीतस्याराद्‌उपकारकत्वेनाध्वर्युकर्तृकेणापि तेन दानोपकारसिद्धेः ।

यज्ञस्य प्रसृत्या इत्यनेन फलाधिक्यजनकगुणाधिक्यद्वारकत्वनाम्न जपादिहोमतन्त्रसर्वयज्ञाङ्गत्वावगत्याऽनावश्यकत्वप्रतीतेरावश्यकत्वार्थं दर्शपूर्णमासयोर्वासोविन्यासविध्युपपत्तिः। अत एव शिष्टा अपि वासोविन्यासं विनाऽपि कर्मान्तराण्याचरन्ति। यद्यपि च यज्ञस्येति वाक्यं यज्ञोपवीत्येवेत्यस्य वाक्यशेषः सन्निधानादिष्येत, तथापि समत्वेन तेन वासोविन्यास एव फलाधिक्यार्थं विधीयत इति न दोषः। मुख्यब्रह्मसूत्ररूपयज्ञोपवीतं तु सदा स्मृत्यैव सर्वयज्ञार्थत्वेन विधीयते। एवञ्च श्रौतप्रायश्चित्तविध्यर्थमिदमपि दर्शपूर्णमासाङ्गत्वेन उपव्ययत इत्यनेन विधीयत इत्यपि केचित्। निवीतादिष्वनभिव्याहारस्योभयत्र प्रत्यभिज्ञापकस्य तुल्यत्वात्तु वासोविन्यास एवात्र नियम्यत इति युक्तमुत्पश्यामः। सर्वत्रोपव्ययत इति विधिर्दर्शपूर्णमासविधिसन्निधिपठितत्वात् तत्प्रापकत्वानुपपत्तेरिति सिद्धम् ॥३।४।२॥

एवं वा ॥ यावज्जीववाक्येनाग्निहोत्रे जीवनस्य निमित्तत्वावगमेऽपि वचनेनैव दाहावधि सायंप्रातःकाले, मरणोत्तरं नित्यत्वेन विहितोऽग्निहोत्रप्रयोगो मृताग्निहोत्रम्। तस्मिन्मृताग्निहोत्रे प्राचीनावीती होमयेद् यज्ञोपवीती हि देवेभ्यो होमयतीत्यनेन दैवाग्निहोत्रे किं यज्ञोपवीतस्य विधिरनुवादो वेति चिन्तायाम्। स्वरूपेण प्राप्तस्यापि ब्रह्मसूत्रस्य श्रौतप्रायश्चित्तप्राप्तिफलकतया विधिर्वासोविन्यासरूपस्य वा नियमार्थं विधिरिति प्राप्ते। स्थितं तावदपर्यन्तमितम्। मध्ये चिन्ताऽन्तरारम्भः॥

षष्ठाद्य ॥ तत्रैव, ये पुरोडाशोद्भांसान् दक्षिणाग्नावृणीया-

सर्वार्थत्वे तु कर्तृसंस्कारकस्योपवीतस्य यज्ञदेवत्याग्निहोत्रप्रयोगाङ्गत्वेन तद्दोहनेऽपि प्राप्तेरनुवादोपपत्तिरिति प्राप्ते ।

सन्निकृष्टासम्भवे विप्रकृष्टानुवादस्यापि न्याय्यत्वात् प्रकृतिविकृत्यभिप्रायेण च सामान्येऽपि दैवताबद्धत्वादनुवादोपपत्तेः प्रकरणाद्दर्शपूर्णमासाङ्गमेवोपवीतम् ।

वस्तुतस्तु वक्ष्यमाणवचनानुसाराद् अग्निहोत्रेऽपि यज्ञोपवीतत्वेन तत्त्वस्यैवायमनुवादः ॥२॥१॥

विधिर्वा ॥ उपव्ययत इति विधिरनुवादो वेति चिन्तायाम् । नित्योदकी नित्ययज्ञोपवीतीति गौतमस्मृत्या प्राप्तत्वादनुवादः । यदि त्वनेन पुरुषार्थतया प्राप्तिरित्याशङ्क्येत, ततो यज्ञोपवीतिना कर्तव्यमिति स्मृत्यन्तरोक्तसामर्थ्येनापि प्राप्तिरङ्गावगन्तव्या । यदि तत्तद्वचनेनाङ्गत्वे तद्वैव सामर्थ्यायित्तापत्तेरर्थं तु* अवसायचित्तप्राप्त्यर्थं दर्शपूर्णमासयोस्तद्विधानमित्याशङ्क्येत, ततो यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वेत्यादितैत्तिरीयकश्रुत्या सर्वयज्ञार्थत्वेन यज्ञोपवीतविधानात्तस्यायचित्तस्यापि प्राप्त्युपपत्तेर्विधानानर्थक्यम् । यदि तेनैषां सर्वेषां वचनानां नवतन्तुकत्रिवृत्स्वरूपमुख्ययज्ञोपवीतविषयत्वादासौ विन्यासरूपगौणोपवीतस्यैवाप्राप्तस्य दर्शपूर्णमासाङ्गत्वेन विधिरित्याशङ्क्येत, ततो यजस्य प्रसृत्या अजिन वासो वा दक्षिणतउपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतं संवीतं मानुषमिति वचनेन तस्यापि सर्वयज्ञार्थत्वेन प्राप्तत्वादनुवाद एवायं दर्शपूर्णमासस्तुत्यर्थ इति प्राप्ते ।

* इत्यमेव पाठः सर्वत्र प्रायश्चित्तापत्ते मतु – इति तु भवितुमुचितम् ।

द्विशब्दश्रवणाद्विध्यन्तरैकवाक्यत्वाच्चोपरि चेत्यनुवादः पूर्वस्त्यर्थः । न च प्राप्त्यभावः । स्रुग्दण्डे समिधमुपसंगृह्यानुद्रवतीतिवचनेन स्रुग्दण्डस्याधिकरणत्वप्रतीतेरुपरि धारणाभावे च पतनप्रतिबन्धकत्वरूपतद्योगादुपरिभावस्य प्राप्तेः । न च समित्स्रुग्दण्डयोरुभयोरपि क्रत्वर्थत्वादुत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुरितिवद्देशार्थत्वावधारणात् सप्तम्या सामीप्यमात्रलक्षणेति केषाञ्चिदुक्तं युक्तम् । क्रत्वर्थयोरङ्गाङ्गिभावाभावेऽपि अधिकरणत्वेनैव यूपाग्ना इव स्रुग्दण्डस्य देशत्वोपपत्तेः । अतोऽप्यनुवाद इति प्राप्ते ।

स्रुग्दण्डस्य न तावद्धारणाधिकरणत्वम् । हस्तस्यैव तदधिकरणत्वात् । उपशब्दवैयर्थ्याच्च । नाप्युपशब्दार्थे सामीप्ये, स्रुग्दण्डस्य सामीप्यप्रतियोगित्वमात्राधिकरणत्वानुपपत्तेः । अतः सप्तमी सामीप्यप्रतियोगित्वमात्रलक्षणार्था । कथञ्चित् सामीप्याधिकरणत्वसम्भवेऽपि वा समिदधिकरणत्वस्याप्राप्तत्वान्नोपरिभावानुवादः । अतो द्विशब्दपरित्यागेनैकवाक्यतामपि भुक्त्वा दैवाग्निहोत्रे उपरिभावनियमविधिः ।

वस्तुतस्तु । अनियतप्राप्त्याऽप्येकवाक्यत्वसम्भवे हविरुभयत्वादिवाक्यभेदाङ्गीकारस्यायुक्तत्वादस्यार्थवादत्वमेवाङ्गीकृत्य सिद्धवन्निर्देशान्यथाऽनुपपत्त्या विध्यन्तरस्यैवाप्राप्तनियमफलकस्य कल्पनेति युक्तम् ।

वस्तुतस्तु स्रुग्दण्डे निधाय समिधमनुद्रवतीति न्यायसुधाकृल्लिखितवचनेनोपरिभावस्यापि लक्षणातात्पर्यग्राहकप्रमाणाभावेन प्राप्तत्वादेतद्वचनाभावं कृत्वा चिन्त्यमिदमधिकरणमिति ध्येयम् ॥२।५।५॥

दिग्विभागस्य ॥ सोमे, प्राचीनवंशं करोतीत्येतद्विधिशेषः प्राचीं

दिति श्रुतेऽपि ये पुरा दर्भास्त उदञ्चः कार्या इत्येवं विधिवाचक-पदाध्याहारेणापि पूर्ववद्विधिः । न च पुराशब्दस्य विशेषणत्वे विशिष्टोद्देशः । दक्षिणाग्रत्वस्य स्मृताग्निहोत्रे विधावर्थादेवोदक्त्वस्य श्रौतवदत्रापि प्राप्तत्वेनाविशेषणत्वात् । निपातत्वेन पुराशब्दा-न्वयस्य युक्तत्वाच्च । न चायमस्ति प्रागग्राण्युदगग्राणि वेति सामान्य-स्मृत्यैवोदगग्रत्वप्राप्तेर्विध्यानर्थक्यमिति वाच्यम् । यजुर्वेदमात्रविहित-सिद्ध्यर्थं तद्विधानोपपत्तेः । अन्यथा स्मृतिमूलभूतश्रुतेरविज्ञातवेद-त्वाद् यथाविज्ञाते भूर्भुवः स्वरित्याहवनीये जुहुयादित्येतत्प्राप्तेति मास्ते । यच्छब्दश्रवणात्प्रत्यक्षविध्यभावाद्विध्यन्तरैकवाक्यत्वाच्च नायं विधिः । अपि तु प्राप्तत्वात् तच्छब्दार्थोपस्थितोद्देश्यविशेषसमर्थक एवे-त्यनुवादः ॥३॥५, २॥

स्थितादुत्तरम् ॥ हिशब्दोपबन्धाद्विध्यन्तरैकवाक्यत्वाच्चायमपि निवीतादिवत्प्राचीनावीतस्तुत्यर्थः । अत एवोपव्ययत इतिवदानर्थ-क्याभावादपि विधिकल्पनं निरस्तम् । यज्ञोपवीतपदवाच्यवस्त्रसूत्रस्य च स्मृत्यैव श्रौताग्निहोत्रे प्राप्तत्वादौचित्यादिना स्तुत्युपपत्तिः । वासो-विन्यासरूपस्यापि चानियमेनोक्तविधया श्रौताग्निहोत्रे प्राप्तत्वात् स्तुत्युपपत्तिः । यदि तु नियमेन तत्प्राप्तिः स्मृतावप्रसक्ती अपेक्षेत, ततः षड्विंशब्राह्मणादिगतदर्शपूर्णमासादिस्थस्यैवायमनुवादः स्तुत्यर्थं नानुपपन्नः । बहुवचनं तु प्रकृतिविकृत्यभिप्रायमित्युक्तमेव ॥३॥५, ४॥

विधिर्वा ॥ स्मृताग्निहोत्र एवाधस्तात् समिधं धारयन्ननुद्रवे-दुपरि हि देवेभ्यो धारयतीति श्रुतेन किमुपरि धारणं दैवाग्निहोत्रे विधीयते उतायमप्यनुवाद इति चिन्तायाम् ।

तस्य कर्त्ताऽपि वाच्यः । एकत्वादिवत्तत्तस्यापि प्रतीतेः । कर्त्तरि शबित्येतत्सूत्रस्थकर्त्तरीत्येतदनुकर्षणार्थचकारयुक्तेन लः कर्मणि च भावे चाकर्मकेभ्य इत्यनेन कर्त्तृकर्मभावानामप्याख्यातार्थत्वस्मृतेश्च चैत्रः पचतीति चैत्रादिपदस्य सामानाधिकरण्याच्चैवम् ।

न च भावप्रधानमाख्यातमिति स्मृत्या एकत्वादिवदेव यद्यपि भावनां प्रति विशेषणत्वेनान्वीयते । तथाप्युपस्थितत्वात्तद्वाचकपदान्तरमात्रकल्पनया तदुपकारस्यैव भाव्यत्वेनान्वयो न तु कर्मणो विलक्षितप्रतीतिकत्वात् । दृश्यते च गुणत्वेन प्रतीतस्यापि प्रयोजनाकाङ्क्षायां प्राधान्यं यथाऽऽग्नेयपुरोडाशादौ देवतादेः । विधिनिषेधाभ्यामपि स्वविषये तत्कृतेष्टानिष्टसाधनत्वबोधनादेव युक्तम् । अतश्च विधिस्थले स्वर्गो निषेधस्थले च प्रत्यवाय एव क्रियाफलं समानाभिधानविधिश्रुतिभ्यां, न तु क्रतूपकारकः प्रकरणात् । एवञ्च यद्यप्याख्यातेन कर्त्ता नाभिधीयेत, तथापि भावनयाऽऽक्षिप्तस्याख्यातेन लक्षितस्य वा तस्यैवोपस्थितत्वात्तदर्थत्वकल्पनं न दोषः ।

अतश्च वैमृधप्रकरणबाधेन पुरुषधर्मत्वावगतेस्तदा चानृतवदनप्रतिषेधस्योपनयनप्रभृतिप्रवृत्तेः स्मार्त्तानृतवदनप्रतिषेधस्यापीदमेव सूत्रमिति प्रथमः पक्षः ।

द्वितीयस्तु सत्यपि पुरुषप्राधान्यावगमे स्वर्गप्रत्यवायादिकल्पनाऽपेक्षया क्रतुगतफलाधानयोग्यत्वायोग्यत्वरूपस्योपकारस्यैव प्रकरणावगतस्य श्रुत्यपेक्षितस्य कल्पनं युक्तम् । अतश्च जञ्जभ्यमानमन्त्रवदेवैषां क्रतुयुक्तपुरुषधर्मत्वम् । तदा च,

देवा अभजन्त दक्षिणां पितरः प्रतीचीं मनुष्या उदीचीं रुद्रा इत्ययं श्रुतः । तत्र मनुष्यसंयुक्ते निवीताधिकरणवदौदुम्बराधिकरणवच्च विधित्वं निरस्तमपि पूर्वाधिकरणवन्मनुष्यकर्तव्यवैदिककर्मणि तावद्दिगन्तरस्यैव सामान्यविशेषादिवचनेन प्राप्ततया प्रतीच्याः पक्षप्राप्तेः लौकिके च कर्मणि प्रतीच्या नित्यप्राप्त्यभावाद्विधित्वं विधिकल्पकं वेति प्राप्ते ।

इह प्रतीच्या मनुष्यसम्बन्धमात्रोपादानेऽपि कर्मविशेषानुपादानात् सर्वत्र विधानस्य तथैव निरसनाद्यशक्यमेव क्रियाव्यक्तौ प्रतीचीदिगभिमुखत्वं लोके यदृच्छया सिद्धं, तादृशक्रियागतमेव मनुष्यप्रतीचीसम्बन्धं स्तुत्योक्ता स्तुत्युपपत्तेर्नातिरिक्तविध्यन्तरकल्पनं प्रमाणवत् । उपरि होत्र तु दैवाग्निहोत्रत्वावच्छेदेनोपरिभावश्रवणात् तस्य चाप्राप्तत्वेन विध्यन्तरकल्पनया दैवाग्निहोत्राङ्गसमिद्धारणानुवादेनोपरिभावविधिः । अनुमितवाक्यत्वाच्च न विशिष्टोद्देश इति वैषम्यम् ॥३॥५६॥

पदषिदित ॥ दर्शपूर्णमासयोः, पर्व प्रतिसुनातीति विधेयत्परसिद्धितं तद्देवानां, यदन्तरा तन्मनुष्याणां, यत्समूलं तत्पितृणामिति शेषः । तथा सोमे, यत्पूर्वं तन्मनुष्याणाम्, यदुपर्यधात्तद्देवानामिति उपरिविलाङ्कृतातीत्यस्य विधेः । तथा तत्रैव, नवनीतेनाभ्यङ्क्ते इत्यस्य घृतं देवानां निःपक्क मनुष्याणामिति । तथा दर्शपूर्णमासयोः अविदहता श्रपयितव्यमिति विधेर्वा विदग्धः प नैर्ऋतदिति ।

अत्र मनुष्यसंयुक्ते क्रियाविशेषस्य खननादेरुपादानात्तत्र च

वस्तुतस्तु। न तस्य वाच्यत्वम्। प्रतीतेरन्यथाऽप्युपपत्तेः। तथा-हि, आख्याताच्चावत्कर्तृ व्यतिरेकत्वादिकं प्रतीयत इत्यविवादम्। तथानेकार्थबोधकपदे सर्वत्रैकत्र शक्तिरपरत्राक्षेपादीत्यपि तथैव। इतरथाऽनेकशक्तिकल्पनापत्तेः। तत्र च नियामकापेक्षायां प्रधानेन गुणभूतस्य लोके आक्षेपदर्शनात् प्राधान्यं तावन्नियामकम्। तत्र यथा सत्त्वप्रधानानि नामानीत्यनया स्मृत्या कृदन्तादिनामसु सत्त्व-रूपस्य कर्तुरेव प्राधान्यावगमाद्वाच्यत्वं न कृतेः, लक्षणादिनाऽपि तत्प्रतीत्युपपत्तेः। एवमाख्याते भावप्रधानमाख्यातमिति स्मृत्या भावनाया एव प्राधान्यावगमाद्वाच्यत्वं नाश्रयस्य कर्तृकर्मादेर्लक्षणया-ऽपि तत्प्रतीतेः।

अत एव यत्र न किञ्चित्प्राधान्यनियामकं, तत्रैव घटघटत्वादौ नागृहीतविशेषणान्याय इत्यादि कौस्तुभे सूचम्। यच्चैक-त्वादौ व्यभिचारादाक्षेपः, तदतिरिक्तैव शक्तिः, न तु कर्मादौ। या तु स्मृतिरत्र प्राह्यः। द्व्येकयोर्द्विवचनैकवचने बहुषु बहुवचन-मिति सङ्ख्यामात्रेण सः कर्मणीत्यादेरेकवाक्यता। अत्र हि द्व्येकयोरित्यत्र भावप्रधानो निर्देशः द्वित्वैकत्वयोरित्यर्थः। अन्यथा द्व्येकेष्विति वक्तव्यतापत्तेः। तथा च कर्मादौ वर्त्तमानेष्वेकत्वादिषु लकारादिप्रकृतिवाच्येकवचनादीनि भवन्तीति सूत्रद्वयार्थः। न तु कर्मादौ लकारः शक्त इति।

न चैवं कर्त्रादेरनभिहितत्वात्तत्र तृतीयाद्यापत्तिः। शक्त्याऽनभि-धानेऽपि लक्षणयाऽभिधानादिति। अत्रानभिहितत्व अभिहितत्वा-भाव। तत्राभिहितत्वं न तिङादिवाच्यत्वं तत्प्रतिपाद्यत्वमात्रं वा।

प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः ।

इति स्मृते सनातनग्रहणेन सार्वकालिकविषयत्वावगतेरेतन्मूलकल्पनासम्भवेन मूलान्तरस्यावश्यकत्वात् सर्वदा चानृतं वर्जयेत् कृताकृतप्रसक्त्यभावादनुवाद एवायम् ।

अस्तु वा पुरुषार्थप्रतिषेधेन पुरुषस्यानृतवदने प्रत्यवायबोधनेऽपि क्रतुवैगुण्यापत्तौ प्रमाणाभावाच्च प्रत्यवायस्य बोद्धाऽपि क्रतुं सगुणं कर्त्तुमिच्छोस्तस्य व्रीहिभिर्यजेत इत्युक्त्या सम्भवत्येव यवैर्यागेऽनृतप्रसक्तिरिति क्रतुप्रकरणगतस्यापि निषेधस्य विधायकत्वम् । अतश्चैतदतिक्रमे श्रौतप्रायश्चित्तप्राप्तिश्च फलमिति प्राप्ते ।

सत्यं नानुवादः । क्रतुपुरुषधर्मत्वे तु न किञ्चित्प्रमाणमस्ति । यद्यपि तावत्कर्त्ता वाच्य आख्यातश्चापि तस्य वक्ष्यमाणरीत्या गुणत्वेनोपपादनाच्च तावच्छब्दत एव प्राधान्यम् । नापि पदान्तरकल्पनया, वैश्वधादिवत् । कर्त्तुं प्रयोजनवत्त्वसिद्ध्यर्थमवश्यं प्रकरणात्कोपने क्रियमाणे क्रतोरुपस्थितत्वेन तद्गतसाद्गुण्यवैगुण्यपरिहारयोरेव प्रवर्ग्यन्यायेन कल्पयितुं युक्तत्वात् ।

अत एव यत्र पशुपुरोडाशादौ उद्देश्यांशस्य दृष्टविधया देवतासंस्कारत्वात्प्रागदृष्टोपकारकत्वबाधात्, तत्र सन्निपत्योपकारकत्वलाभाय परम्पराङ्गीकरणमप्यदोषः । अन्यत्राध्यायान्ते वक्ष्यते । प्रकृते सत्यवदादेः प्रकृतापूर्वसाधनीभूतपुरुषोद्देशेन प्रकृतक्रतुप्रधानयोर्गुणतासम्पादकतया विधाने गौरवापत्तेर्बाधकत्वात् प्रकृतापूर्वसाधनक्रतुगतसाद्गुण्यमेव सत्यवदादीनाम् । अनृतवदनस्य च तद्गतवैगुण्यसम्पादकत्वम् । अत शुद्धक्रतुधर्मत्वमेव कर्त्तुर्वाप्यनपेक्षेऽपि युक्तम् ।

श्रुत्वाऽप्यर्थं नानुमतस्तेन सोऽर्थः कुबुद्धिना।

इत्यादिद्वितीयान्तप्रयोगानापत्तिः। यदि त्वकप्रयोगेष्वनायासो-
मयैव भुज्यत इत्यत्र [illegible] कर्त्तर्यैवाद्या तृतीया पक्त्वौदनो भुज्यत-
इत्यत्र नाध्याहाराङ्गीकरणम्। तदोक्तनियममङ्गीकृत्य क्त्वाप्रत्यय-
स्यापि च भाव एवाभिमङ्गीकृत्य तदर्थस्य भावस्य पूर्वकालत्वसमा-
नकर्तृकत्वसंसर्गेणोत्तरक्रियायामन्वयोऽङ्गीक्रियते। तदाऽस्तु यद्धन्ति
कारकं स्वान्वयिप्रधानक्रियाप्रतिपादकपदेन वृत्त्या प्रतिपाद्यं तत्त्व-
मभिहितत्वं, तदभावोऽनभिहितत्वं, तत्र तृतीयादीति संक्षेपः।

अत्र वदन्ति। एवं सति त इति षष्ठ्यन्तस्मिन्नियायान्वितं वाच्यम्।
प्रथमान्तस्यान्वयात्। ततश्च लक्षेति सूत्रवैयर्थ्यापत्तिः। आदेशभूत-
शानजादेः कर्त्रादिवाचित्वानुपपत्तिश्च। न च कर्त्तरि कृदित्यनेन
तद्वाचित्वं, तथात्वेऽपि कर्मणि भावे चाकर्मकेभ्य इत्यादेः स्वान्तरा-
विषयत्वात्। अत एवं परिष्कर्त्तव्यम्। ल इति प्रथमान्तं कर्त्रादावे-
वान्वेति। न चैतावता तस्य वाचित्वं लाघवेन वृत्त्या तद्गम्यत्वस्यैव
शास्त्रतात्पर्यविषयत्वेन प्रमाणे तद्व्यापाराकल्पनात्। वा [illegible] प्राधा-
न्यादिनैव सिध्यतीति सिद्धमाख्याते कर्त्रादिरवाच्यत्वम्। शानजादौ
च वाच्यत्वमिति। लक्षेति सूत्रस्य च तिबादीनां चादेशत्ववि-
धायकस्य न वैयर्थ्यम्।

अत. कर्त्तुरवाच्यत्वादाच्यत्वेऽपि वा प्राधान्यस्य दूरभ्रष्टत्वाच्च
पुरुषधर्मत्वक्रतुयुक्तपुरुषधर्मत्वे। एतेन लक्षणया तस्योपस्थितत्वादेव
तत्कल्पनेति निरस्तम्। प्रयोजनमाद्यपक्षे स्नातं प्रायश्चित्तम्।
क्रतुयुक्तपुरुषधर्मत्वे कश्चित्संस्कारकत्वाद्यजमानेनैव विधिप्रतिषेधार्य-

तथात्वे पाचकेन गम्यते चैत्रेण भुक्त्वा गम्यत इत्यादौ तृतीयाद्यनापत्तेः। ण्वुल्प्रत्ययेन कर्त्तुरुपात्तत्वात्। क्त्वाप्रत्ययेन समानकर्तृकतया कर्त्तुरुपादानाच्च। नाप्यभिहितसंख्याकत्वं, चैत्रेण पक्त इतिवच्चैत्रेण पाचक इति प्रयोगापत्तेः। सूत्रे लक्षणापत्तेश्च।

विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्।

इत्यादौ निपातेन युज्यत इति क्रियाभिधायकेन षष्ठ्याऽनभिधानात् छेत्तुमिति द्वितीयापत्तेश्च।

अपि तु यद्धन्ति कारकं स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यं, तदुक्तम्। अस्ति चेह चैत्रः पचति ओदनः पच्यत इत्यादौ। चैत्रादिष्वस्तिकर्तृत्वकर्मत्वादेर्लिङ्गपदेन प्रतिपादनात्। पाचकेन गम्यत इत्यादौ च तदुपात्तस्य पुरुषस्य गमनक्रियैवान्वयिनी न तु पाकक्रिया, तस्या एव तस्मिन्नन्वयात्। तद्धन्ति च कारकं न कर्माख्यातेनाभिहितमिति युक्तैव तत्र तृतीया। एवं चैत्रेणेत्यस्य भुजिक्रियायामनन्वयाद्गमनक्रियायामेवान्वयाङ्गीकारात् तृतीयोपपत्तिः। मयैव पक्त्वा मयैव भुज्यते इत्यत्र च पक्त्वेत्यनेन कर्त्तुरुपात्तत्वात्कर्तरि न मयेत्यादौ तृतीया। अपि तु आत्मानमात्मना वेत्सि, अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, इत्यादिवत्करणे इति न काचिदनुपपत्तिः। पक्त्वौदनो भुज्यत इत्यादौ तु पचिधातोः कर्माकाङ्क्षायां द्वितीयान्तौदनपदाध्याहारेण वाक्यपूरणम्। न हि प्रधानक्रियायामुक्तस्य कारकस्य गुणभूतक्रियायामप्युक्तिरिति नियमे प्रमाणमस्ति। येनाध्याहारं विनाऽपि वाक्यं समर्थ्येत। तथात्वे, ओदनं भुक्त्वा ग्रामं गम्यते,

नुपपत्तेर्यजमानादन्यपुरुषजृम्भायामपि तत्कर्तृकमन्त्रपाठापत्तेः मानुक्तजृम्भाकर्तृकर्तृकत्वानुवादानुपपत्तेरवश्यं जृम्भायाः पुरुषविशेषणत्वमङ्गीकृत्य जञ्जभ्यमानकर्तृविशिष्टमनुवचनमेवाध्वर्यवं विधीयते आरादुपकारकत्वेन । ततश्च जृम्भायाः क्रियां प्रति निमित्तत्वेनान्वयायोगादार्थिकमेवास्या वषट्कारादिवन्निमित्तत्वमिति प्रथमः पक्षः ।

द्वितीयस्तु जञ्जभ्यमानस्य कर्तृत्वेनानुवचनं प्रति गुणत्वाङ्गीकारे गुणानुरोधेन प्रधानभूतानुवचनस्य क्रतौ पाक्षिकत्वापत्तेर्जञ्जभ्यमानस्य क्रियां प्रति शब्दतो विशेषणस्यापि स्वर्गादिवदेव प्राधान्यम् । तदा हि प्रधानानुरोधेन पाक्षिकत्वेऽपि न दोषः । यद्यपि च तिङभिहितकारकत्वमेव प्रथमार्थो न तु संस्कार्यत्वम् । तथापि कर्तृत्वस्य फलसमानाधिकरणत्वतद्व्यधिकरणत्ववैशिष्ट्यभेदेन भिन्नत्वादुभयत्रेह फलसमानाधिकरणकर्तृत्वस्यैव प्रथमार्थत्वात् फलभोक्तृत्वरूपसंस्कारसिद्धिरविकलैव । एतदभिप्रायेणैव च कौस्तुभे अधिकारित्वस्य प्रथमार्थत्वोक्तिरिति ध्येयम् । अतो जञ्जभ्यमानोद्देशेनानुवचनविधानात् प्रकरणानुरोधेन च वाक्यभेदे प्रमाणाभावात् शुद्धपुरुषधर्मत्वम् । न च फलकल्पना । प्राणापानधारणरूपस्य फलस्य स्ववाक्य एव श्रुतत्वेन तदभावात् । यद्यपि चायमर्थवादः स्यात्, तथापि प्रकरणावगतक्रतूपकारापेक्षयाऽस्यैव स्ववाक्योपस्थितस्य तद्वाचकपदान्तरकल्पनया फलत्वस्यौचित्याच्च । अतः शुद्धपुरुषधर्मत्वमिति प्राप्ते ।

न तावत् फलं श्रुतम् । धत्त इति वर्तमानत्वनिर्देशेन योग्यानुपलब्धिबाधितत्वात् । अतोऽस्य भाव्यत्वेनान्वयमङ्गीकृत्य फला-

न च क्रतौ अवगुरणाद्यभावादेवास्योत्कर्षसिद्धेर्न प्रत्युदाहरणत्वमिति वाच्यम्। अन्वाहार्यपचनत्वसम्भवे तस्यापि तदर्थं प्राप्तेः। क्रतूपकारकतया प्राप्त्यभावेऽपि न स्त्रियमुपेयादित्यादिवत्क्रतुमध्यप्रसक्तप्रतिषेधस्यापि क्रत्वङ्गत्वोपपत्तेश्च। अतश्च पापस्य कृतत्वादेव पुरुषधर्मत्वम्। अत्र चार्थवादोक्तैतस्य वा पदान्तरस्य फलपरत्वं, अस्यैव स्वर्गादिपदा तत्परत्वमित्यादि तु स्वयमूह्यम्॥३॥१०॥

प्रागवरोधात्॥ दर्शपूर्णमासयोरेव, मलवद्वाससा न संवदेदिति श्रुतम्। मलवद्वासा रजस्वला। अस्य च प्रतिषेधस्य फलाश्रवणात् क्रत्वङ्गत्वे नानुपपत्तिः। न च यस्य व्रत्येऽहन् पत्न्यनालम्भुका स्यात् तामपरुध्य यजेतेति वचनेनैवानालम्भुकापदवाच्यरजस्वलाऽपरोधोत्तरं क्त्वाप्रत्ययेन यागप्रयोगकर्त्तव्यताविधानात् क्रत्वङ्गभूतस्य लौकिकस्य च याजमानस्य आर्त्विजस्य वा रजस्वलासंवादस्याप्रसक्तेः कथं प्रतिषेध इति वाच्यम्। अन्यत्राप्रसक्तावपि साधारणद्रव्यतया मौह्या-यज्ञेऽनुमतिरूपस्य तस्य प्रसक्तेः। अनुमतेरपि परम्परया क्रतुसाधकत्वेन संवादाप्रसक्तौ तु पत्न्यतिरिक्तरजस्वलासंवादस्य क्रतुमध्ये रागत प्राप्तस्यापरोधवाक्यविषयस्य क्रतौ निषिद्धस्यापि क्रत्वर्थतया प्रतिषेधोऽनृतवदननिषेधवदिति भाति।

मनुना, रजस्वला च षण्ढश्चेत्यादि प्रक्रम्य,

होमे प्रदाने भोज्ये च यदेभिरभिवीक्षितम्।
दैवे हविषि पित्र्ये वा तद्गच्छत्ययथायथम्।

इत्युक्त्वा, तमप्यनयेत् तत्र इत्यनेन रजस्वलामात्रस्य दैवकर्ममात्रे वाक्येन श्राद्धप्रकरणं बाधित्वा अपनयविधानात् तथा सह संवादा-

पेक्षायां कामपदयुक्तपदान्तरकल्पनयाऽस्यैव वा भविष्यदर्थकल्पनया फलपरत्वं परिकल्प्य तस्य कथञ्चिल्लभ्यमानकर्तृभोग्यत्वं वाच्यम्। तथा सति फलं तत्साधनत्वं तद्व्यापाररूपापूर्वं चेत्यनेककल्पनातो वरं प्रकरणानुरोधेन श्रुतक्रतुफलसाधनयोरन्यतासम्बन्धमात्रं कल्पनौचित्यात् कल्पयितुमुचितमिति क्रतुयुक्तपुरुषधर्मं न्याय्यम्। फलाधानयोग्यतासम्पादकत्वाच्च याजमान इति प्रयोजनम् ॥३।५।८॥

शंयौ ॥ अत एव दर्शपूर्णमासयोर्देवा वै शंयुं बार्हस्पत्यमब्रुवन् हव्यं नो वहेति सोऽब्रवीत् वरं वृणै किं मे प्रजाया इति तेऽब्रुवन्यो ब्राह्मणायावगुरेत्तं शतेन यातयात्तस्मान्न ब्राह्मणायावगुरेदिति श्रुतो दण्डोद्यमनादिरूपावगूरणादिप्रतिषेधोऽपि शुद्धपुरुषधर्म एव। यातयाद्रूपस्य फलस्य कृप्तत्वेन प्रकरणेन वाक्यसङ्कोचायोगात्। अत्र हि यातिरपि लिङ्, प्रवर्त्तनाया बाधात्। यातयातार्थोऽपि लक्षणया भोगरूपानुभवो निष्पादो वा। तमिति द्वितीयार्थो विषयत्वम्। तथाचावगूरणकर्तृविषये शतगुणं यातनानुभवः शतसंख्यायैव वा निष्पादो भवतीत्यर्थः।

वस्तुतस्तु यातयातार्थोऽनुभावनादि, लिङर्थोऽनुकूलव्यापार एव। तथाच तं प्रति भवान् शंयुरनुभावयेदित्यर्थः। अत्र लिङुपादानेन पुंयत्नस्य मानत्वात्प्रतीतेर्यातनायाः साध्यत्वावगमात् विधेयत्वं कामपदाद्यभावेऽपि कृप्तम्। अतः शुद्धपुरुषधर्म इति प्रत्युदाहरणमात्रम्। अतएव सामान्येन शंयोर्वरदानमपि सङ्गच्छते। पुरुषधर्मत्वञ्च पुरुषनिष्ठफलजनकक्रियाविषयताकत्वं, न तु पुरुषस्य संस्कार्यतया ऽविधेयं प्रमाणाभावादिति ध्येयम्।

फलसाधनत्वकल्पनाया एव प्रसक्तेः पारिशेष्याभावात्। धारणस्य संस्कारकस्य सुवर्णस्याश्रयापेक्षायां तत्त्वेनार्थ्यादन्वये बाधकाभावात्। न चैष्टापत्तिः। तथात्वे धारणसुवर्णोभयकरणकयोर्द्वयोर्भावनयोरपूर्वयोस्तत्पदयोश्च कल्पने गौरवापत्तेः। सुवर्णांशेऽप्यपूर्वविधित्वप्रसङ्गाच्च। अध्वर्युं वृणीते, स्वाध्यायोऽध्येतव्य इत्यादौ तु उभयोरपि दृष्टार्थत्वादुक्तगौरवाभावेन संस्कारविध्यन्यथाऽनुपपत्त्या विनियोगकल्पनेऽपि न दोषः। प्रकृते तु धारणेन सुवर्णं संस्कुर्यादनेन च तदाश्रितेन फलं भावयेदिति कल्पने गौरवम्।

अतः लाघवाय एकैवात्र भावना। तस्याश्चावश्यकत्वादार्थवादिकस्य फलस्यैव भाव्यत्वम्, न तु सुवर्णस्योद्देश्यत्वानेकत्वप्रसङ्गात्। अतः क्रत्वर्थायेन विनियोगभङ्गात् सुवर्णहिरण्यधारणमेवार्थकर्मतया विधीयते। किञ्च सुवर्णस्वरूपे आनर्थक्ये यथैव तस्कार्यं क्रतुरेवं लौकिक्यपि क्रिया। तस्यामपि च नैवानर्थक्यम्। केवकर्मणि वाहक्षिहरणादिर्वाचिविघ्नसमाप्त्यर्थत्वेन धारणाख्यसंस्कारोपपत्तेः। अतः परिशेषाभावात्र क्रत्वर्थत्वम्। न चोभयार्थत्वम्। एकस्यैव विधेरंशे प्रयोजकत्वमंशे च प्रधानप्रयुक्तत्वादप्रयोजकतेति वैरूप्याच्च। अतः सक्तुवदिनियोगभङ्गमपि प्रकल्प्य धारणस्यार्थकर्मतैव युक्ता।

न च तथापि वैदिकक्रियात्वसामान्यात्क्रत्वङ्गत्वं सादृश्येन प्रकृत्युपस्थितौ धर्मातिदेशस्येवाङ्गत्वेऽपि बाधकाभावादिति वाच्यम्। विधिबलेनोपस्थितेषु नियमेन सर्वेष्विष्टेषु तद्गतनिरतिशयत्वस्यापि सर्वपुरुषाभिलषितत्वेन शीघ्रोपस्थितिकतया स्वर्गस्यैव कल्पनीयत्वात्। आर्थवादिकफलस्य वाक्योपात्तत्वेन ततोऽपि शीघ्रोपस्थितिकत्वाच्च।

प्रसक्तेर्न स्त्यर्थत्वम् । न चेयमेव श्रुतिस्तस्यामूलम् । स्मृतेर्दैवकर्ममात्रविषयत्वेन सामान्यरूपत्वात् । न च रजस्वलामात्रस्थापनये अपरोधवाक्यवैयर्थ्यम् । अपरोधवाक्यस्य पत्न्या यद्दैव पत्युरधिकाराद्रजस्वलायाश्चानधिकारेण तां विना यागाकरणप्रसक्तौ दर्शपूर्णमासकरणविध्यर्थत्वात् । अत एव नचत्वमपरुध्येत्यनुवादः । अतस्थापस्यकत्वात् पुरुषार्थ एवायं निषेधः । औत्तप्रायश्चित्तमात्रार्थ इति तु प्रकृते वक्तुमिति ध्येयम् ॥२॥६१॥

अप्रकरणे ॥ अनारभ्य, सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवतीति श्रुते, न तावत्क्रतुगतहिरण्योद्देशेन सुवर्णत्वविधिः । धारणप्राप्त्यभावेनानुवादानुपपत्तेः । नापि हिरण्यं हस्ते भवत्यथ घोषमिनष्टीवमुपाकरोतीति विहितक्रतुहिरण्यधारणानुवादेन सुवर्णत्वविधिः । विशिष्टोद्देशापत्तेः । अतो भार्यमिति कृत्प्रत्ययेन सुवर्णस्य कर्मत्वाभिधानात्तदुद्देशेनैव धारणाख्यसंस्कारविधिः । हिरण्यपदस्य तु सुवर्णरजतसाधारणवाचिनोऽनुवादित्वम् । न चैवमपि क्रतुगतसुवर्णोपस्थितावेव प्रमाणाभावः । सुवर्णस्वरूपे प्रागर्थक्याल्लौकिकक्रियासाधनीभूतस्वरूपेऽपि तत्त्वादवस्थात् सुवर्णस्यैव श्रुतकर्मत्वान्यथाऽनुपपत्त्या स्वर्गार्थवादिकफलकल्पनस्य चाश्रयाभावादनुपपत्तेः । परिशेषादेव क्रतुगतसुवर्णोपस्थितिलाभोपपत्तेरिति प्राप्ते ।

न तावत्प्रकरणात्क्रतुसम्बन्धोपपत्तिरनारभ्याधीतत्वात् । नापि चक्रादिवदव्यभिचरितत्वात्, लोकेऽपि सुवर्णस्य व्यभिचरितत्वात्, न वा पारिशेष्यात् । श्रुतकर्मत्वान्यथाऽनुपपत्त्या सुवर्णस्यार्थवादिक-

धन्यायेन तद्सम्भवेऽप्यङ्गत्वोपपत्तेः । क्वचिद्देशेऽग्निनयनेन समान-देशसम्भवाच्च ।

नन्वस्तु जयादेरदृष्टार्थतया विधेयत्वाभावेन प्रयोगविध्यभावा-दङ्गप्रधानयोरेकदेशत्व एव प्रमाणाभावः । अस्तु वा तथापि तस्य लिङ्गादिरूपप्रमाणत्वाभावेन वाक्यसंकोचकत्वानुपपत्तेः। कि-न्तु साधारणसर्वकर्मार्थत्वमेव जयादीनामिति प्राप्ते ।

अग्निवैदिककर्माङ्गे तस्य परप्रयुक्ताग्नितत्प्रणयनोपजीवित्वं तदन्यकर्माङ्गे च तत्प्रयोजकत्वकल्पनमिति गौरवापत्त्यादिभिया कामसूक्तीनामाहिताग्न्यादिमात्रविषयत्ववज्जयादिविधिनैव स्वसाध्य-वार्थं गताग्निमत्कर्मार्थतयैव जयादिविधानान्नेतरकर्मार्थत्वम् ॥२॥१३॥

दोषात् ॥ अनारभ्य, प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामा-र्च्छत्स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तं निरवपत्ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान् निर्वपेदिति श्रुतम् ।

प्रतिग्रहसम्बन्धोऽत्र दानपर इत्युत्तराधिकरणे वक्ष्यते । तत्र धर्मिष्ठदायादादिभ्यो लौकिकं दानं तत्सम्बन्धीयमिष्टिः, किं वाऽश्वदानमात्रसम्बन्धिनी, किं वाऽग्निमत्कर्माङ्गभूताश्वदानसम्ब-न्धिनीति चिन्तायाम् । अर्थवादानुरोधेन दानविषयत्ववदस्या दृष्टे-दोषनिर्घातार्थत्वस्याप्यवगमाद्दोषस्य च न केसरिणो ददातीत्यनेना-विहितलौकिकविषयत्वात्तदनुरोधेनास्या अपि लौकिकदानविषयत्वम् । इदं हि वचनं यथानियमेन सामान्यतो विहिते अश्वविषये

क्रत्वर्थत्वे तु स्वरूपेण वैदिकक्रियात्वेन क्रतुगतस्य तस्योपस्थितौ क्रतोरुपस्थित्या तदङ्गत्वकल्पने गौरवम्। अत एव विश्वजिद्रात्रिसत्रादौ न तत्कल्पनम्।

प्रकृते तु विशिष्टधारणस्यार्थवादिकमेव फलमिति पुरुषार्थता। तस्यं सुवर्णस्य कर्मत्वमेव। तस्यैव स्यार्थवादिकफलम्। तेनेति पदाध्याहारस्य स्तुतिपक्षेऽपि समानत्वात्। न चावाश्यकापेक्षाविधिवैयर्थ्यं, तस्य संस्कारविधिनैव परिहारात्। दुर्वर्णोऽस्य भ्रातृव्यो भवतीत्यत्र भविष्यदर्थकत्वमात्रलक्षणा तु पूर्वपक्षिणोऽप्यविशिष्टा। स्तुतिलक्षणा सुवर्णपदे अपूर्वसाधनलक्षणा च तवाधिकेति ममैव लाघवमिति ॥१॥६२॥

ग्रैवोऽप्रकरणे ॥ अनारभ्यैवाधीतं, येन कर्मणेर्त्सेत् तत्र जयाञ्जुहुयादिति। कर्मणा ऋद्धिं स्वफलाधिक्यं प्राप्नुमित्यर्थः। अतश्च यथावस्थितफलार्थं विनैव जयादीन् कर्माणि। कर्मभ्यः फलाधिक्येच्छायान्तु जयादयः कर्माङ्गम्।

तत्र च कर्मत्वस्य क्रत्वव्यभिचरितत्वात् तावत्क्रत्वादिवत्तदुपस्थितिः। न च लौकिकस्य कर्मणः कृषिभोजनादेर्दृष्टार्थत्वेनादृष्टार्थजयादिग्राहकत्वायोगः। रोहिण्यां कृषिकर्माणि कारयेत्, पुरस्तात्कृषिकर्मणां प्राच्यां चैवमर्यादायां ग्रामवृष्ट्यिर्थं बलिं हरेदित्यादिवदत्रापि निर्विघ्नसमाप्त्यर्थत्वेन फलोपचयार्थत्वेन वा ग्रहणोपपत्तेः। न च तथापि जयादेराहवनीयसाध्यत्वात्तस्यादौ तद्ग्राहकत्वम्। जयादेरेव होमत्वेनाहवनीयप्रत्ययतद्ग्राहकत्वोपपत्तेः। न च प्रधानस्य देशाभावादनङ्गत्वम्। अङ्गगुणविरो-

द्वितीयस्तु तदर्थवादे जलोदरापरपर्यायो वरुणग्रहाख्यो दोष। स नैव प्रत्यवादिना वैदिकप्रतिग्रहविहितविशेषदानमन्यतयाऽवगम्यते। अथ मुख्यार्थबाधेऽपि पापमेव गृह्णातीति व्युत्पत्त्याऽवयवयोगेन वरुणग्रहशब्देनोच्येत, ततो वैदिके दानेऽपि कथञ्चित् त्यागाद् व दर्शनाद्देव वरुणग्रहशब्देनोच्यताम्। दृष्टाडम्बरविनोदेन च दुःखप्रसमात्तु एवैनमित्यस्याप्युपपत्तेरष्टादोषनिर्धानार्थत्वे प्रमाणाभावाल्लौकिकमात्रविषयत्वानुपपत्तेर्यावत्पूर्वकोक्तायोगेन सर्वविषयत्वम्। न च श्रचोदितेति विहिता विहितत्वेनोक्तत्वाद्दिहितस्योपस्थिति। उद्देश्यस्य विहितत्वेन विशेषणायोगात्। अतः सर्वविषयत्वमिति प्राप्ते।

अयादित्यार्थेनैव लौकिके फलकल्पना वैदिके नेत्येव विहिते-ऽप्यप्रिरहिते तत्प्रणयनादिप्रयोजनकाशमितरच नेत्येवद्य वैरूप्यापत्ते र्विधिशाघवानुरोधेनैव खलकोष कामयुतिवदेवानुमन्यते। अत-श्वाग्निमत्कर्ममात्रसम्बन्धप्रदानमेवोद्देश्यम्। तदपि च न शेषितया। प्रवर्ग्यन्यायेनाश्वदानगतप्रयोजनत्वस्याग्निमात्रायामवश्योपस्थितत्वतो रेव शेषित्वकल्पनौचित्यात्। अतश्चोपमददेव नाश्वदानहेतुत्वं शेषितया अपि तु निमित्ततयैव। अस्तु वा तत्त्वपि अग्निमत्कर्मसम्बन्धश्व-दान एवेयमिष्टिः॥३॥६४॥

अचोदितं च॥ सेयमिष्टिर्न प्रतिग्रहीतुरपि तु दातुरेव। उप-क्रमस्थार्थवादे प्रजापतेर्दातुरेव प्रधानभूतस्य च इत्यनेन परामर्शात्। प्रजापतिरेव वरुणायाश्व दत्ता स्वां देवता सम्प्रदानरूपा वरुण जलो-दररूपेण मत्त इत्यथायमर्थात्स्वैव तन्निमोकार्थमिष्टिकर्तृत्वाव-

इच्छया प्रवृत्तिर्यत्र वा नैव विहिता तथा भिन्नदायादादिभ्यस्तद्वि-षयम् ।

अत एव यत्र विश्वजिदादौ सर्वस्वदानेऽश्वदानं नियतं तत्र तत्प्र-करणस्थेन वाक्यान्तरेणैव तस्य पर्युदासेऽप्यस्य प्राकाशारीयवचनस्यो-भयविषयनिषेधकत्वमेव । अतस्तत्र निषेधकत्वेन दोषावगतेस्तन्निघाता-र्थाया इष्टेरपि तद्विषयत्वम् । भेदनहोमस्येव भेदनवद्दर्शपूर्णमासवि-षयत्वम् । अत एव दोषनिर्घातः फलं, अश्वदानं च निमित्तं न तु शेषि । तथात्वे उक्तफलत्वानुपपत्तेः । अव्यभिचरितक्रतुसम्बन्धाभावाच्च । यदि त्वश्वादोषनिर्घातार्थत्वं नाभ्युपगम्यते, ततो यावच्छब्दस्य समभिव्या-हारेणाश्वदानस्योद्देश्यत्वावगतेस्तावच्छब्दस्य समभिव्याहृतायाः प्राप्तेष्टेस्तद-ङ्गत्वापातान्निमित्तत्वानुपपत्तिः । न हि यावच्छब्दो निमित्तवाची ।

न च यावत्तावच्छब्दाभ्यां क्रियाद्वयसम्बन्धमात्रावगतौ शेषि-त्वपक्षे आराद्युपकारकत्वेन तत्र तावच्छब्दस्य प्राप्त्यभावेन विधेयत्वमप्रकृतान्निमित्तत्वपक्षे च प्रतिनिमित्तं नैमित्तिकावृत्तिरिति न्यायेनैव तावच्छब्दार्थस्य प्राप्तत्वेनाविधेयत्वाद्विधिलाघवेन निमित्त-त्वावगतिः सिद्धान्ते सुलभेति वाच्यम् । पक्षद्वयेऽपि निमित्तानु-रोधेन प्राप्तनिमित्तौ कालश्चैको तन्त्रत्वप्राप्तेस्तावच्छब्दस्य प्रतिप्रस-वविधित्वावश्यम्भावात् । अत एव सौर्यादिति लिङ्. प्रयोग-कत्वापरपर्यायहेतुत्वार्थकत्वेऽपि शेषित्वेऽपि तदुपपत्तेर्निमित्तत्वनि-श्चयो दुर्लभः । प्रत्युतापेक्षितत्वाच्छेषित्वमेव सिद्धान्ते स्यात् । मम तु दोषनिर्घातार्थत्वान्निश्चय इति वैषम्यम् । अतस्तत्रैव सौ. किञ्च-एवाश्वदाने आहिताग्नेः स्यादिति प्रथमः ।

क्रतुवैगुण्यस्यैवोपादानात्तन्निर्घातार्थत्वमेवास्या इष्टेर्युक्तम् । जायते च सामैका वाक् नाभिमतिनिगादत्यादिमन्त्रवर्णोऽप्यग्जरणान्तस्यैव भक्षणस्य शेषप्रतिपत्त्यर्थत्वावगतेर्वमने क्रतुवैगुण्यम् । अतश्चाश्वदानवद्वमनस्य वैधत्वाभावेऽपि इष्टेरग्निमत्क्रतुविशेषाङ्गत्वमविरुद्धम् ॥ ३॥१६॥

तत्सर्वं च ॥ नैव किं याजमान एव वमने स्यादुतार्त्विज्येऽपीति चिन्तायाम् । ऋत्विग्वमनेऽपि प्रतिपत्तिविलोपादिना वैगुण्यस्यावश्यकत्वात्तत्समाधानार्थमियमिष्टिः स्यादेवेति प्राप्ते ।

इष्टिस्तावदियं क्रत्वङ्गत्वाद्यजमानेन कार्या । ऋत्विग्भिर्यजमानद्रव्यस्य त्यक्तुमशक्यत्वात् । स्वद्रव्येण चाग्निषु करणे पुनः क्रत्वर्थत्वानुपपत्तेः । यजमानकर्तृकायाश्च न ऋत्विग्वमनस्य निमित्तता, य सोमं वमितीति पञ्चम्यन्तत्वेनैतद्वमनस्य समानकर्तृकत्वावगतेः । तस्य चोपादेयविशेषणत्वेन विवक्षितत्वात् । अतश्च समानकर्तृकत्वबलात्यपीयमिष्टिर्नैमित्तिकी क्रतूपकारिका, यदि वा नैमित्तिक्येवार्थवादवमनात्क्रतुवैगुण्यसमाधानार्था सती आरादुपकारिका, यदि वा वमनस्य वृथावदेशार्थिक निमित्तत्वमङ्गीकृत्य तदङ्गमेवेयमिष्टिः यद्वा क्रतुयुक्तपुरुषसंस्कारिका, सर्वथा यजमानवमन एव स्यात् ऋत्विग्वमने तु सामान्यविहित यजुर्लोपनिमित्तम् ॥३॥१७॥

सर्वप्रदानम् ॥ शेषभूतसोमवमनप्रसङ्गात्किमाग्नेयादौ हविषः पुरोडाशादेर्यागसाधनता होमश्चोत अवदानादेरेव तत्पुरोडाशादिषु तत्प्रकृतित्वात् हविषः पुरोडाशादि यागसाधनं होमस्तु तदवदानस्यैवेति चिन्तायाम् । उत्पत्तिवाक्ये हविषस्त्वेन साधनत्वप्रतीतेर्न

गतेस्सैद्धादिवद्देवोपसंहारस्यप्रतिपत्त्यपदस्य दातृलक्षणार्थत्वात् । अथवाऽऽख्यातेन प्राधान्यप्रयोजकप्राधान्येन कर्त्तृमात्राक्षेपात्साक्षात्स-म्भवे प्रयोजककर्त्तृतापेक्षेऽपि दृष्टोपक्रमानुरोधेन सदाक्षेपात्प्रतिग्रहं यः कारयेदित्यर्थावगतेर्विनैव लक्षणां दातुरिष्टिः ।

न चैवं तेन गतार्थत्वम् । मैत्रायणीयशाखायां स एषोऽश्वः प्रतिगृह्यत इत्येवं प्रतिग्रहोपक्रमाया एवास्याः श्रवणात्तद्वाक्येनोप-क्रमस्येऽप्यर्थवाद एव लक्षणेऽप्यधिकाशङ्कायाः सत्त्वात् । तन्निवृत्तिस्तु शाखान्तरे प्रतिग्रहीतुरिष्ट्यवगतेऽप्यस्यां शाखायां प्रबलोपक्रमे प्रमाणाभावेन लक्षणानुपपत्तेस्तदवधनेन दातुरिष्टौ बाधकाभावात् दूरस्थकर्मानुवादेन उद्देश्यसम्बन्धानुपपत्तेरस्य कर्मान्तरविधायकत्वाच्च नामादीनामुपस्थापकानामभावेन शाखान्तरन्यायाभावाच्च । दानुप-क्रमानुरोधेन मैत्रायणीयशाखास्थोपक्रमस्यापि प्रयोजककर्तृत्वाभि-प्रायेण व्याख्यातुं शक्यत्वाच्च ॥२।१५॥

पानव्यापच्च ॥ अथारभ्येव, वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः सोमं वमिति तस्मात्सोमेन्द्रं चरुं निर्वपेत्सोमवामिन इति श्रुतेरिष्टिरपि वैदिकस्यैव सोमस्य वमने न तु लौकिकस्य । वैगुण्य-गौरवादिभयेन प्रयाजादिहोमवदेवोभयार्थत्वस्य तावदनुपपत्तेः । न चाप्रतिपत्त्येऽप्यनिष्टदोषनिर्घातार्थत्वकल्पनया लौकिकमात्रविषयत्व-शङ्का । वमनजन्यस्यार्थवादिकस्येन्द्रियवीर्यनाशाख्यव्यृद्धिरूपस्य दोषस्य वैदिकसोमवमनेऽपि जायमानत्वात् । तन्निर्घातार्थत्वस्य प्रत्यक्ष-बाधितत्वाच्च । वैद्यके वमनार्थतयैव सोमपानविधानात् तस्येन्द्रि-यादिनाशकत्वानुपपत्तेश्च । अत इन्द्रियवीर्यव्यृद्धिपदेन लक्षणया

अस्तु वा शेषकार्यानुरोधादस्य कस्यचित् प्रकृतस्यैकस्य हविषः शेषस्थापनं, इतरेषां तु सर्वहोम एव। तदा च तद्विषयमेव मध्यपूर्वार्धवाक्यमिति प्राप्ते।

न चतुरवत्तवाक्येनावदानविधिः, द्विर्हविषोऽवद्यतीत्यनेनैव प्राप्तेः। अनेनैव विधानेऽपि वा लिङ्गप्रत्ययोपादानवैयर्थ्यप्रसङ्गेनावदानसंस्कृतस्यैव द्रव्यस्य विधेयत्वाच्च। अतश्च यागानुवादेनावत्तस्यैव हविष्ट्वेन विधेयत्वादुत्पत्तिवाक्येऽष्टाकपालपदं पशुसोमवत् प्रकृतिद्रव्यविधायकम्। अतश्चावत्तस्यैव यागसाधनत्वादवशिष्टस्यानुनिष्पन्नप्रतिपत्तिशेषकार्यार्थतेति भाष्यकारः॥

वार्त्तिककारस्तु। न यागहोमयोरभेदः। याज्ञिकानां देवतोद्देशपूर्वकद्रव्यत्यागे प्रक्षेपाङ्गके यजिपदप्रयोगाद्देवतोद्देशद्रव्यत्यागप्रक्षेपेषु समप्रधानेषु जुहोतिप्रयोगात् प्रक्षेपाङ्गकक्रियावृत्तिजातिर्यागत्वं, क्रियावृत्तिजातिश्च होमत्वमिति तयोर्भेदात्। अत एव यजिनाऽङ्गभूतोऽपि प्रक्षेपः नाक्षिप्यते, अपि तु प्रमाणान्तरलभ्य एव। तदाग्नेयादिवाक्ये यागमात्रानुमानेऽपि अङ्गभूतस्य प्रक्षेपस्याप्राप्तत्वाच्चतुरवत्तवाक्येनैवावत्तोद्देशेन तद्विधानम्। अतएव तत्र द्वितीयाऽप्युपपद्यते। यागे त्वष्टाकपालः कृत्स्न एव हविः। प्रक्षेपस्तु त्यागसमानकालीनस्तदुत्तरकालीनो वा द्रव्यदानस्य प्रतिपत्तिः। अतएवान्यत्र जुहोतिनोद्देशत्यागयोरुत्पत्तिवाक्यादेव प्राप्तेर्लक्षणया प्रक्षेप एव प्रतिपाद्यते। एवं च यत्र प्रकृतौ विकृतौ वा प्रत्यक्षवचनेनातिदेशेन वा प्रक्षेपप्राप्तिस्तत्र नाक्षेपः प्रक्षेपस्य। अन्यत्र प्रयाजादौ प्रमाणान्तराभावाच्च न प्राप्तिस्तत्र यजिनैवाक्षेपः। तदङ्ग एव

तावद्व्यवदानस्यैव यागसाधनत्वम्। न हि चतुरवत्तं जुहोतीत्येतदुत्पत्तिवाक्यम्। तथात्वे आग्नेयादिवाक्ये द्रव्यदेवताद्यनेकगुणविधाने वाक्यभेदापत्तेः। अतश्चोत्पत्तिशिष्टत्वेन पुरोडाशावरुद्धे यागे चतुरवत्तविधानानुपपत्तेः चतुरवत्तवाक्ये जुहोतिना यागमनूद्यावदानाख्यसंस्कार एव निर्मन्थ्येनेष्टकाः पचन्तीतिवद्विधीयते। न हि यागाद्धोमो भिद्यते, येन जुहोतिना नानुवादः स्यात्। जुहोतिचोदितानामपि, स एष यज्ञः पञ्चविध इत्यादौ यजिनाऽनुवादात्। यजतिचोदितानाञ्च प्रयाजादीनामभिक्रामं जुहोतीति जुहोतिनाऽनुवादाच्च। यागहोमयोर्भेदे प्रयाजानूयाजवद्धोमेधीययागादौ प्रक्षेपे प्रमाणाभावाच्च। अतो यागहोमयोरभेदाद्युक्तो जुहोतिना यागमनूद्य प्रदेयपुरोडाशसंस्कारकतयाऽवदानविधिः। अतश्च कृत्स्नस्यैव पुरोडाशस्यावदानेन संस्कार्यत्वात् पुनः पुनरवदाय याग इति ज्योतिष्टोमवद्यागाभ्यासेऽपि न दोषः।

वस्तुतस्तु। सर्वं पुरोडाशं पुनः पुनरवदाय सकृदेव यवयादिवद्याग इत्यपि शक्यं वक्तुम्। शेषकार्याणि स्विष्टकृदादीनि तु प्रकृते विद्यमानशेषाभावाद्धविरन्तराक्षेपकाणि। तद्वाक्यस्थशेषशब्दस्तु अवशिष्टवचनत्वाभावादाक्षेपेण शेषं सम्पादयतीति यदन्यपरः। दृष्टश्च शेषशब्दोऽन्यत्रापि तत. शेषेण विशिष्टदेशजात्यादिमतो जन्म प्रतिपद्यत इति गौतमसूत्रे स्वर्गारम्भकसुकृतातिरिक्तसुकृतपरः। न हि स्वर्गारम्भकसुकृतशेषेण देशान्तरप्राप्तिरन्यत्रान्यस्य व्यापारायोगात्। अतस्तत्र शेषशब्दोऽन्यवाच्ययेति प्रकृतेऽपि हविरन्तरमेव पूर्वमदृष्टं शेषशब्दवाच्यं भविष्यति।

एकस्याश्चेत् ॥ परप्रयुक्तद्रव्योपजीविनोऽर्थकर्मणस्तु तुषोपवापादेरनेकपुरोडाशीयकपालानां मध्ये एकस्मिन् कपाले ग्रहणे अनियमप्राप्तौ आग्नेयस्य मुख्यत्वेन प्रथमोपस्थितत्वात् तदतिक्रमकारणाभावेन तदीयकपालस्यैव ग्रहणम्। ग्राह्यतावच्छेदकञ्च प्रथमोपस्थितत्वं न त्वाग्नेयत्वम्। अतो विकृतावन्यविकारस्य तत्त्वेन तदीयमेव कपालं ग्राह्यम्।

यत्तु मूले सङ्गतिलोभेन कृत्वाचिन्तया यदा शेषकार्यानुरोधेन यस्य कस्यचित् स्थापन तदा कस्येत्यपेक्षायां मुख्यस्येति सिद्धान्तितम्। तदाग्नेयवेलायां शेषकार्याणामबुद्धिस्थत्वात्तद्वेलायां स्थापनापेक्षानुपपत्तेः शेषकार्यानुष्ठानवेलायां चान्यस्यैव स्थापनोपपत्तेरुपेक्षितम्। तत्रत्यमुख्यपदं वा प्रथमोपस्थितपरम्। ततश्च यस्यैव यत्र प्रथमोपस्थितिराद्यस्यान्यस्य वा, तस्यैव तत्र ग्रहणमिति न्यायशरीरार्थः ॥२॥३०॥

भक्षाश्रवणात् ॥ आग्नेयस्य पुरोडाशस्य चतुर्धा कृतस्येदं ब्रह्मणः इदं होतुरित्यादिमन्त्रवर्णकल्पितो विभागरूपो आदेशः श्रुतः। स किं दक्षिणारूपतया परिक्रयार्थः सन् ऋत्विक्संस्कारार्थः, उत भक्षणरूपतया प्रतिपत्त्यर्थः सन् शेषसंस्कारार्थ इति चिन्तायाम्। भक्षणस्याश्रवणात् ब्रह्मण इत्यादिषष्ठीश्रुत्या च वासिष्ठादिवद्ब्रह्मादीनां स्वामित्वावगमात् तस्य च दानमन्तरेणानुपपत्तेस्तस्य च त्यक्तेऽपि पुरोडाशे स्विष्टकृदादिवत् स्वीकारकल्पकत्वोपपत्तेः सोमचमसवदृत्विक्संस्कारार्थं दक्षिणादानविधिरेवात्र कल्प्यते। अत एव एषा वै दर्शपूर्णमासयोर्दक्षिणेत्यपि लिङ्गमुपपद्यते। अत परिक्रयार्थ इति प्राप्ते।

र्गाग्निवद्दात्। पात्नीवताद्दौ तु देवतासम्बन्धेनोद्देश्यत्यागयोरेव कथ-नात् पर्य्यग्निकरणान्तमग्रौति विधानेन च प्रक्षेपानतिदेशात् न प्रक्षेपः। स्रुक्सेधीयादौ तु आज्यभागवत् पुनःश्रवणादा तत्करण-मिति विशेषः। अतश्च स्रुक्षेव पुरोडाशस्य देवतायै त्यागादुप-युक्तस्य च ध्रुवद्दाज्यस्य प्रक्षेपणमिति प्रतिपत्तिः। उत्तरार्धादिश्च स्विष्टकृदादिना। न च त्यक्तस्य स्विष्टकृते पुनस्त्यागानुपपत्तिः। वचनवशेन त्यक्तस्यापि पुनः स्वीकारेण त्यागोपपत्तेः। अतोऽस्ति शेष इति सिद्धम् ॥१॥६८॥

अप्रयोजकत्वात् ॥ अत्र भाष्यकारेण शेषकार्याणामर्थकर्मता-देकस्मादेव हविषः शेषकार्याणि कर्त्तव्यानीति पूर्वपक्षयित्वा प्रति-पत्तित्वं प्रसाध्य सर्वेभ्य इति सिद्धान्तितम्। तद्युक्तं एतादृशविषये प्रतिपत्तित्वस्य साधयिष्यमाणत्वात् पुनरुक्तत्वापत्तेः पूर्वाधिकरण-प्रयोजनकथनार्थान्येतानि सूत्राणीति वार्त्तिककारो व्याचख्यौ।

यदि पूर्वाधिकरणे शेषकार्याणां हविरन्तराक्षेपकत्वं पूर्वपक्षे, तदा स्पष्टमेव प्रयोजनम्। यदा तु शेषकार्यानुरोधेन शेषस्थापनं, तदा तेषां परप्रयुक्तद्रव्योपजीवित्वेनाप्रयोजकत्वेऽप्यर्थकर्मत्वेन ह्रुप्तोपवाप-कपालवच्छेषस्य गुणभूतत्वात् गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वा-दुपादेयविशेषणत्वेन तद्गतसङ्ख्याया विवक्षितत्वादेकस्मादेव करणं शेषकार्याणाम्। सकृत्सकृदिति वीप्साश्रवणं तु चतुर्थे चतुर्थ्यन्त-हीनस्येतिवत्प्रयोगान्तरविषयम्। सिद्धान्ते तु विधानाशेषत्वाख्य-चातुर्थिकन्यायेन प्रतिपत्तिकर्मत्वादविवक्षितसङ्ख्येयाख्यसंस्कार्यानु-रोधेन सर्वेभ्यः करणम्। वीप्सा चोपपद्यतरा ॥ २॥६८॥

# अथ पञ्चमः पादः।



आज्याच्च ॥ उपांशुयाजप्रयाजाज्यभागानूयाजादिद्रव्याणां जौहवादीनां स्विष्टकृदिडादीनि शेषकार्याणि कर्त्तव्यान्युत नेति चिन्तायाम्। उत्तरार्धात् सकृत्सकृत्समवद्यति सर्वेभ्यो हविर्भ्यः समवद्यतीत्यादिवचनेभ्यो वेधा स्वीध्यायाद्यतीतिवदप्रधानसाधारणत्वविषयत्वप्रतीतेः कर्त्तव्यानीति प्राप्ते।

यत्तावदेषां तत्तद्यागेषु असाधारणे प्रयाजानूयाजेषु जौहवाद्येकदेशरूपे आज्यभागोपांशुयाजेषु च वाचनिकध्रौवोपादाने चतुर्गृहीते, तत्र तत्तद्यागाविशिष्टशेषरूपविशेषप्रतिपत्तिपरत्वात् चतुर्गृहीतं जुहोतीति भाष्यकारोक्तोपांशुयाजाभावान्मात्रप्रकरणस्थवाक्यादेव तत्सत्त्वादा न सामान्यविहितविधमानशेषोपजीवनस्विष्टकृदादिप्रतिपत्तिप्रापकता। अत एव यत्र प्रयाजशेषाभिघारणादौ विधिस्तत्रैव तद्विधानं, तथागत्याऽवयवप्रसक्तौ समुच्चयः। न चैवमाग्नेयस्यापि विशिष्य चतुर्धाकरणभक्षणरूपप्रतिपत्तिविधानात् स्विष्टकृदाद्यकरणापत्तिः। तस्य भक्षणस्य कल्पत्वेन तथापि विलम्बोपस्थितिकत्वेन तुल्यत्वात्। नापि तत्तदुपादानभूतात् ध्रौवात् स्वाल्याज्याद्वा तत्करणं, तयोः सर्वस्मै वा एतदित्यादिवाक्याद्यज्ञादिरूपकरिष्यमाणकर्मार्थत्वस्यावश्यम्भावेनाकीर्णकरत्वाभावात्। न चाकीर्णकरत्वाभावेऽपि आज्ये तावन्मात्र एव प्रतिपत्तिः तथापि स्वाल्याज्यस्य पिष्टलेपफलीकरणादावुपयोगसत्त्वेऽपि वचनादेव पत्नी-

सकलस्यैव पुरोडाशस्याग्नये त्यक्तत्वादनीशो यजमानो न शक्नोत्यन्यांस्तेन परिक्रेतुम् । अतएव मते पुनः स्वीकारो दानं स्वानतियोग्यनेककल्पना । स्विष्टकृति तु यागस्य श्रुतत्वात् स्वीकारकल्पनेऽपि न दोषः । अतोऽवरभक्षणकर्तृत्वमेव सम्बन्धसामान्यवाचिषष्ठ्यर्थं परिकल्प्य शेषापेक्षितशेषप्रतिपत्तिरूपं भक्षणमेव ब्रह्मादिकर्तृकं मान्त्रवर्णिकविधिना विधीयते । अवश्यं चात्वतिरथमेन भक्षणोपयोगित्वेव जननीया, न तु गृहस्वर्णादिवत् क्रियान्तरोपयोगिनी, अयोग्यत्वात् । अतश्चावश्यकत्वाद्भक्षणस्यैव सम्बन्धघटकं कल्प्यते न क्रियान्तरं समर्पणादि गौरवात् । अतश्च ब्रह्मसम्बन्धि समर्पणस्यैव शेषप्रतिपत्तिस्तेन तु गृहे नीत्वा स्वयं अन्यद्वारा वा भक्षणं सम्पादनीयमित्यपास्तम् । आवश्यकभक्षणस्यैव तत्कर्तृकस्य प्रतिपत्तित्वोपपत्तौ क्रियान्तरकल्पने गौरवात् । दक्षिणाश्रुतिस्तु आनुषङ्गिकानतिसाधकत्वादर्थवादः ॥१॥३१॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
तृतीयाध्यायस्य चतुर्थः पादः ॥

प्राप्तदेवतासंस्कारार्थं पशुपुरोडाशे द्रव्यतया पयोग्रहाः सुराग्रहाश्च विधीयन्त इति दशमे सूत्रभाष्यकाराभ्यां वक्ष्यते । तदा च स्थानापत्त्या पुरोडाशाङ्गं स्विष्टकृदिडं कर्त्तव्यमेव । न च ग्रहशब्दस्य नामातिदेशकत्वाज्ज्योतिष्टोमिकशेषकार्यातिदेशशङ्का । ग्रहशब्दस्य प्रयणीयपदवन्नामातिदेशकत्वानुपपत्तेरिति प्राप्ते ।

न तावदवशिष्टः शेषोऽस्ति । यथागृहीतान् ग्रहान् खखिल-खपाद्दने उत्तरेऽग्नौ पयोग्रहान् जुहोति दक्षिणेऽग्नौ सुराग्रहानिति वचनेनानवदायैव होमावगमात् । न चोच्छिष्टरिष्टि न सर्वहुतं जुहोतीति वचनेन हुतशेषाभावतः शेषकार्यकरणम् । तत्र ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारं यदि न विन्देत् वल्मीकवपायामवनयेत् ततोऽप्यवशिष्टं शतातृण्णायां विचारयन्ति इति विशिष्य प्रतिपत्त्यन्तरविधानेनातिदेशिकप्रतिपत्तिबाधात् । वल्मीकवपा वल्मीकच्छिद्रं, शतातृण्णा शतच्छिद्रा कुम्भी । इदञ्च सूत्रभाष्यकारमताभिप्रायेणोक्तम् । यदा तु वार्त्तिककृता देवतासंस्कारार्थं यागान्तरमेव सुरापयोद्रव्यक विधीयते, तदाऽप्यौषधद्रव्यकत्वपयोद्रव्यकत्वाभ्यां दार्शिकपूर्णमासिकविध्यन्तप्राप्तेः वक्ष्यमाणत्वेन स्विष्टकृदिडादिप्राप्तावपि पूर्ववत्तदभाव इति अधिकरणं व्याख्येयम् ॥ १ ॥ ७ ४ ॥

द्रव्यैकत्वे ॥ सर्वपृष्ठायामिन्द्राय राथन्तरायेन्द्राय बार्हतायेन्द्राय वैरूपायेत्यादिषड्हविष्कारायां पश्वोऽपि निरूप्य सहावघातपेषणे कृत्वा प्रकृतिवद्विभागे प्राप्ते तमकृत्वा वचनादेकमेव रथचक्रमात्रं पुरोडाशं कृत्वा समन्तं पर्यवद्यतीति वचनेन समन्ततः पर्यवदाय प्रधानानि क्रियन्ते । अत्र समन्तत इत्येव कर्मभेदतात्पर्यग्राहकम् ।

यथाज्ञातवचनशेषस्यैव प्रतिपत्त्युपपत्तावपि प्रकृते तादृशवचनाभावेन साधारणद्रव्यस्य प्रतिपत्तयोग्यत्वात् । न च सर्वकार्यान्ते क्रम बाधि- ताऽपि प्रयोगवचनेन तत्करणं, समिष्टयजुरादिविशिष्यप्रतिपत्त्यन्तर- विधानेन तत्र तदप्राप्तेः । अत शेषाभावात् शेषकार्याणि । ४॥७२॥

साकं प्रस्थाय्ये ॥ दर्शपूर्णमासयोः, साकं प्रस्थाय्येन यजेत पशु- काम इत्यत्र यागः फलाय विधीयते । तत्र चाग्नेयेन मध्यमाग्नीधे स्रुची प्रदाय सह कुम्भीभिरभिक्रामेदिति वाक्येन सान्नाय्याङ्गभूत- मभिक्रमणं आश्रयत्वेनोच्यते, कुम्भ्यौ निरूपकत्वेन, अन्यत् सर्व- मनूद्यते । वाक्यभेदश्च न, निपातनादिविशिष्टभावनाविधानादित्युक्त द्वितीये । तदत्र सान्नाय्याङ्गतया निरूढादिशेषकार्याणि कर्त्त- व्यानि न वेति चिन्तायां, अभिक्रमणे कुम्भीसाहित्येऽपि आहवनीय- देशगत्वा चतुरवत्तमादायैव होमानुष्ठानापेक्षसद्भावेन कर्त्तव्या- नीति प्राप्ते ।

नाचापूर्वमभिक्रमणमात्रस्य, भेदकप्रमाणाभावात् अपि तु सान्नाय्यप्रक्षेपाङ्गभूतमेव । तादृशाभिक्रमणकर्त्तुं कुम्भीसाहित्यं च कर्मभिक्रमणकालीनमवयवसंस्कारार्थं नान्यत् । प्रयत्नमपि च नेदम- पूर्वं, अपि तु दृष्टार्थसम्भवात् स्रुक्स्थानानुवादाद्योगप्रक्षेपाङ्गभूत- स्रुग्गमनमेव । अतश्च कुम्भीगतसंस्कार्यत्वान्यथानुपपत्त्याऽभिघार- णपूर्वकम् स्रुक्कार्यप्रक्षेपार्थत्वावगत्या तत्स्थस्य हविषोऽपि प्रच- दानप्रक्षेपप्रतिपादनत्वावगतेः सर्वहोमात्मनाधाय साकं प्रस्थाय्यप्रयोगे सान्नाय्यस्य शेषकार्याणि ॥४॥७३॥

सौत्रामण्याम् । सौत्रामणी नाम पशुयागः । तत्रातिदेश-

वादिदेवतासम्बन्धाद्विधिरिति सर्व एव मन्यते। तच्च चान्यं जुहोतीति वचनेनोन्योद्देशेन प्रक्षेपरूपप्रतिपत्तिविधिर्हविर्दानवत्। तच्च यद्दैर्जुहोतीत्यादिना पात्रविधिरिति स्थितिः। अतश्च शेषसत्त्वानुरूपं प्रतिपत्तिः। तत्प्रमाणञ्च समाख्या वचनञ्च।

तत्र समाख्या तावत्प्रैतु होतुश्चमसः प्र ब्रह्मण इत्यादिका वेदे, याज्ञिकानां सोमचमस इत्यादिका। भक्षणार्थस्य चमेर्धातोरधिकरणवाचके औणादिके असच्प्रत्यये कृते चमसशब्दनिष्पत्तेः। सोमस्यते भक्ष्यतेऽस्मिन्निति व्युत्पत्त्या सोमभक्षणसाधनत्वावगतेस्तत्समाख्याकल्पितश्रुत्या होत्रादिकर्तृकभक्षणस्य सोमप्रतिपत्त्यर्थत्वसिद्धिः। यदि तौणादयोऽव्युत्पन्ना इति पक्षाश्रयणं, तदा चमसशब्दस्य पात्रे रूढत्वे योगशक्त्यैव होतृसोमादिसम्बन्धो भक्ष्यभक्षकत्वादिसम्बन्धेनैवेति तथा भक्षणसिद्धिरविकला। अतश्च होतृब्रह्मोद्गातृयजमानमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणां स्वस्वचमसेषु समाख्यया भक्षः। सदस्यपक्षे तस्यापि स्वचमसे। वचनं त्वग्रे निरूपयिष्यते ॥१।७६॥

उद्गातृ॥ तत्रैव, प्रैतु होतुरित्यादिमन्त्रे प्रोद्गातॄणामिति श्रुतम्। तेन किं उद्गातैवैकस्तच्चमसभक्षणे विनियुज्यते उतोद्गातृप्रस्तोतृप्रतिहर्तारस्त्रय इति चिन्तायाम्। प्रातिपदिकश्रुत्या उद्गातैव। न च बहुवचनानुरोधेनास्य सर्वतोमुख्यादौ उत्कर्षः, प्रातिपदिकस्य वा लिङ्गसमवायेन त्रितयपरत्वम्, योगेन तौल्यष्टगानकारित्वेन त्रितयपरत्वं कल्प्यतामिति वाच्यम्। उद्गातृशब्दस्य प्रचुरप्रयोगेनोद्गीथापरपर्यायसामद्वितीयभागरूपोद्गानकर्त्तरि रूढत्वात् गुणभूतबहुवच-

अन्यथाऽऽग्नेये हविष्काण्ड इतिवत्कर्मैकत्वे सकृद्वदानापत्तेः। याज्या-भेदाद्वा कर्मभेदः। तत्र च स्विष्टकृदिडादि प्रधानभेदात् प्रत्येकं भवति।

न च द्रव्यैकत्वात् तन्त्रता, अवदानप्रदेशभेदेन तत्तदुत्तरार्धादीनां भेदात्। न च संस्कारवाक्ययोः परस्परान्वये प्रमाणाभावेऽप्युत्तरार्धस्यावदानप्रदेशप्रतियोगिकत्वाभावात् प्रकरणेन हविःप्रतियोगिकत्वप्रतीतेस्तस्य च पुरोडाशैक्येन साधारणत्वात् द्रव्यैकत्वमिति वाच्यम्। तत्पक्षेऽप्यत्रार्थे चतुर्मुष्टिपरिमितस्यैव निरुप्तस्य हविष्ट्वेन पुरोडाशस्य हविष्ट्वाभावात्। न च तथापि हविषः सकृत्त्वेन साधारणत्वाद्यागकाले इन्द्राय राथन्तराय निरुप्तं यत्तत् तस्मै मत्वेति प्रत्येकं सङ्कल्पेऽपि संसृष्टोत्तरार्धादेः अदृष्टमात्रविशेषत्वात् तन्त्रत्वं शेषकार्याणामिति वाच्यम्। तथापि स प्रजापतये त्वा निर्वपामीतिवत् द्विदेवत्ययागस्य भवति द्विर्दत्तस्य वषट्करोतीत्यनेन प्रधानभेदस्य शेषकार्यभेदे हेतुत्वावगमात्। तदन्यथानुपपत्तिकल्पितव्याप्तिबलेन भेदोपपत्तिरिति प्राप्ते।

तेन सर्वं क्रियत इतिवद्विधौ सदा भूतत्वपापत्तेरपेक्षितमुष्टिमात्रपरस्यावद्यायादृष्टकल्पनस्य च न्यायप्राप्तत्वस्वबाधकत्वानुपपत्तेः सकृदेव शेषकार्याणि। न प्रत्येकं तु लक्षणाभावाद्धेतुविधित्वमिति ज्ञेयम्। ऐन्द्रवायवे तु वचनादेव भवति[illegible]रिति सिद्धान्तः ॥ ७ ॥ १० ॥

सोमे ॥ ज्योतिष्टोम उपस्थिताद्विष्टेऽपि सोमोऽभिषवादिसंस्कारविधिपरत्वप्रकृतिः। स एव पञ्चमप्रयादिपाषण्डत्वैरैन्द्रवाय-

नियमः। उद्गायतीनामरविन्दलोचनमित्यादावन्यत्रापि प्रयोगात्। अत एव पङ्कजादिशब्दस्य मण्डूकादौ प्रयोगाभावेन योगरूढ़िकल्पनायामपि प्रकृते न तत्कल्पना। अपि तु अग्निशब्दवन्निरूढ़लक्षणैव। अतश्च तात्पर्यग्राहकबले लाक्षणिकार्थग्रहणेऽपि प्रकृतेऽग्निमुपनिधाय स्तुवत इतिवन्मुख्यार्थसम्भवे लाक्षणिकार्थग्रहणायोगात् बहुवचनानुरोधाच्च निवद्योद्गातार इतिवत्प्रस्तातपूर्वीयगानकर्तॄणामेव ग्रहणम्। न सुब्रह्मण्यस्य भाष्यकारोक्तस्यापि। गानकर्तृत्वाभावात्। मूलग्रन्थान्यथाकरणं तु युक्त्यनुरोधेन न दोष, विद्वान्नेऽन्यथात्वाभावादिति ध्येयम् ॥३।७॥

यावद्युक्तः ॥ अत्रे समाख्या प्रमाणमुक्ता। वचनमिदानीमभिधीयते। यथाचमसमन्यांस्तत्सर्वाश्चमसिनो भक्षयन्ति, अथैतस्य हारियोजनस्य सर्वे एव लिप्सन्त इति श्रुतम्। तत्र लिप्साशब्देनोपक्रमस्थार्थवादानुरोधाल्लिप्साभावग्रहणे अष्टार्थत्वापत्तेश्च भक्षणया भक्षणमभिधीयते। तत्र हारियोजने वक्ष्यमाणविधया वषट्कारनिमित्तं होमाभिषवनिमित्तश्च यद्यपि प्राप्तं, तथापच विशिष्टोद्देशे वाक्यभेदापत्तेर्भक्षान्तरमेव सर्वकर्तृविशिष्टं विधीयते।

अथवा हारियोजनावान्तरप्रकरणे पाठात् तदीयभक्षानुवादेनैव पुरस्तादैन्द्रवायवस्य भक्षयति सर्वतः परिहारमाश्विनं भक्षयतीत्यादिवद्गुणमात्रं विधीयते। विशेषपुरस्कारेण कर्तृविधानाच्च नैककर्तृवरोधे कर्त्रन्तरविधानानुपपत्तिशङ्का। सर्वथा वाचनिकः कर्तृविशेषः। नदिह सर्वपदं किं चमसिमात्रपरं किं वा प्राकृतसर्वर्त्विक्परमिति चिन्तायाम्। सर्वशब्दस्य सर्वनामत्वादुपस्थितपरा-

नानुरोधेन त्वदुक्तायास्त्रिविधाया अपि अन्याय्यकल्पनायाः पाशाधिकरणन्यायेनानुपपत्तेः। न ह्युत्कर्षयोग एव तदधिकरणविषयः, प्रकरणबाधापादकतद्योगे श्रुतिबाधापादकलक्षणाप्रयोगस्य सुतरान्तदधिकरणविषयत्वात्। अतो बहुवचनमेव व्यत्ययानुशासनादिरीत्या एकत्वलक्षणार्थं व्याख्येयम्। न चैकत्वलक्षणायां जहत्स्वार्थतापत्तेः प्रातिपदिक एवाजहत्स्वार्थता युक्तेति केषाञ्चिदुक्तं युक्तम्। मुख्यत्वप्राधान्याभ्यां प्रातिपदिके अजहत्स्वार्थत्वाङ्गीकारे विभक्तौ जहत्स्वार्थतायाः फलमुखत्वेनादोषात्।

न च प्रतिहर्त्रादिकर्मण्यपि तत्प्रतिपादकवाक्येषु च औद्गात्रं कर्म काण्डञ्चेति समाख्यानात् तत्कर्तर्यपि प्रतिहर्त्रादावुद्गातृशब्दस्य शक्त्यैव प्रयोगोपपत्तेरनेकार्थकस्योद्गातृपदस्य बहुवचनानुरोधेन निय-चोद्गातारः स्तुवत इत्यादिवत्त्रितयपरत्वमविशेषाद्वा असमञ्जस्यचतुष्टयपरत्वं किं न स्यादिति वाच्यम्। अनेकशक्तिकल्पनाभियोद्गानकर्तृवाचकस्यैवोद्गातृपदस्य लक्षणादिनाऽपि क्वाचित्कसर्वविषयप्रयोगोपपत्तेः। अत एव मुख्योद्गातुरेव कर्म मुख्यमौद्गात्रं तद्वेदसंयोगान्यथापि औद्गात्रशब्द उद्गातृशब्दस्य गौण इति द्रष्टव्यम्। अतः पाशाधिकरणन्यायेनोद्गात्रैवैकः पिबेदिति प्राप्ते।

उद्गातृशब्दस्य ऋत्विग्विशेषे शक्तिः, कृत्प्रत्यययोगेनैवोत्कृष्टगानकर्तृमात्रवाचित्वेनोपपत्तौ अतिरिक्तशक्तिकल्पनायां प्रमाणाभावात्। प्रचुरप्रयोगस्यापह्नवनीयेऽग्निपदवन्निरूढलक्षणयाऽप्युपपत्तेः। न चात्र रथकारादिशब्दवदवयवार्थं विहाय ऋत्विग्विशेषे प्रयोगः, येनातिरिक्ताऽपि शक्तिः कल्प्येत। न चोद्गायतिरणुद्गीथवाच्येति

त्वात्। तथा हि सर्वत्रोद्देश्यविधेयभावस्थले उद्देश्ये विधेयान्वयात्पूर्व-मुद्देश्यस्योद्देश्यत्वेन क्रियान्वयोऽवश्यं वक्तव्यः। अत एव,

यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्।

इत्यपि सङ्गच्छते। प्राथम्यं तत्त्वेन प्रथमक्रियान्वयोऽन्यस्यानि-यमकत्वात्। तदुक्तं यत्र भिन्नपदस्थले यागेन स्वर्गं भावयेदित्यादौ समस्तपदार्थोपस्थित्यनन्तरं स्वर्गस्योद्देश्यत्वेन यागस्य च विधेयत्वेन क्रियान्वये प्रथममवगते पश्चादेव विधेयस्य यागस्योद्देश्ये स्वर्गेऽन्वय-इति स्थितिः। तदुक्तेहार्थैकपदस्थले अपि प्राथम्यान्वयात्पूर्वं भवस्य क्रियान्वयोऽभ्युपगन्तव्यः। ततश्च क्रियान्वयात्पूर्वं भवप्राथम्ययोर्विशे-ष्यविशेषणभावानवगमादेकार्थीभावलक्षणसामर्थ्यभङ्गात्परिपूर्णसमा-सपदस्य पदान्तरेणाप्यतिमात्रान्वयायोगः।

यद्यपि चास्मन्मते वैयाकरणवद्विशिष्टार्थवाचकत्वं न सामर्थ्यं, तथापि क्रियान्वयात्पूर्वं विशिष्टार्थबोधकत्वमेव तदिति बोध्यम्। अत्र च क्रियाभिन्नं विधेयं बोध्यम्। क्रियात्मके विधेये तदन्वयात् पूर्वमुद्देश्यस्य तत्त्वेन क्रियान्वयस्य वक्तुमशक्यत्वात्। अत एव विविदि-षन्ति यज्ञेनेत्यादौ विविदिषोद्देशेन यज्ञादिभावनाविधानेऽपि न क्षतिः। अतश्चैकप्रसरताभङ्गभिया भवान्तरमेव विधेयम्। अत एव लोहितोष्णीषा इत्यादावतिदेशात् पूर्वमेव लोहितोष्णीषविशिष्टाः कर्त्तार एव प्रचारोद्देशेन विधीयन्ते विशेषणमात्रविधिफलका इति तत्र तत्रैकप्रसरताभङ्गपरिहारप्रकारो वक्ष्यते। अतश्च प्रकृते एक-प्रसरताभङ्गभिया प्राथम्यस्य पूर्वकर्मणश्चानिवेशाग्रहणादेव वषट्कर्तृप्राथ-म्योभयविशिष्टभवान्तरमेव विधीयते सोमभक्षाकारार्थत्वेन। तत्र च

मग्निलावगतेश्चमसिनामेव पूर्वमुपस्थितत्वात् तेषामेव ग्रहणमिति प्राप्ते ।

चमसिशब्दस्यान्यचमसेषु एकैकचमसिनो भक्षणं स्याध्यं अथ तु चमसिनामन्येषां च सर्वेषामेव तदुक्तमित्येवं मुख्यचमसत्वेनोपपत्तेर्न पुनः सर्वपदसङ्कोचनम् । अतश्च परमर्षीण व्यवहारासम्भवादाम्नानेन प्रकरणादिभिर्न प्रकृतकर्मकरमात्रग्रहणोपपत्तौ पुनश्चमसिभिर्विशेषणे प्रमाणाभावः । न चैवं पत्न्या अपि यजमानस्य सोमपीथवदेव, पुंलिङ्गेन तस्या ग्रहणानुपपत्तेः । चमसाध्वर्यूणां तु याज्ञिकाचाराभावादेवा-ग्रहणमिति ध्येयम् । न हि चमसिन एव सर्वशब्देन ग्राह्या इत्यत्रा-न्यत् किञ्चित्प्रमाणमस्ति ॥३॥७८॥

वषट्काराच्च ॥ सोम एव, वषट्कर्तुः प्रथमभक्ष इति श्रुतम् । तत् किं भक्षान्तरलक्षणं किं वा समाख्यादिप्राप्तभक्षानुवादेन प्राथम्य-मात्रविधिरिति चिन्तायाम् । भक्षान्तरत्वे प्रमाणाभावात् प्राथम्य-मात्रविधिः । न च वषट्कर्त्तुरपि विधेयत्वे वाक्यभेदः । वषट्कारे निमित्ते भक्षोद्देशेन प्राथम्यविधानात् रथन्तरे निमित्ते ग्रहोद्देशे-नैन्द्रवायवाग्रत्वविधिवच्च विशिष्टैकोद्देशे वाक्यभेदाभावात् । अतश्च यत्र चमसे हारियोजने वा अध्वर्य्वादेरन्यस्य वषट्कर्त्तुश्च होमाभिषवाभ्यां समाख्यया लिङ्गवचनेन वा भक्षप्राप्तिस्तत्र वषट्कर्तुः प्रथमं भक्षः ततोऽन्यस्येति वचनार्थ इति प्राप्ते ।

प्रथमभक्ष इति समासरूपे एकस्मिन्पदे एकांशेनोद्देश्यत्वे एकांशेन विधेयत्वे चाङ्गीक्रियमाणे एकप्रसरताभङ्गापत्तेः कर्मान्तर-मेवेदम् । न च तस्मिन्दूषकतावीजाभावः । सामर्थ्यभङ्गस्यैव तद्बीज-

समवायस्त्वेकशेषप्रतिपत्त्यर्थत्वाद् भक्षणानां विकल्प । प्रत्यवशिष्टा-
नामपि वषट्कारादिभक्षाणां सामान्यविहितत्वात् कल्पिकयाऽपि
समाख्यया विशेषनिष्ठया प्रमेयबलाबलन्यायेन बाधाद्वद्विषयत्वाव-
गतेर्भिन्नविषयत्वे वा प्राप्ते अन्य भक्षयन्तीति वचनेन एतस्य शेष-
स्यैकभक्षणप्रतिपाद्यत्वासम्भवादेकेन भक्षणेन प्रतिपादितेऽपि शेषे
अवशिष्टशेषस्य भक्षणान्तरेण प्रतिपत्तिसम्भवात् प्राथम्यविधेश्च समु-
च्चय ।

नन्वेवं कर्तृभेदेन केषाञ्चिद्भक्षाणां पृथगनुष्ठानेन समुच्चयोप-
पत्तावपि यत्रैकस्मिन्नेव कर्तरि कारणानेकत्वं, तत्र प्रयोगविध्यव-
गतसाहित्यसम्पत्त्यर्थं तन्त्रत्वोपपत्तेर्न पृथगनुष्ठानेन समुच्चय । यद्य-
तस्तु समाख्यया अध्वर्युयजमानसदस्यचमसेषु कारणान्तरेणैतत्-
कर्तृकभक्षस्याप्राप्तत्वात् तद्विधायकश्रुतिकल्पकत्वेऽपि होतृचमसेषु
वषट्कर्तृत्वेन तेषां तत्र भक्षस्य प्राप्तत्वात् कृप्तप्रवृत्तिनिमित्ततया न
विधिकल्पकत्वावकाश । एवं हारियोजनेऽपि । येषां कारणान्तरेण
[illegible] भक्षप्राप्तिस्तत्राप्रिफलक एव सर्वत्र विधिरिति न तत्रापि कार-
णद्वयस्यैकस्मिन् कर्तरि समवाय इति चेत् ।

मैत्रावरुणादिहोतृचमसेषु वषट्कारात्तेषामिव होतुरपि वष-
ट्कर्तृत्वाद्धोतृचमससाधारण्येन चाध्वर्योरपि होमाभिषवकर्तृत्वाद्धो-
त्रादीनामपि तद्भक्षणप्राप्तेर्विनिगम्य तत्तच्चमस इत्येवं विधसमाख्याया-
स्तत्कर्तृकभक्षणान्तरविधिमन्तरेणानुपपत्ते । अत एव तन्त्रानुष्ठाने
विधिफलाभावेन न तन्त्रत्वमपि । न चैवमप्येकस्मिन्नेव कस्मिंश्चि-
दग्यासे समाख्यानिमित्तभक्षकरणमात्रेण समाख्योपपत्तौ [illegible] चमस-

यागार्थत्वेन वषट्कारस्य श्रुतत्वात् कर्तृपलक्षणत्वेनार्थान्निमित्तत्वाव-गतेर्वषट्कारनिमित्तकमिदं भक्षणं ग्रहेषु चमसेषु चाविशेषात् सिद्धं भवति ॥२॥७९॥

होमाभिषवाभ्याञ्च ॥ इदमपरं भक्षस्य निमित्तम् । हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्राञ्चः परेत्य सदसि भक्षयन्तीत्यत्र हविर्धानादीनां सर्वेषां गुणानां विध्यन्तरादेव प्राप्तत्वात् केवलं होमाभिषवसमानकर्तृकत्वं भक्षमात्रे अप्राप्तं विधेयम् । यद्यपि हारियोजनादौ होमाभिषवसमानकर्तुरपि भक्षणं प्राप्तं, तथाप्यत्र-श्रुत्यानुवादे वाक्यवैयर्थ्यापत्तेस्तस्य विधेयता । सा च न पूर्वविहित-भक्षेषु । सर्वत्रोत्पत्तिशिष्टविशेषविहितकर्त्रन्तरावरोधात् । अतश्च होमाभिषवसमानकर्तृकं भक्षान्तरमेवेह विधीयते । कर्तृरूपगुणा-नुरोधेन वाऽग्निष्टिवद्वषट्कृद्भक्षस्यैव प्रयोगभेदमात्रम् । न चोत्पत्तौ नियामकाभावः । प्राप्तस्यैवोत्पत्त्यन्तरपिनो वषट्कारवाक्ये नियाम-कत्वात् । प्राप्तस्यापि प्रयोगान्तरे तु कर्मान्तरमेवेति ध्येयम् ।

अत्र च होमे अभिषवसमानकर्तृकत्वस्याध्वर्यवसमाख्याबलादेव प्राप्तेः प्रधानान्वयस्याभ्यर्हितत्वाच्च भक्षे एवाभिषवसमानकर्तृकत्वं होमसमानकर्तृकत्ववद्विधीयते । होमाभिषवयोश्च श्रुतत्वाद्वषट्कार-वदेवार्थान्निमित्तत्वम् । तयोश्च समुच्चितयोर्निमित्ततेति षष्ठे वक्ष्यते । अतश्च यो यदभावे होमाभिषवकर्त्ता अध्वर्युः प्रतिप्रस्थाताऽन्यो वा एते तस्मै वा स तेन भक्षयेत् ॥ ३ ॥ ८० ॥

प्रत्यक्षोपदेशात् ॥ अथ यत्रैकस्मिन्पात्रे अनेकेषां भक्षकर्तृणामेक-स्मिन्कर्मणि वा अनेकेषां वषट्कारहोमाभिषवसमाख्यादिकारणानां

द्यानमात्रं न क्रमाभिव्यञ्जकं किञ्चित्। तत्सत्त्वे तु पूर्वोक्तक्रम इति ध्येयम् ॥३।८२॥

वचनात् ॥ इदं च भक्षणं, मातृपङ्क्तेन सोमः पातव्य इति वचनादनुज्ञाप्यैव। तदपि न लौकिकेन शब्देन, अपि तु आम्नानवशादुपहूत उपह्वयस्वेत्यनेनैव मन्त्रेण। तथापि लिङ्गेन वाक्यं बाधित्वा विभज्यैवैकोऽनुज्ञापने अपरश्चानुज्ञायाम्। निषेधवत्ता-श्चानुज्ञापनानुज्ञयोर्विधिकल्पना। मन्त्रवत्त्वाच्च। तथाप्यर्थक्रमेण पाठं बाधित्वा उपह्वयस्वेति प्रथममनुज्ञापयेत् उपहूत इति पश्चादनुज्ञा-दाने विनियोक्तव्यम् ॥३।८३॥

तदेकपात्राणाम् ॥ सेयमनुज्ञा यस्मिन्कस्मिन् पात्रे भक्षप्रसक्तिस्तत्रैव ग्राह्या। दृष्टार्थतालाभात्। भागाधिक्यादिप्रसङ्गनिमित्तकलह-प्रसङ्गानिवृत्त्यर्थत्वात्। तथाचान्तरेणापि तु तन्निवृत्तावस्य नियमविधित्वात्। अन्यत्रानुज्ञाने तु अदृष्टार्थत्वमपूर्वविधित्वञ्च दोष। अत-एव यत्रैकस्मिन् पात्रे एक एव भक्षयिता तत्र नैवानुज्ञापन-मपि। एवं अभिमतस्यापि भक्षयितुर्नानुज्ञापनं, प्रयोजनाभावात्। याज्ञिकास्त्वाचरन्ति ॥३।८४॥

याज्यापनयेन ॥ ज्योतिष्टोमे ऋतुयाज्यासु हौत्रप्रवचनात्तासु अन्यथा याज्या होतुरपनीय यजमानस्य विकल्पेन विधीयते। यज-मानयाज्या सोऽभिप्रेष्यति होतरेतद्यजेति स्वयं वा निषद्य यज-तीति। तत्र स्वयं याज्यापाठपक्षे वषट्कारभक्षयोः क एव कर्त्ता उत होतेति चिन्तायाम्।

मद्दोऽप्रया यजमानस्य याज्यामात्र श्रुतं न वषट्कारः। तस्य

साध्याभ्यासमात्रे तदापत्तिः । समाख्याकल्पश्रुतौ अविशेषात् प्रकृतापूर्वसाधनचमसस्थसोमसंस्कारार्थत्वेन तत्तत्कर्तृकभक्षणस्य विधेयत्वेन सर्वत्रैव चमससाध्याभ्यासे तत्प्राप्तिः । अत सर्वत्रैव एकपात्रे कर्तृभेदद्वैककर्तरि कारणभेदेऽपि युक्तो भक्षस्य पृथगनुष्ठानसमुच्चयः । यद्वा, हारियोजने तु माऽस्तु समुच्चयः । याज्ञिकानुष्ठानं चेत्तर्हि तेनास्तु सः ॥३॥८१॥

एकपात्रे ॥ भक्षसमुच्चये चिन्तितेऽधुना प्रसङ्गात् तत्क्रमो निरूप्यते । तत्रैकस्मिन्पात्रे कर्तृभेदेन भक्षभेदे, वषट्कर्तुः प्रथमभक्ष इति वचनात्, होतैव नः प्रथमः पाहि इत्यादिमन्त्रवर्णाच्च वषट्कर्तृत्वनिमित्तः प्रथमो भक्षः । न च होमकर्तुरध्वर्योर्हस्ते पात्रसत्त्वादर्पणप्रत्यर्पणकल्पने गौरवापत्तेस्तेनैव न्यायेन भक्षप्राथम्यावगतेस्तदपेक्षया च वषट्कर्तुः प्राथम्यविधाने अपूर्वविधित्वापत्तेः समाख्यानिमित्तभक्षापेक्षयैव तेन प्राथम्यविधिर्नियमविधित्वलाघवानुरोधेन युक्त इति वाच्यम् । नियामकन्यायप्रवृत्तेः पूर्वमेवैतस्य वचनस्य प्रवृत्तत्वेन नियमविधित्वानवकाशात् न्यायेन सङ्कोचानुपपत्तेः ।

अतो वषट्कारनिमित्तः प्रथमं भक्षः । मैत्रावरुणादिचमसेषु च चमसमुखीये ऐन्द्रप्रदाने होत्रा वषट्कारात् मित्रावरुणादिभ्यश्च प्रदाने मैत्रावरुणादिभिर्वषट्काराद्वषट्कर्तृत्वे तु प्रदानक्रमेण क्रमः । वषट्कर्तृभक्षानन्तरञ्च होमाभिषवोभयकर्तृकत्वे तस्य भक्षः । तन्निमित्तभक्षस्य वाचनिकत्वात् । ततो दुर्बलः समाख्याप्रमाणकः । होमाभिषवकर्तृकभक्षाभावे तु तदनन्तरं मिश्रकर्तृकसमाख्याप्रमाणक एव । समानकर्तृके तु होमाभिषवकर्तृकभक्षाभावे द्विरनु-

निमित्तत्वेनोपवीणस्य यागस्य फलचमसमान्वयित्वानुपपत्तेस्तच्छब्दपरामृष्टस्य च तस्य भक्षान्वयश्रवणात् प्राप्तयागानुवादेनानेकपेषणादिरूपगुणविधाने वाक्यभेदापत्तेश्चानेकगुणविशिष्टभक्षान्तरमेव फलचमसकरणकं विधीयते । फलचमसस्य विनियोगाभावेन संस्कार्यत्वानुपपत्तेः सक्तुन्यायेन विनियोगभङ्गस्यावश्यकत्वात् । तदपि आरादुपकारकमपि यजमानसोमभक्षस्य बाधकं, न सोममित्यनुवादत्वात् । न गिरा गिरेति ब्रूयादितिवदेककार्यत्वाभावेऽपि बाधकत्वरूपाया एव प्राप्तापत्तेरङ्गीकारात् । अस्तु वा स्वतन्त्र एव तन्निषेध इति प्राप्ते ।

यद्यपि भक्षान्तरमिदं तथापि तस्य आरादुपकारकत्वम् । तन्निति द्वितीयानिर्देशेन फलचमससंस्कारार्थत्वप्रतीतेः । अनुपयुक्तस्य संस्कारायोगेऽपि अध्वर्युं वृणीतइत्यादिवद्विनियोगकल्पना । तथापि यदि सोमं बिभक्षयिषेदित्याद्यनुवादबलाद्यजमानकर्तृकभक्षस्य च तावतैवोपपत्तौ सर्वत्र सोमबाधेन सर्वार्थत्वकल्पने प्रमाणाभावाद्यजमानचमसयागाभ्यामसाधनत्वमेव फलचमसस्य कल्प्यत इति न काचिदनुपपत्तिः ।

वस्तुतस्तु । भक्षान्तरत्वे प्रमाणाभावाद्यजमानसोमभक्ष एव तत्कर्तृकपेषणाद्यनुष्ठानोत्तरकालत्वविशिष्टः फलचमससंस्कारकत्वेन विनियुज्यते । राजा राजसूयेनेतिवत्, तस्य वायव्यास्वितिवच्च, विनियोगविशिष्टप्रयोगविधानाद्वाक्यभेदः । यजमानचमसाभ्यामसोपद्रव्यसंस्कारकभक्षसंस्कार्यत्वात्, पूर्वोक्तयुक्तेश्च, तदीयत्वानुमानात् । कल्पितवाक्येन फलचमसस्य उक्तयागाभ्यामसाधनत्वसिद्धिः । नैमि-

याज्याया अधिवषट्करोतीति वचनेन याज्यातो भेदात्। अतश्च वषट्कारे समाख्यानिमित्तो होतैवेति तन्निमित्तो भक्षः तस्यैव। यत्तु स्वयं वेति वचनम्। तत्र तावद्यागकर्तृत्वविधायकं तस्य प्रधानवाक्यादेव सिद्धेः। नापि यागप्रकाशकवषट्कारप्रयोगकर्तृत्वविधायकम्। विध्यन्तरत्वे वाक्यभेदापत्तेः। अत आद्यवाक्येन यजमानस्य याज्यायां विहितायां द्वितीयेन प्रैषकर्तृत्वविधानात् प्रैषार्थकर्तृत्वानुपपत्तेरेव याज्याविकल्पप्राप्ते यागकर्तृत्वस्य च याज्याप्रयोक्तृत्वमात्रेणाप्युपपत्तेस्तृतीयमर्थवादः। नियच्छेत्यपि याज्यायां नियतत्वस्य सामान्यविधित एव प्राप्तत्वादनुवादः। अनवानं यजतीति तु याज्यान्तरविषयमिति प्राप्ते।

आख्यातश्रवणादानुपपत्तेश्च तृतीयमेव विधायकं, आद्यमर्थवादः। अतश्च याज्यान्तेन वषट्कारेणैव मुख्ययागकर्तृत्वाद्वषट्कारोऽपि तस्यैव। याज्यावषट्कारयोः समानकर्तृकत्वस्यानवानत्वस्य च बाधापेक्षया वषट्कारे होतृकर्तृकत्वमात्रस्यैवैकस्य समाख्याप्रमाणस्य बाधौचित्याच्च। एवञ्चाद्यस्यापि विधित्वे न कश्चिद्दोषः। अतश्च वषट्कारनिमित्तो भक्षोऽपि तस्यैव ॥३।८।५॥

फलचमसः ॥ तत्रैव, यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममिति श्रुतम्। अत्र द्वितीयो निःसन्दिग्धत्वपरः आद्यस्तु निमित्तत्वपर एव। स्तिभिनीः अङ्कुरामूलानि च। तत्रैतस्य फलचमसपदाभिधेयस्य किं भक्षणमात्रं किं वा यागोऽपीति चिन्तायाम्।

विशत्यापत्तिश्च, अतो दशकर्तृविशिष्टं प्रत्येकचमसप्रतियोगिकमनु-प्रसर्पणमेवात्र विधीयते। तयोश्च षाड्विंशिकान्वये एकैकस्मिन् चमसे दश दश कर्त्तारो भवन्तीति वीप्सानुवादः। अनुप्रसर्पणस्य च प्रयोजनापेक्षायां वैमृधन्यायेन चमसपदान्तर्गत-चभिधातु-प्रतिपाद्यस-माख्यानिमित्तभक्षस्यैव स्ववाक्योपस्थितत्वात्तद्वाचकपदान्तरकल्पनया प्रयोजनत्वम्। अतश्च समाख्यानिमित्तभक्षार्थं प्रतिचमसं दशाना-मनुप्रसर्पणे चमसानां दशत्वाच्छतसङ्ख्यासम्पत्तेः शतवाक्यमनुवादो-विधेयदशत्वस्तुत्यर्थो न तु ब्राह्मणत्वविधायको वाक्यभेदापत्तेः। अतो-ब्राह्मणपदस्य सोमपदवदेव भक्षा गौणमिति यजमानचमसे राजन्य-जातेरेव न्यायप्राप्तत्वाद्राजन्या दश भक्षयेयुरिति प्राप्ते।

ब्राह्मणत्वस्य सर्वचमसेषु प्राप्त्यभावेनोपरि हि देवेभ्यो धारयतीति वद्विधेयत्वापत्तेर्गौणत्वे प्रमाणाभावाद् ब्राह्मणत्वमेवेह शतोद्देशेन विधीयते। सोमान् भक्षयन्तीत्यनुवादमात्रम्। वस्तुतस्तु भक्षयतिना पूर्ववाक्ये समाख्याभक्षस्योद्देश्यत्वेनोपस्थितस्यैवोपादानात्तदुद्देशेनैव ब्रा-ह्मणत्वविधानमिति दशत्वेनैकत्वबाधवद्ब्राह्मणत्वेन राजत्वबाध इति यजमानचमसेऽपि ब्राह्मणा एव फलचमसन्दश भक्षयेयुः। न च स यदि सोममित्यनेन राजकर्तृकभक्षस्य निमित्तत्वावगतेः कथं तदभावे फलचमस इति वाच्यम्। निमित्तद्वयाङ्गीकारे वाक्यभेदापत्तेरादौ-नैव यदि-शब्देन यागगतराजकर्तृकत्वनिमित्तप्रतिपादनात्। अयन्तु यदि-शब्दो नि सन्दिग्धत्वार्थकोऽनुवाद इत्युक्तम् ॥२॥८७॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां

तृतीयाध्यायस्य पञ्चमः पादः।

---

त्तिकत्वाच्च तत्र नित्यसोमबाधकत्वम् । एवं च स्थानापत्त्यैव फलचमसे इतरसोमसंस्कारवद्धूयमानभक्षस्यापि प्राप्तिसम्भवे पूर्वप्रवृत्त्या तद्विध्यङ्गीकरणं गुणद्वयविधानार्थं फलचमसस्य यागसाधनत्वसिद्ध्यर्थं चेति द्रष्टव्यम् । एतेन यदि सोमं न विन्देत् पूतीकानभिषुणुयादित्यभिषवयुक्तपूतीकानामपि यागसाधनत्वं व्याख्यातम् ॥३॥८६॥

चतुष्प्रसर्पिषु ॥ राजसूये दशपेयो नाम सोमयागविकारो राजकर्तृकः । तत्रातिदेशतो दशसु चमसेषु प्राप्तेषु यजमानचमसे राज्ञो भक्षणम् । तत्रापरं, शतं ब्राह्मणाः सोमान् भक्षयन्ति दशदशैकैकञ्चमसमनुप्रसर्पेयुरिति वचनद्वयं श्रुतम् ।

तत्र न तावच्छ्रुत ब्राह्मणा इति विधिर्दशदशेत्यनुवादः, भक्षानुवादेन गुणद्वयविधाने वाक्यभेदात् । एकैकस्मिन् भक्षे शतब्राह्मणप्राप्त्यापत्तौ दशदशेत्यस्य प्राप्त्यभावाच्च । अतो दशेत्येव लिङ्श्रवणाद्विधिः । सोऽपि न चमसोद्देशेन, दशत्वस्य प्राप्तत्वात् । नापि तदुद्देशेन भक्षाश्रितदशकर्तृविधिः । चमसोन्नयनादिक्रियान्तरस्याप्याश्रयत्वप्रसङ्गेन भक्षस्यैवाश्रयत्वे प्रमाणाभावात् । याज्ञिकाचारसिद्धचमसाख्यभक्षस्यैव नियमेनोपस्थित्यभावेन व्यवहारनिमित्तस्याप्याश्रयत्वापत्तेश्च । चमसमिति द्वितीयाया अनुशब्दयोगनिमित्तत्वेन प्रतियोगित्वपरतया तस्योद्देश्यत्वोपस्थापकाभावाच्च । नापि चमसानुप्रसर्पणोद्देशेन दशकर्तृविधि । विशिष्टोद्देशेन वाक्यभेदात् । चमसप्रतियोगिकर्त्विक्कर्तृकानुप्रसर्पणस्याप्राप्तत्वाच्च । प्रयाजेभ्यस्तदितिवत्सर्वचमसेषु एकस्यैव दशकस्य प्रसक्त्यापत्तेश्च । चमसे चैकैकत्वविशेषणे पुनर्विशिष्टोद्देशः । दशदशेति वीप्सार्थविधाने वाक्यभेदः । प्रतिचमसं

दीचास्तु यूपच्छिकमन्तीत्यत्र अग्नीषोमीयसवनीयानुबन्ध्यसम्बन्ध्युपदिष्टातिदिष्टच्छेदनसाधारण्येन दीक्षाकालविधौ न शास्त्रिकालवैषम्यं, तथाऽचैव वक्ष्यामः । वस्तुतस्तु न साधारण्येन विधिः । प्रकृत्यर्थत्वेन विहितस्यातिदेशतोऽपि प्राप्तिसम्भवात् । तथापि यूपैकत्वं भिन्नकालकत्वेनाऽश्रूयमाणविशेषत्वात् पाचवदेव नानुपपन्नम् । प्रयोजनं, पूर्वपक्षे पर्णतालोपे वेदान्तरीयविकृतौ याजुर्वैदिकत्वात्तद्भ्रेषप्रायश्चित्तं, सिद्धान्ते अविज्ञातप्रायश्चित्तं विकृतिवेदीयं वा । भूरादिप्रायश्चित्तानामपि उपक्रमानुसारेणोद्गात्रादिवदेद्धर्मत्वात् ॥३॥८८॥

प्रकरणविशेषात्तु ॥ सप्तदश सामिधेनीरनुब्रूयादित्यनारभ्याधीतं सामिधेन्युद्देशेन विधीयमानं साप्तदश्यं प्राकरणिकपाञ्चदश्यावरोधात् पूर्वं प्रकृतौ दर्शपूर्णमासयोर्निविशते सामिधेनीस्वरूपे सामर्थ्यप्रसक्तौ तत्परोपाख्यापूर्वविशेषसाधनत्वस्य प्रकरण**विनुपस्थापनात् । साप्तदश्ये तु अव्यभिचरितक्रतुसम्बन्धेन कथञ्चिदपूर्वसामान्योपस्थितावपि तद्विशेषस्य विकृतन्यायेनोपस्थित्या विलम्बितत्वात् । किन्तु विकृतौ ।

न च तथापि कृतोपकारपाञ्चदश्यविरोधः । औपदेशिकत्वेन प्रत्यक्षबाधकत्वोपपत्तेः । न चानारभ्याधीतत्वेन दौर्बल्यं, नित्यकाम्यत्वरूपभावसाम्यम् । युक्तेरुभयथापि तुल्यत्वात् । अत एव य इष्ट्येत्यनेन गम्यमानपयस्कात्वादिसर्वविकृतिषु निविशत एव । सर्वविकृतिषु साप्तदश्यप्राप्तौ काम्यइष्टिमित्रविन्दादिविकृतिषु तत्पुनःश्रवणं

---

* सर्वत्रैव पुस्तके ऽत्र किञ्चित् स्थानं रक्षितम् ।

## अथ षष्ठः पादः ।



सर्वार्थं ॥ अनारभ्य श्रुतेन यस्य पर्णमयी जुहूर्भवतीत्यादिना अव्यभिचरितक्रतुसम्बन्धिजुह्वुद्देशेन विधीयमाना पर्णता तद्द्वारेण जुहूसम्प्रकल्पकमिति स्थिते, सा किं प्रकृतिविकृतिसाधारणी उत प्रकृतिरेवेति चिन्तायाम् ।

अविशेषात् सर्वोऽपि । न च विकृतावतिदेशेनापि प्राप्तेर्द्विरुक्तत्वापत्तिः । उपदेशेनैव प्राप्तिसत्त्वे अतिदेशस्य जुहूविषयत्ववत्पर्णताविषयत्वाकल्पनात् । न च विकृतौ जुहूप्राप्तेरतिदेशायत्तत्वात्तस्य च प्रकृतेः सर्वाङ्गसम्बन्धोत्तरकालीनत्वेन पर्णताविधेः प्रथमं प्रकृतिविषयत्वाद्बोधजनकतायास्तत्स्वभावे पुनर्विकृतिविषये तज्जनकत्वायोगेन प्राप्तिकालवैषम्यापत्तिरिति वाच्यम् । वैमृधादिवत्पर्णताव्यतिरिक्ताङ्गसम्बन्धेनैव प्रकृतेः पूर्णत्वमङ्गीकृत्य विकृतावतिदेशोपपत्तौ पर्णतायाः पश्चादेव विधानेन साधारण्योपपत्तेः । अन्यथा वैमृधेऽपि वैमृधव्यतिरिक्तप्रयाजाद्यतिदेशानापत्तेरिति प्राप्ते ।

यत्किञ्चिदितिकर्तव्यताक-वैमृधोपेतसकलाङ्गसम्बन्धेनैव प्रकृतेः पूर्णत्वमङ्गीकृत्य वैमृधेऽतिदेशकल्पनायामपि येषामङ्गानां स्वाङ्गसम्बन्धेन निराकाङ्क्षता तेषामेवातिदेशो न वैमृधस्य अङ्गविशेषानवगमेन तद्भावनाया अपरिपूर्णत्वात् । अतश्च पर्णतारूपाङ्गसम्बन्धं विना प्रकृतेः पूर्णत्वाभावादतिदेशतो जुहूप्राप्त्यनन्तरं पुनः पर्णताविधौ प्राप्तिकालवैषम्यापत्तेः प्रकृत्यर्थैव पर्णता । यथा चैवं सति

फलाश्रितात् काम्यादपि फलानापत्तिः । काम्यस्य लाघवेन परप्रयुक्ताश्रयोपजीवितया स्वातन्त्र्येणानुष्ठानप्रसङ्गानुपपत्तेराश्रयस्यापि परप्रयुक्तकाम्यगुणेनैवोपकारसिद्धौ नित्यनैमित्तिकचमसाद्यनुष्ठापकत्वाकल्पनात् । काम्यप्रयोगे चमसादेरङ्गत्वाभावेनैव वैगुण्यप्रसङ्गाऽप्रसक्तेः । अतो दुर्बलस्य नित्यादेः प्रबलानास्कन्दितप्रयोगविषयत्वकल्पनया प्राप्तबाधविधया बाधकत्वं काम्यनैमित्तिकादेरिति सिद्धम् ॥१॥९०॥

इष्ट्यर्थम् ॥ अग्नीनामतिदेशेन पवमानेष्ट्यङ्गत्वावगमात्तत्संस्कारकत्वेन विहितस्याधानस्यापि प्रकरणपठितवाक्यात् पवमानेष्टिप्रधानीभूताग्निसंस्कारकत्वेन विनियुक्तस्य पवमानेष्ट्यङ्गत्वम् । पवमानेष्टीनां विश्वजिन्न्यायेन फलकल्पनेति प्राप्ते ।

आधानस्य किमुत्पादकत्वमुत यथागार्गादिवदग्निनिष्पत्तिप्रथमाप-जनकत्वं? उभयथापि लभ्यते अग्निहोत्रादिषु आहवनीयाद्युत्पादकाभावादतिदेशस्यैवासम्भवः । अतोऽग्निहोत्राद्यङ्गभूताहवनीयाद्युत्पादकमेवाधानम् । पवमानेष्टयोऽप्यन्यत्र भूताः, फलवदाधानाङ्गभूता एव वा, प्रकरणात् । ततश्च पवमानेष्टिष्वसिद्धत्वादग्नेरतिदेशस्यैवाभावः । प्रयोजनं, पवमानेष्टिषु पूर्वपक्षेऽन्वारम्भणीया, सिद्धान्ते पृथगारम्भाभावान्नेत्यादि ॥१॥९१॥

तत्प्रकृत्यर्थम् ॥ तदाधानमग्निवदेव पर्णतान्यायेनाव्यभिचरितक्रतुसम्बन्धाग्न्यङ्गत्वेन क्रत्वङ्गत्वावगतेर्दीक्षणीयादिवदेव प्रकृत्यर्थमिति प्राप्ते ।

नाधानस्य क्रत्वङ्गत्वं, प्रमाणाभावात् । जुह्वादयो ह्याकृतिविशेषरूपाः पर्णतादिव्यतिरेकेणापि काष्ठान्तरेण जायमाना आनर्थक्य-

अन्यविकृतिषु तत्परिसङ्ख्याफलकोपसंहारार्थम् । न च वाक्यद्वय-वैयर्थ्यापत्तिः । एकेन सामिधेनीसम्बन्धोऽपरेण क्रतुविशेषसम्बन्ध-इति विषयभेदात् । न चैवमपि प्राकरणिकेनैवोभयसम्बन्धसिद्धौ इतरवैयर्थ्यम् । वाक्यद्वयाभावबलेनाभ्युदयशिरस्कत्वकल्पनादिति दशमे वक्ष्यते ॥३॥८९॥

नैमित्तिकम् ॥ यत्तु प्रकरण एव, सप्तदश वैश्यस्येति नैमित्तिकसाप्तदश्यमात्पाञ्चदश्यस्य बाधकम् । अत्र हि षष्ठ्या निमित्तत्वमेव वैश्यस्योच्यते । विजातीयत्वाच्च सामिधेन्युद्देशेऽपि न वाक्यभेदः । वैश्यस्वामिकसामिधेन्युद्देशेन वा साप्तदश्यविधिः । षष्ठ्याः परम्परासम्बन्धस्य प्रायो व्युत्पन्नत्वेन न विशिष्टोद्देशे वाक्यभेदोऽपि । वैश्योद्देशेनैव वा स्वस्वामिकसामिधेनीकत्वसम्बन्धेन तद्विधिः । सामिधेनीरनुब्रूयादित्यस्य तात्पर्यग्राहकत्वात् । अन्यपक्षद्वये च वैश्याभावे साप्तदश्याननुष्ठानान्निमित्तत्वं तस्यार्थिकम् ।

तथा, काम्यमपि गोदोहनादि एकविंशत्यादिस्तवनादि च नित्यस्य चमसपाञ्चदश्यादेर्नैमित्तिकस्य च साप्तदश्यादेर्बाधकम् । नित्यस्य सामान्यविहितत्वेन ब्राह्मणादिप्रयोगे सावकाशत्वेन च विशेषविहितान्निरवकाशाच्च काम्यनैमित्तिकाद्दुर्बलत्वावगतेः । न चैवमपि नैमित्तिकस्य कामनारहितप्रयोगे सावकाशत्ववत्काम्यस्यापि ब्राह्मणादिकाम्यप्रयोगे सावकाशत्वाविशेषेण नैमित्तिकापेक्षया बलवत्त्वानापत्तिः । साक्षात्पुरुषार्थसाधने पुरुषस्योन्मुखत्वेन काम्यस्य पुरस्फूर्तिकतया बलवत्त्वोपपत्तेः ।

न च काम्यस्य फलसङ्गत्वात्तेन फलाङ्गभूतनित्यादेर्बाधे विगुण-

तेषामङ्गविशेषानवगमेन तद्भावनाया अपरिपूर्णत्वात् । अतोऽस्मा-रम्भणीयादेरिष्टधन्यायेनैवानतिदेशः ।

वस्तुतस्तु, नाङ्गत्वमपि । अग्नीनां तु सत्यप्यङ्गत्वे साध्यत्वान्नेहातिदेशः । अवश्यं हि ये प्रथमतः आधानेष्ट्यादयः कार्याः तेभ्योऽग्निसिद्धिरङ्गीकर्त्तव्या । ततश्च तेभ्यः कार्यसिद्धावन्येषामकरणम् । यथा चैव सति पवमानेष्टिहोमादय आधानहोमावाऽऽधानजन्योत्पत्त्यपूर्वरूपाहवनीयादौ भवन्ति, तथा कौस्तुभे धारणाधिकरणेऽस् [illegible] स्पष्टम् ॥१।८।२॥

तुल्यः ॥ ज्योतिष्टोमे क्रयसन्निधावग्नीषोमीयः पशुराम्नातो वचनात् स एव औपवसथ्येऽहन्यालम्भ्यः इत्यस्मात्चतुर्थेऽहन्यनुष्ठीयते । पशुधर्माश्च तत्रैव पशूपाकरणादयः समाम्नाताः । सवनीयश्च पशुः सौत्येऽहनि समाम्नात आश्विनं ग्रह गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति इति । अनूबन्ध्यश्चान्ते समाम्नातः । तदिह पशुधर्माणां किं पशुत्रयसाधारण्यमुत सवनीयमात्रार्थत्वमुत सवनीयाग्नीषोमीयोभयार्थत्वमुताग्नीषोमीयार्थत्वमेवेति चिन्तायाम् ।

महाप्रकरणाज्ज्योतिष्टोमधर्मत्वानां धर्माणां पशुधर्मत्वेन साक्षात्तत्सम्बन्धायोगेनानर्थक्यतदङ्गन्यायेन पशुयागद्वारकत्वावगतेस्तेषां च मध्ये कस्यचिद्विशिष्य प्रकरणप्रापकत्वप्रमाणाभावेनाविशेषात्सर्वार्थत्वमित्याद्यः पक्षः ।

द्वितीयस्तु सत्यपि ज्योतिष्टोमप्रकरणस्य पशुधर्मग्राहकत्वे सवनीयस्यान्तरप्रकरणेन तद्बाधः तस्य ह्यौपवसथ्येऽहन्येवोत्पत्तिः । आग्नेयः पशुरग्निष्टोम आलभ्य ऐन्द्राग्न उक्थ्ये द्वितीय ऐन्द्रोवृष्णिः

यथाद्युक्तं यत्पर्णतादेः स्वमन्यापूर्वार्थतां बोधयन्तीति । आहवनीया-दग्नयस्तु अदृष्टविशेषरूपा आधानं विनोत्पत्तौ प्रमाणाभावादानर्थ-क्याभावेन स्वस्वरूपार्थत्वमेवाधानस्यावबोधयन्ति । अत एव तत्र नाग्निशब्दे अपूर्वसाधनत्वलक्षणा । अतः क्रत्वर्थत्वस्यैवाभावात् प्रक-त्यर्थता दूरापास्तैव । न चैवमाधानाकरणे क्रतुवैगुण्यानापत्तिः । अन्यभावेन वैगुण्योपपत्तेः ।

वस्तुतस्तु, लाघवेन क्रतुविधीनां आधानविधिसिद्धाग्निपरत्वे-नैवोपपत्तौ स्वयं अग्निप्रयोजकत्वाभावादनाहिताग्नेरनधिकारः क्रतु-ष्विति वैगुण्यशङ्का दूरापास्तैव । एवं पवमानेष्टीनामक्रत्वर्थत्वं व्याख्यातम् । प्रयोजनं, पूर्वपक्षे आधानस्य कालान्तराधानेन भिन्न-प्रयोगविहितत्वया सर्वार्थं सकृदनुष्ठानेऽपि दृष्टतिसवादिवदधि-कारिविशेषणत्वे प्रमाणाभावात्क्वित्वे आधानं विनाऽप्यनुष्ठानं यथा-शक्तिप्रयोगे । सिद्धान्ते त्वधिकारसम्पादकत्वाचेति ॥१॥८.२॥

भाष्यम् ॥ पवमानेष्टीनां दर्शप्रकृतिकत्वादतिदेशेन प्रयाजादि-वदेवाग्निः प्राप्नोति । ते आधानपवमानेष्टिसाध्या इति ततः पूर्वं कर्त्तव्यमेवाधानम् । पवमानेष्टयश्च । न चानवस्था । यावत्पौर्णमा-स्यादिकालं करणोपपत्तेरिति भाष्ये ।

न तावत्पवमानेष्ट्यादिक प्रकृतावग्नि, अग्निसाधार्थत्वस्य व्यापित-त्वात् । अत्यपि चाङ्गत्वे तेषां नातिदेशः । पवमानेष्ट्यादिषु यत्कि-ञ्चिदितिकर्त्तव्यताकपवमानेष्ट्युपेतफलाङ्गसम्बन्धेनैव प्रकृतेः पूर्णतां परिकल्प्य पवमानेष्टिष्वतिदेशाकल्पनादेषामङ्गानां प्रकृतौ साङ्ग-सम्बन्धेन निराकाङ्क्षता तेषामेवातिदेशो न पवमानेष्ट्यादीनाम् ।

तात्त्वेनायोग्यसम्बन्धयोर्वाक्यार्थयोः सन्निधिरिति स्थानलक्षणम्। यद्यपि चात्र पशुधर्माणां श्रुत्यादिविनियुक्तत्वान्न प्रकरणस्य स्थानस्य वा विनियोजकत्वसम्भावना, तथाप्यपूर्वसाधनत्वलक्षणतात्पर्यग्राहकत्व एव विनियोजकव्यवहारो भाक्त इति द्रष्टव्यम्। न चैवमपि प्रकरणेन स्थानबाधापत्तिः। अग्नीषोमीयस्य पशुधर्माकाङ्क्षायामेवातिदेशकल्पनवदौपदेशिकस्थानस्यैव विनियोजकत्वकल्पनौचित्यात्। अन्यथा प्रबलौपदेशिकप्रमाणेन प्रकृत्यर्थत्वाद्धर्माणां क्वापि विकृत्यर्थत्वानापत्तेः। इन्द्रादेरुपायान्तरेणापि स्मृतिसम्भवाच्च लिङ्गादेः श्रुतिकल्पकत्वमिति विशेषः। अत उभयार्थत्वमिति प्राप्ते।

न सवनीयस्थानान्तरप्रकरणं, मौत्येऽप्यनुपपत्तेः। अन्यथा दूरस्थकर्मानुवादेन कालरूपानुपादेयगुणविधानानुपपत्तेः। न च प्रातःसवन उत्कृष्टत्वादेवोपस्थितिः। आनुमानिक्युपस्थितेरङ्गग्राहकत्वेऽपि प्रकरणान्तरप्रतिबन्धकत्वस्य क्वाप्यदर्शनात्। अस्तु वा तत्, तथापि वपाभ्यासमात्रस्य प्रातःसवन उत्कृष्टत्वेऽपि उपाकरणोत्कर्षे प्रमाणाभावात्तदुपस्थित्यनुपपत्तेः। यद्यपि चोपाकरोतिना याग एव लक्ष्येत, तथापि प्रक्रमार्थस्योपाकरणस्याश्विनग्रहणोत्तरकालस्याप्राप्तेरनुवादानुपपत्तिः। यद्यपि च वपाप्रचारोत्तरभाविपदार्थानान्तदाद्युत्कर्षन्यायेनोत्कर्षः सम्भाव्येत, तथापि न तत्पूर्वभाविनामुपाकरणादीनामुत्कर्षे प्रमाणमस्ति। वस्तुतस्तु। पूर्वचुर्वदिकरणन्यायेनापूर्वत्वात्तदुत्तरभाविनामपि नोत्कर्षः।

वस्तुतस्तु, गङ्गायाङ्घोष इत्यादौ प्रकृतार्थस्य घोषान्वयप्राप्त्यभावेऽपि लक्षणादर्शनात्तस्योत्तरकालप्राप्त्यभावेऽपि उपाकरोतिना वपा-

षोडशिनि तृतीयः सारस्वती मेष्यतिरात्रे चतुर्थीत्येतैर्वचनैः क्रतुपशूनां विधानात् तस्य च क्रत्वोपकारप्राकृताङ्गसम्बन्धेऽपि अपेक्षितानां पशुधर्माणां सन्निहितत्वेन प्राकृताङ्गसम्बन्धत्वेन चात्र प्रकरणोपपत्तिः। ऐन्द्राग्नादिपशूनान्तु संख्याधिकरणन्यायेन समानविधानत्वाभावादेव न पशुधर्मग्राहकत्वशङ्का। अस्तु वा तेषामप्यवान्तरप्रकरणाद्धर्मग्राहकत्वम्। नैतावता सर्वार्थत्वम्। न च सौत्येऽहनि तद्विधिः। सवनीयोद्देशेन तस्याश्विनग्रहणोत्तरकालमात्रविधायकत्वात्। यूपपरिव्याणस्य त्रिवृता यूपं परिव्ययतीति सामान्यविधिना आश्विनग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययतीति परिव्याणान्तरविधिना वा प्राप्तत्वेनानुवादात्। परिव्याणान्तरे त्रिवृत्त्वस्यापि रशनासाधारण्याधिकरणे उपपादयिष्यमाणत्वाच्च। न च तथापि द्रव्यकर्मानुवादेन कालविधिरशक्यः। औपवसथ्याहे विहितानामपि क्रतुपशूनां वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यन्दिने अङ्गैस्तृतीयसवने इत्यनेनोत्कर्षविधानात्सौत्येऽहन्यनुष्ठीयमानतयोपस्थित्युपपत्तेः। तेन यथैव क्रयसन्निधावाम्नातस्याग्नीषोमीयस्यौपवसथ्येऽहन्यनुष्ठीयमानत्वे नैव धर्मग्राहकत्वं सिद्धान्ते, तद्वदिहापीति न दोषः। न चैवमपि क सवनीयविधिरित्यत्र विनिगमनाविरहः। धर्मग्राहकस्यैव नियामकत्वात्। अतश्चावान्तरप्रकरणात्सवनीयार्थ इति।

तृतीयस्तु सत्यं सवनीयार्था. स्थानादग्नीषोमीयार्था अपि। तस्य हि क्रयसन्निधौ विधिदर्शनादेव क्रत्वोपकारकप्राकृताङ्गैर्निराकाङ्क्षितत्वात्तस्यौपवसथ्येऽनुष्ठानादर्थोपस्थितिमात्रत्वेन स्थानम्। सवनीयवाक्यसन्निधानाभावेन प्रकरणग्रहणानुपपत्तेः। अत एवेतिकर्तव्य-

विंशिष्य प्रमाणान्तरमपूर्वसाधनत्वेऽपि स्थापकं न स्यात्, ततो महा-प्रकरणगृहीतानामेषामानर्थक्यतदङ्गन्यायेन भवेत्सर्वपदार्थत्वम्। न तु तदस्ति। स्थानेनाग्नीषोमीयार्थत्वावगमात्। तेन सिद्धमग्नीषोमीय एवोपदेशोऽन्यत्र त्वतिदेश इति। सामान्यविषयप्रयोजनं दशमादौ स्पष्टम् ॥२।८।४॥

दोहयोः॥ दर्शपूर्णमासयोर्दधि पूर्वेद्युरपरेद्युश्च पय उत्पाद्यते। दोहधर्माश्च शाखाहरणादयः पूर्वेद्युः क्रियन्ते। तेषामनुष्ठानसादेश्याद्दधिमात्राङ्गत्वमिति प्राप्ते।

यद्यपि स्थानं भवेत्तथापि प्रकरणेन तद्बाधः। न ह्यत्र पूर्ववत् क्रमोपकारकत्वादिना प्रकरणाभावः शङ्कितुं शक्यः। न च स्थानमत्र दधियागस्यास्ति। उत्तरेद्युरेवानुष्ठानात्। दध्नस्तु विद्यमानमपि स्थानमैक्यभियाऽपूर्वसाधनलक्षणतात्पर्यग्राहकम्। न च सान्नाय्यविधया दध्नैव यागोपस्थितेः स्थानग्रहः। तादृशोपस्थितेर्नैयत्याभावेन ग्राहकत्वानुपपत्तेः। किञ्च दोहधर्माः परेद्युरेवाम्नातास्तत्रैव भाव्यापेक्षायां प्रकरणादुभयार्थत्वेनावगम्यमानाः सामर्थ्यात् पूर्वेद्युरनुष्ठीयमानदधिसिद्ध्यर्थं पूर्वेद्युस्तत्रैव क्रियमाणा अपि न तन्मात्रार्था भवन्ति। दोहनादयस्तु सामर्थ्यादेवावर्त्तन्त इति विशेषः ॥२।८।५॥

तद्वत्सवनान्तरे॥ ज्योतिष्टोमे प्रातःसवनिकग्रहणसन्निधौ दशधर्मा उपोप्तेऽन्ये ग्रहाः सादयन्तोऽनुपोप्ते ध्रुव इत्याद्याः। ते निःसन्दिग्धस्थानात् प्रातःसवनिकग्रहमात्रार्था इति प्राप्ते। माध्यन्दिनसवनिकादीनामपि प्रकरणात्तेन च स्थानबाधात्सर्वार्थत्वं, प्रयाजादीनामिवाग्नीषोमीयार्थत्वमिति ॥२।८।६॥

भावलक्षणोपपत्तेः। पशुनपक्वमोपयोगियूपदार्व्यत्यात्ककद्वितीयपरि-
व्याणस्याग्निमन्थनोत्तरकालताविधित एव तदुत्तरभावित्वपायाग-
स्यापि चाग्निमन्थनोत्तरकालत्वसिद्धेरेतदाक्यवैयर्थ्यमित्या एवाभ्यासा-
दैतस्योत्पत्तिविधित्वम्। तथापीतरस्य सर्वस्य द्वितीययूपपरिव्याणा-
देर्वाक्यान्तरप्राप्तत्वात्कालविशिष्टं प्रशुमेव वा द्रव्यदेवताविशिष्टं कर्म
विधीयते। अतएवानेनैव वाक्येनाग्नेयसवनीयस्यैतत्समानजातीयैश्च
वाक्यान्तरैरैन्द्राग्नादीनां विधानादौपवसथ्याहे तेषां पुनः श्रवणमनु-
वादमात्रम्। तदपि यथा वै मत्स्योऽविदितोजलमवधूनुते एव-
मेतेऽप्रज्ञायमानाजलमवधून्वते इत्यर्थवादश्रुतसन्ततकरणनिमित्तक-
निन्दोपपादकैतत्कर्मापेक्षितपशुसमर्पणार्थं निन्दाश्रौतदोषपरिहा-
रार्थं च वपया प्रातःसवने चरन्तीत्यादिना वपाप्रचाराद्युद्देशेन
प्रातःसवनादिकालविधिः। स्वपक्षमः कालभेदेनानुष्ठाने हि मध्ये
सत्यर्थमवकाशलाभाद्दोषपरिहारः। यद्यपि चात्रापि कालविधान-
न्दूरस्थकर्मानुवादेन न शक्यम्, तथाप्यर्थवादत एव तदुपस्थितेर्न
कश्चिद्दोषः।

यत्तु प्रचारविप्रकर्षलोपादियुगुणस्य सत्त्वान्न दोष इति मूलोक्तं
समाधानं, तद्विप्रकर्षस्याप्रमाणस्य विधेयत्वाभावादुपेक्षितम्। अतो न
सवनीयस्याथान्तरप्रकरणम्। स्थानाच्चाग्नीषोमीयाङ्ग पशुधर्माः।
न च ज्योतिष्टोमप्रकरणेन स्थानबाधः। पशुधर्माणां श्रुत्यादिभिः
पशुसंस्कारकतया विनियुक्तानामयोग्यतया ज्योतिष्टोमप्रकरणेना-
ग्रहणात्। अतो यत्रैव श्रुतः सम्बन्धो यथा वाजपेयस्येत्यादौ, तत्रै-
वानर्थक्यतदङ्गन्यायो न तत्र। एवं यद्यपि यदि कस्यापि पशो-

व्ययतीति विधिनाऽभ्यासात्परिव्याणान्तरं विहितम्। आश्विनोत्तरकालत्वस्य पाठादुपनिष्क्रमणस्य चार्थादेव प्राप्तेः। तच्च प्रकरणात् यजनीयस्यैवाङ्गमिति तदपि च न प्राकृतकार्यापन्नम्। प्राकाशदानवद्विधिवैयर्थ्यापत्तेः। अत एव तत्कार्यमदृष्टं यूपदार्ढ्याधिक्यं वेत्यन्यदेतत्। तदिह रशनातद्धर्माय त्रिवृत्त्वदर्भमयीत्वाद्योनाप्राकृतकार्यापन्ने परिव्याणान्तरे यूपावटबर्हिरास्तरण इव भवन्तीति प्राप्ते।

उत्पत्तिवाक्ये त्रिवृत्त्वानुवादरूपतात्पर्यग्राहकबलाल्लाघवाच्च महनापूर्वसाधनीभूत-यूपपरिव्याणत्वमेवोद्देश्यतावच्छेदकं, न तु विजातीयपरिव्याणत्वम्। तथात्वे उत्पत्तिवाक्ये त्रिवृत्त्वस्याप्राप्तत्वेन विधाने गौरवापत्तेः। अत उद्देश्यतावच्छेदकरूपसत्त्वात्तत्रापि रशनातद्धर्माः। व्याख्यातृणां तु भङ्गिविशेषेण यूपच्छेदनपरिव्याणरशनातद्धर्माणां सर्वेषामुपदेशेनैव त्रितयसाधारण्यमङ्गीकृत्य यजनीयपरिव्याणान्तरे उपदेशेनैव तत्प्राप्तं व्याचक्षाणानामभिप्रायं न विद्मः॥१॥८७॥

आराधिकरणम्॥ यज्ञधर्माणां यज्ञस्वरूपे सामर्थ्यप्रसक्तौ यज्ञयागाभ्यासाधनत्वमेव यज्ञपदेन लक्ष्यते, दीक्षणीयाशाङ्गिरसन्यायेन। न तु ज्योतिष्टोमापूर्वसाधनत्वम्। अतश्च प्रकरणोपस्थितापूर्वसाधनत्वस्यैव लक्षणयानारभ्याधीतानां यज्ञापूर्वार्थत्वं धर्माणामिति प्राप्ते।

प्रकरणादन्येषामिवानुष्ठानसादेश्यादनारभ्याधीतानामनुपस्थितेर्वाक्यसङ्कोचे प्रमाणाभावादेव सर्वार्थत्वम्। अत एव प्रबलेन दुर्बलेन वा प्रमाणेन साधनत्वेनावगतानां सर्वेषामेव हविषां वेद्यादिकमङ्गम्। वस्तुतस्तु पञ्चदाश्ययोरनारभ्योत्पन्नयोरपि प्राकरणिकवाक्येनैव क्लृप्तेति तुल्यत्वमेव॥२॥८८॥

रशना च ॥ पशुनियोजनाङ्गत्वेन विनियुक्तस्य यूपस्यानुष्ठानसादेश्यादग्नीषोमीयापूर्वसाधनीभूतपशुनियोजनार्थत्वम् । अतिदेशात्तु सवनीयानुबन्ध्यार्थत्वम् । एवं तदुत्पादकानां छेदनादिसंस्काराणामपि । यद्यपि च यूपस्वरूपे आनर्थक्याभावस्तथाप्यनुवादस्य सन्निहितगामित्वादेवाग्नीषोमीये निवेशः । विकृतौ त्वभिक्रमणवदूहनम् । तेषां तु भेदेनानुष्ठाने प्राप्ते दीक्षाकालस्याप्युपदेशातिदेशाभ्यां विहितस्यैकत्वात्तन्त्रेणानुष्ठानादेकस्या एव यूपव्यक्तेः सर्वोपकारकत्वमेकादशे वक्ष्यते । ये च परिव्याणादय उत्पन्नयूपसंस्कारकास्तेषामप्यनुष्ठानसादेश्यातिदेशाभ्यां प्रकृतिविकृत्यङ्गत्वम् । यूपस्वरूपस्य तद्व्यतिरेकेणाप्युत्पन्नत्वात् । यूपव्यक्तेरेकत्वात्तु व्यक्त्यमात्रविशेषत्वेऽप्यातिथ्याबर्हिःप्रोक्षणन्यायेन प्रसङ्गेन कार्यसिद्धेर्नावृत्तिः ।

न चैवं सत्यायेनैवाग्निपावमानागोदेदार्शपूर्णमासिकस्यापि विकृतौ प्रसङ्गापत्तिः । व्रीहिप्रोक्षणादिवदपूर्वकार्यकूटोद्देशेन यद्यप्युत्पत्तिसात्कार्यकूटाङ्गभूततद्व्यक्तिगतसंस्कारजन्यादृष्टं प्रति तत्कार्यान्तिमकार्यत्वेन नाशकत्वस्य क्लृप्तत्वेन तदनापत्तेः । अग्निपावादेर्यत्कार्यकूटोद्देशेनोत्पत्तिः तत्कार्यकूटाङ्गसंस्कारः । सर्वाङ्गस्य ज्योतिष्टोमापवर्गत्वात् । अतश्च तद्व्यक्तिजन्यादृष्टत्वावच्छिन्नं प्रति* तत्फलीभूतान्तिमकार्यत्वेन नाशकतेति विशिष्य कार्यकारणभावेनैव तत्प्रयोगस्यान्तिमफलेन नाश इति वैषम्यम् । एवं च परिव्याणरशनातद्धर्मादय औपसद्येऽप्यनुष्ठीयमाना अप्युपदेशातिदेशाभ्यां वितर्योपकारकाः । अपनीयेऽपि चास्मिन् यद् सर्वैनोपनिष्क्रम्य यूपं परि-

* इत्यसेन पाठः सर्वत्र । मम तु, प्रति,—इति पाठः प्रतिभाति ।

मध्युपदेशस्य सोमतात्पर्यकत्वाभिवारणेन विकारभूतेऽपि फलचमसे अप्राकृतविशेष्यकत्वप्रसङ्गादभिषवाद्यनापत्तेः । अतश्च सर्वत्र संस्कारविधौ प्रकृत्यपूर्वसाधनत्वप्रकारकप्रकृत्यपूर्वसाधनविशेष्यक एव बोध इति तद्वत् कुर्यादित्यतिदेशेन विकृत्यपूर्वसाधनेऽपि समानविधानत्वाभावेऽपि धर्मप्राप्तिरविरुद्धा । प्रकृते तु फलचमसस्य प्रकृत्यपूर्वसाधनत्वादेव यवादिवदुपदेशविषयत्वमिति मते ।

सर्वत्र संस्कारविधौ प्रकृत्यपूर्वसम्बन्धित्वप्रकारकप्रकृत्यपूर्वसम्बन्धिविशेष्यक एव पार्यन्तिक उद्देश्यबोधः । तथापि सा सम्बन्धिता यद्धर्मावच्छिन्नस्य संस्कारविधिपार्यन्तिकशाब्दबोधात्पूर्वं प्रमीयते, तद्धर्मावच्छिन्नस्यैव संस्कारविध्युपदेशविषयत्वेन व्यवहारो नान्यस्य तस्य । घटादेरिव तत्त्वेनाप्रतीतस्योद्देश्यत्वानुपपत्तेः ।

अत्र च मते पयसि दध्यानयतीत्यादौ प्रथमं पयस्त्वावच्छिन्नोद्देशेन विधीयमानेऽपि दध्यानयने पयस्त्वावच्छिन्नस्यापूर्वसाधनत्वबोधोत्तरमेवापूर्वसाधनत्वावच्छिन्नोद्देश्यतायाः पार्यन्तिकत्वात् पयस एवोपदेशविषयत्वं पार्यन्तिकपदोपादानाच्च विरुध्यते । प्रकृते च न फलचमसत्वावच्छेदेनापूर्वसाधनताऽभिषवादिविधितः पूर्वं प्रमिता । तथात्वे च यदि सोमं विभक्षयिषेत्तमस्मै भव प्रयच्छेत् सोममित्याद्यनुवादानुपपत्तेः । अतस्तात्पर्यग्राहकानुरोधेन सत्यप्युद्देश्यतावच्छेदकावच्छिन्नत्वेनोपदेशविषयत्वे फलचमसस्येत्यसमानविधानता । अतश्च तस्यैव धर्माकाङ्क्षायां सत्यपि कर्मैकत्वे कल्पितेन स्थानापत्त्याख्यातिदेशेन क्रयाभिषवादीनां सोमधर्माणां प्राप्तिः । अत एव प्रकृतोपदेशविषयभिन्नविषयत्वादस्य संस्कारो बलमापद्यते ।

अग्न्यङ्गम् ॥ इष्टकाधर्माणामक्ष्णयालादीनामनारभ्याधीतविधि-
ष्वादीष्टकाविनियोगस्याप्यनारभ्याधीतत्वात् प्राकरणिकेष्टकामात्र-
धर्मत्वमिति प्राप्ते । पूर्ववदनुष्ठानसादेश्यादिष्टकाप्रयोज्यचयनापूर्व-
सम्बन्धित्वस्यैव लक्षणीयस्यानारभ्याधीतास्वप्यविशेषात्सर्वास्वप्युभयधर्म-
त्वम् ॥ ३ । ८८ ॥

नैमित्तिकम् ॥ सोमधर्मा अभिषवादय फलचमसेऽपि समान-
विधाना. । सोमत्वरूपे आनर्थक्यप्राप्तौ लक्षणीयस्य ज्योतिष्टोमापूर्व-
साधनीभूतद्रव्यप्रकृतित्वस्योद्देश्यतावच्छेदकस्य यथैवमिव फलचमसे-
ऽप्यविशेषात् । न चात्र सोमत्वमपि विवक्षितम् । फलचमसे स्थाना-
पत्त्याऽप्यभिषवाद्यनापत्तेः । न च नित्यानामभिषवादीनामनित्यक्रतु-
सम्बन्धे अनित्यस्य फलचमसस्य द्वारत्वानुपपत्तिः । नित्यानामपि
नित्यसोमवदनित्यफलचमसस्य द्वारत्वे उद्देश्यत्व एव वा बाधका-
भावात् । इत्यत एव हि वपाया यजुषेत्यादौ नित्यानां नैमित्ति-
कानां च होमादीनामुपाङ्गत्वादिविषयता ।

न च नैमित्तिकस्य नित्यविनियोगोत्तरप्रतीकत्वेन विलम्बित-
प्रतीकत्वादतुल्यत्वम्* । तथात्वे प्रमाणाभावात् । कथञ्चित्त्वेऽपि वा
संस्कारविध्युत्तरप्रवृत्तिकत्वे प्रमाणाभावेन तुल्यत्वाच्च । अस्तु वा
तत्तथापि संस्कारविध्युद्देश्यतावच्छेदकाक्रान्तत्वस्य फलचमसेऽप्यनिवा-
रणाच्च । न च संस्कारविधावपूर्वसाधनत्वरूपसामान्यधर्मप्रकारक-
सोमविशेष्यकबोधाङ्गीकारान्न फलचमससङ्ग्रह इति वाच्यम् । एव-

* इत्थमेव पाठः सर्वत्र । नित्यविनियोगोत्तरप्रतीतिकत्वेन विलम्बित-प्रतीतिकत्वादतुल्यत्वम्,—इति तु समीचीनं प्रतिभाति ।

एवं यत्र नावयवविघटितसादृश्येन प्रतिनिधित्वं न समानविधानत्वं, न वा कार्यापत्त्याऽपि धर्मप्राप्तिः । यथाऽवघातप्रतिनिधितया नखनिर्लुञ्चनादेः करणे नखेषु प्रोक्षणादेः । यूपावटस्तरण-बर्हिर्वैश्वौकिकेतिकर्त्तव्यतोपादानेऽपि चरितार्थत्वात् । फलचमसे तु तमसि भक्ष प्रत्यक्षेदित्यादिशब्दगतलिङ्गादेवातिदेशकल्पनमिति विशेषः । प्रयोजनं, व्रीहीणां मेध इति मन्त्रस्य पूर्वपक्षे लोपः, सिद्धान्ते त्वूहः । मन्त्रान्तर्गत-व्रीह्यादिपदानां व्रीहित्वबाधकताऽऽश्विनबाधकताकानामित्यर्थेनावयवेष्वपि प्रयोगोपपत्तेः ॥३॥१०१॥

नियमार्था ॥ यत्र तु पूतीकादौ तत्वेन विधितस्तत्र सकलाङ्गयुक्तसोमजन्ययागप्रयोगासम्भवे पदादेव तत्सदृशस्य समानविधानत्वम् । न ह्यत्र पूतीकगतावयवानां प्रतिनिधिनियमः । तेषां सन्दंष्ट्रत्वेन पचेऽप्यप्राप्तेः । पूतीकपदेऽवयवलक्षणाप्रसङ्गाच्च । न च नियमविधिलाघवानुरोधेन तदङ्गीकारः । तस्य फलमुखत्वेन नियादृष्टपत्यधिकरणेन न्यायेनाकिञ्चित्करत्वादिति प्राप्ते ।

पूतीकपदार्थस्य हि पूतीकत्वस्य याग करणत्वं श्रुतं, द्वितीयान्तत्वात् । अतश्च नियमविधिलाघवानुरोधेन तथा न पूतीकत्वस्य यागसाधनत्वं सम्भवति । अपि त्ववयवनिष्ठसाधनतानामारोपकप्रयोगकत्वमिति न पूतीकपदेऽवयवलक्षणा । सदृशनियामकन्यायप्रवृत्तेः पूर्वमेव चास्य विधेः प्रवृत्तेर्नियमविधित्वोपपत्तिः । तत्रयापि कतिपयावयवसाधनत्वस्य सोमसाम्यादेव सिद्धेः समानविधानत्वम् ॥३॥१०२॥

संख्यासु ॥ ज्योतिष्टोमे चतस्रः संस्था अग्निष्टोमोक्थ्यषोडश्यतिरात्रसंज्ञाः । संस्था नाम क्रतुप्रयोगसमाप्तिरूपोपरमः । तत्र दादश

वस्तुतस्तु गुणकामवाक्य इवात्र भावनान्तरमेव विधीयते। अनेकगुणोपादानाच्च। अतश्च तथा एवैतिकर्त्तव्यताकाङ्क्षयाऽतिदेशकल्पनमित्यपि शक्यं वक्तुम्। अत एव श्येनादिभिन्नानामाहरणस्यैवौपदेशिकत्वान्न क्रय इति केचित्। प्रयोजनं, गुणकामप्रवृत्त्यप्रवृत्ती। सोमपदवतोमन्त्रस्य लोपोहौ च ॥३॥१००॥

प्रतिनिधिश्च ॥ व्रीह्याद्यभावे नीवारादिवद्द्रव्यप्रतिनिधेरपि संस्कारविधितः पूर्वं साधनत्वानवगमादसमानविधानत्वम्। प्रकृताङ्गयुक्तव्रीहिजन्ययागप्रयोगासम्भवे कर्मशास्त्रेण तदाक्षेपादिति प्राप्ते।

सत्यमुत्तरकालं तदाक्षेपः, तथापि व्रीहिशास्त्रार्थालोचनवेलायामेव व्रीहित्वजातेर्यागसाधनत्वेऽवगते तदन्यथानुपपत्त्या तदवच्छिन्नव्यक्त्युपादारम्भकीभूतावयवानां च साधनत्वमाक्षिप्यते। अतश्च जातिव्यक्त्यवयवसाधनतानां पूर्वमेवावगतानां सर्वासामसम्भवे कतिपयावयवस्योत्तरकालप्रतीतिकत्वेऽपि स्वरूपेण पूर्वावगतेः समानविधानत्वोपपत्तिः। न हि नीवारत्वेन रूपेण तेषामुपादानं, येन तद्रूपेण साधनत्वबोधस्योत्तरकालिकत्वादसमानविधानत्वापत्तिः। अपि तु व्रीह्यारम्भकावयवसमानजातीयकतिपयावयवारब्धत्वात्। अतश्च तेषां व्रीह्यवयवनिष्ठसाधनताप्रत्यभिज्ञानेनोपादानेऽप्यवयवसाधनतायाः संस्कारविधिभ्यः पूर्वमेव प्रमितत्वात्समानविधानत्वोपपत्तिः। संस्कारविधिषु हि प्रकृतापूर्वसाधनीभूतप्रदेयद्रव्यप्रकृतित्वावच्छिन्नस्यैव प्रकृतित्वस्योद्देश्यतावच्छेदकत्वादवयवनिष्ठसाधनताया अवयवनिष्ठसाधनतातोऽभेदेऽपि* न विरोधः।

* अवयवविनिष्ठसाधनतातो भेदेऽपि,—इति भवितुमुचितम्।

ष्टोमादिवत् प्रकरणविशेषाद्दीक्षणीयादिधर्माणामुभयार्थत्वमिति प्राप्ते।

फलवत्त्वज्ञानं विना धर्माणामङ्गत्वबोधानुपपत्तेस्तस्य च गुणाश्रये आश्रयफलसम्बन्धव्यतिरेकेणाबुध्यमानत्वादाश्रयस्य च स्वविधिविहितस्य लाभसम्भवे गुणेनोत्पत्तिविनियोगप्रयोगाणामसम्भवेऽपाङ्गधर्माणां गुणान्वयात् पूर्वमेवाश्रयान्वयस्य तद्विधिपर्यवसानार्थमवश्यं वाच्यत्वेन विरम्य व्यापारत्वापत्तेर्नोभयार्थत्वम्। न ह्येवमाश्रयनिष्ठफलवत्त्वज्ञानं गुणान्वयाधीनम्। तद्बोधव्यतिरेकेणापि यागस्य क्रियात्वस्य फलवत्त्वबोधोपपत्तेः। गुणे तु फलवत्त्वज्ञापकविधिवैयर्थ्यापत्त्यैव तत्तिद्याघ्याश्रयान्वयस्य धर्मान्वयात् पूर्वमवश्यं वाच्यत्वम्। अत एवाश्रयोगुणनिष्ठकरणतासम्बन्धको गुणकरणतावच्छेदककोटिप्रविष्टो वेति करणाकाङ्क्षैव वितता आश्रयाकाङ्क्षेति मूलसंवादः। अतो धर्माणामाश्रयाङ्गत्वमेव। गुणभावनायान्तु आश्रयतो धर्मातिदेश इति सिद्धम्।

प्रयोजनं, यद्यपि न गुणकामप्राप्तिरूपं सम्भवति। संस्थानां विकृतित्वेऽपि तदाश्रयभूतस्य ज्योतिष्टोमस्य प्रकृतिभूतस्य सत्त्वेनैव सदोमानाद्याश्रितगुणकामानां षोडश्याद्यभावादङ्गभूतयज्ञायज्ञाद्याश्रितानां वा गुणकामानां प्राप्त्युपपत्तेः। नाप्युद्भिदादीनां वैकल्पिकसत्याप्रकृतित्वरूपम्। यागत्वसादृश्याधिक्येन ज्योतिष्टोमप्रकृतित्वस्यैवोपपत्तेः। तथापि यत्राथेम मूर्वैश्वदेन इत्यादौ न यागत्वपरिचायकपदश्रवणं, तत्र वैकल्पिकसत्याप्रकृतित्वं पूर्वपक्षे। सिद्धान्ते ज्योतिष्टोमप्रकृतित्वमेवेति द्रष्टव्यम्। सत्याङ्गभूतधर्मभेदे याजुर्वैदि-

स्तोत्राण्यग्निष्टोमे । तत्राग्निष्टोमस्तोत्रमन्त्यम् । साऽग्निष्टोमसंस्था नित्या काम्या च । संयोगपृथक्त्वाद्दध्यादिवत् । उक्थ्येऽग्निष्टोमस्तोत्रोत्तर-त्रीण्यन्यान्युक्थ्यस्तोत्राणि । सोक्थ्यसंस्था । षोडशिनि तदुत्तरं षोडशिस्तोत्रम् । सा षोडशीसंस्था । अतिरात्रे तदुत्तरं द्वादश स्तोत्रात्मकास्तिस्रो रात्रिपर्यायाः सन्धिस्तोत्रं च । साऽतिरात्रसंस्था । याश्चात्यग्निष्टोमवाजपेयाप्तोर्यामाख्या अन्यास्तिस्रः संस्था गण्यन्ते, ता एतास्वेवान्तर्भूताः । यथाग्निष्टोमस्तोत्रोत्तरं उक्थ्यान्यकृत्वा षोडशि-स्तोत्रं क्रियते, सा अग्निष्टोमसंस्थैवात्यग्निष्टोमपदवाच्या । यथावस्थित-षोडश्युत्तरं यत्र वाजपेयस्तोत्रं क्रियते, सा षोडशीसंस्थैव वाजपेयपद-वाच्या । यथातिरात्रे चतुर्थरात्रिपर्याय-स्तोत्रचतुष्टयात्मकोऽधिकस्ते, तदति-रात्रसंस्थैवाप्तोर्यामपदवाच्या । तत्रात्यग्निष्टोमो राजन्यस्य नित्यः । अत्यग्निष्टोमे राजन्यस्य गृह्णीयादिति वचनात् । अन्यास्तूक्थ्यादयः काम्याः । पशुकाम उक्थ्यं गृह्णीयात्, षोडशिना वीर्यकामः स्तुवीत, अतिरात्रेण प्रजाकामं याजयेदिति वचनेभ्यः । अग्निष्टोमादिशब्दानां प्रचुरप्रयोगात् संस्थास्वेव शक्तिः, तदपि ज्योति-ष्टोमे निरूढलक्षणा, तदपि क्रत्वन्तरे सामानिकी, यज्ञे स्तोत्रे च गौणीत्येवं कौस्तुभे द्रष्टव्यम् ।

अतश्च संस्थानामेव फलसम्बन्धः । यच्चाप्तोर्यादिक तत्-द्वाक्ये वाक्यान्तरमात्रमनूद्यते । तथा पदार्थवृत्तिप्रयोगस्य प्रतिसम्ब-न्ध्यपेक्षायाश्च प्रकरणाज्ज्योतिष्टोमकर्तरेवाश्रयत्वेनान्वीयते । तदेत-त्सर्वमिन्द्रियकामाधिकरणे स्थितमेव । इह तु सर्वगुणकामाश्रय-मात्रविधिं न वेति चिन्तायां, फलवत्त्वेन संस्थादीनामपि ज्योति-

## अथ सप्तमः पादः।

प्रकरणाविशेषात् ॥ दर्शपूर्णमासयोर्वेदिबर्हिषी तद्धर्माश्च खननलवनादयः किमङ्गप्रधानसाधारणहविरासादनार्थौ उत प्रधानापूर्वमात्रहविरासादनमात्रार्थाविति विचारे। येषां हवींष्यासादयति बर्हिषि हवींष्यासादयतीति वचनेन वेदिबर्हिरासादनस्य हविरुद्देशेन विधानादुभयोस्तयोरपि हविरर्थत्वप्रतीतेर्हविःस्वरूपे चासमर्थ्यप्रसक्तौ अपूर्वसाधनत्वलक्षणतात्पर्यग्राहकजिज्ञासायां अप्रतिबद्धप्रवृत्तप्रधानाधिकाराख्यप्रकरणस्यैव तात्पर्यग्राहकत्वावसायादनेन चाङ्गत्वसम्बन्धस्यैव शाब्दस्य लक्षणाघटकतया अयणात् प्रधानापूर्वाङ्गभूतहविरर्थत्वमेवेति प्राप्ते।

प्रकरणेन वाक्यसङ्कोचे प्रमाणाभावादानर्थक्यपरिहारार्थं यथा प्रधानप्रकरणेन तात्पर्यग्रहस्तथा दुर्बलेनापि अङ्गाधिकाराख्यतत्प्रकरणेनापि। अत एवानारभ्याधीताङ्गानुष्ठानवादेऽस्यापि तात्पर्यग्राहकत्वमुक्तम्। तेन सर्वार्था एवैते। अस्तु वा प्रधानप्रकरणस्यैव तत्। तथापि नाङ्गत्व सम्बन्धघटकं, गौरवात्। अपि तूपकारकत्वमात्रं, अभ्युदितेष्ट्यां दधिपयसोरिव। सम्बन्धमात्रं वा स्वर्गादिवद्गम्यत्वाच्च। अतश्च प्रधानापूर्वोपकारकहविरर्थत्वमात्रावगते रङ्गतदङ्गहविषामपि अनारभ्याधीतानां प्राकरणिकानां वा प्रधानोपकारकत्वाविशेषात् सर्वार्थत्वम् ॥१॥१०॥

कादिप्रायश्चित्तं पूर्वपक्षे। सिद्धान्ते त्वविज्ञातमपि। तथा, यज्ञस्याग्नीदृषभगौयेत्यादि यज्ञपदोपेतमन्त्रे अविकृत प्रयोग पूर्वपक्षे। सप्तायामस्य लोपात्। सिद्धान्ते तु यज्ञस्य सप्तायायागौरित्येव मूहितव्यम्, इत्याद्यपि द्रष्टव्यम् ॥२॥१०२॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां

तृतीयाध्यायस्य षष्ठः पादः ॥

देयर्थाददृष्टरूपभोक्तृत्वार्थमेव युक्तम्। भोक्तृत्वस्य कर्तृत्वापेक्षया अभर्हितत्वाच्चैवम्। शरीरादीनामपि स्वावच्छेद्यत्वेवात्मगतत्वसम्बन्धेन भोक्तृत्वोपयोगित्वमव्याहतम्। न चैव प्राधान्यापत्तिः, चैत्रसंस्काराणां बीजावपनार्थत्वस्येवात्मसंस्काराणामपि क्रतुजन्यफलाधानयोग्यताजननार्थानां क्रत्वङ्गत्वोपपत्तेः। अत एव सर्वैरेव संस्कारैः स्वस्वावान्तरादृष्टद्वारा वस्तुस्थित्या प्रधानफलानुकूलातिशयविशेषो जन्यते। प्रधानफलमेव चात्मन्युत्पद्यते इति तदर्था एव संस्कारा मानुषार्थास्तत्फलस्य क्रतुगामित्वात्। यत्र तु दृष्टविधया वचनादेव वा कर्तृत्वोपयोगित्वं, यथा प्राथमिकशुद्धार्थस्नानाचमनादौ हिरण्यमालिनः शयरणीत्यादौ च वक्ष्यमाणास्तत्र कर्तृत्व एवोपयोगादङ्गप्रधानार्थत्वम्। अत एव तादृशस्य विकृतिषु तस्यातिदेशः ॥ ३ ॥ १ ॥ ५ ॥

चिकीर्षया ॥ सोमे षट्त्रिंशत्प्रक्रमादिपरिमाणां वेदिं विधाय श्रुतं, इयति शक्ष्यामहे, स्यां कर्तुमिति। सा वेदिर्यद्यपि देशत्वादङ्गप्रधानार्थतया प्रसज्यते, तथापि दीक्षादक्षिणार्थेन उत्तरवचनात् प्रधानमात्रार्था। कर्तुमिति हि तुमुना इच्छार्थकेन चिकीर्षितार्थत्वप्रतीतेः प्रधानस्यैव चिकीर्षितत्वादङ्गानामचिकीर्षितानामपि चिकीर्षितप्रधानार्थत्वेनैवानुष्ठानात् प्रधानमात्रार्थैव वेदिः। स्थितन्त्वावदपर्यवसितम् ॥

तथा प्रधानेन ॥ दर्शपूर्णमासयोस्तु रोता पौर्णमासीमभिमृशेत् यज्ञपोऽमावास्यामिति श्रुतम्। तत्रामेतौ मन्त्रौ पौर्णमास्यमावास्यादवाच्यप्रधानमात्रसंयोगात्तद्विरभिमर्शनार्थावेव। न प्राप

फलसंयोगात्तु ॥ दर्शपूर्णमासयोर्ज्योतिष्टोमादौ केशश्मश्रुवपनादयः तावत् क्रतुयुक्तपुरुषसंस्काराणां न आरादुपकारकाः। केशश्मश्रु वपते, नखानि निकृन्तते, दन्तोधावते, आङ्क्ते, अभ्यङ्क्ते इत्यादावात्मनेपदनिर्देशेन पुरुषार्थत्वावगमात्। क्रियाफलस्य ह्यात्मगामित्वे आत्मनेपदम्। आरादुपकारकत्वे तु तत्फलस्य क्रतुसाद्गुण्यस्य क्रतुगतत्वेन नात्मगामित्वम्। यत्त्ववान्तरादृष्टं, न तत् क्रियाफलम्।

यद्यपि वपो अदू च धातुः परस्मैपद्येव, तथापि छान्दसात्मनेपदद्र्शनात्तस्य च सार्थकत्वे सम्भवति साधुत्वार्थत्वस्यान्याय्यत्वात्स्वरितेत्यादिविधेरेवानित्यत्वं परिकल्प्यात्मगामिक्रियाफलत्वाङ्गीकारो न दोषाय। एव दन्तोधावत इत्यादौ। दन्तानां द्वितीययाऽपि संस्कार्यत्वावगमः। पयोव्रतं ब्राह्मणस्येत्यादौ षष्ठ्या। स्नानस्य तु मलापकर्षणार्थत्वलिङ्गात्। एवं तपसोऽपि वक्ष्यते। अन्ततो यत्र न किञ्चिद्गमकं, तत्र दीक्षासमाख्यैव तथा। यमादिपरिग्रहानुकूलपुरुषसंस्कारत्वाविशेषात्। पुरुषस्य च क्रतूपयोगित्वं कर्तृतया क्रतुजन्यफलभोक्तृतया च। तदिह संस्काराः किं कर्तृत्वांशोपयोगिन उत भोक्तृत्वांशोपयोगिन इति चिन्तायाम्।

भोक्तृत्वार्थत्वे समप्राधान्यापत्तेः प्रकरणावगतक्रतुसम्बन्धबाधापत्तिः। अतः कर्तृत्वार्थाः। दन्तधावनादीनां शरीरसंस्कारार्थत्वात्तस्य च परलोकभोग्यफलभोक्तृत्वेऽनुपयोगादपि तथात्वम्। अतश्च कर्तुरङ्गप्रधानार्थत्वात् संस्काराणामपि तथात्वमिति प्राप्ते।

कर्तृत्वस्य शरीरादिवदेव संस्कारव्यतिरेकेणापि जायमानत्वा-

तथात्वे वाक्यभङ्गदोषापत्तेः । अपि तूपकारकत्वाच्च इत्यङ्गप्रधानार्था-
वेव मन्त्रौ ॥२॥१०६।१०७॥

दीक्षादक्षिणम् ॥ ज्योतिष्टोमे दीक्षा, दण्डेन यजमानं दीक्षयतीत्यादिका, दक्षिणा च गौश्चाश्वश्चेत्यादिका, श्रुता साङ्गप्रधानार्था । दीक्षायास्तावद् द्वितीयया पुरुषसंस्कारिकाया वपनाधिकरणन्यायेन फलिसंस्कारकत्वप्रसक्तावपि यो दीक्षितो यदग्नीषोमीयं पशुमालभते दीक्षितः सोमं क्रीणातीत्यादौ दीक्षितपदश्रवणनिर्णयेनैष्टकाः प्रयतीत्यादिवद्विशेषणीभूतदीक्षाया अपि कर्तृसंस्कारद्वाराऽग्नीषोमीयप्रयत्नप्रतीतिस्तस्य च स्वतन्त्रविधूपायकत्वे गौरवादनुवादविधया दण्डेन दीक्षयतीत्यादौ हिरण्यमात्रेण इति यद्वद्वचनात्कर्तृसंस्कारकतातात्पर्यग्राहकत्वावगतेः कर्तृवदङ्गप्रधानार्थत्वेन दीक्षाया अप्यङ्गप्रधानार्थत्वात् । दक्षिणायास्तु कर्तानयनार्थत्वादेवाङ्गप्रधानार्थत्वं स्फुटमेव । एवं च दीक्षाः सोमस्य दक्षिणाः सोमस्येति वाक्यद्वयं शाखान्तरस्थसाधारणपदान्वयासम्भवमादायानुवादः । इतरथा परिसङ्ख्यापत्तेरिति प्राप्ते ।

वचनसामर्थ्यभिया प्रधानमात्रार्थत्वम् । फलतः परिसङ्ख्यानाच्च न त्रैदोष्यापत्तिः । न च वचनस्य प्रधानप्रयुक्तमात्रपरत्वेनाप्युपपत्तेरङ्गाभ्यनिष्टविधिपरत्वे मानाभाव । प्रकृष्टसिद्धिकारकत्वादिभिराकर्षणमशक्यतया वचनस्याङ्गोद्देश्यताकाचनिष्टविध्यर्थत्वावश्यकत्वाश्रयात् प्रयुक्त इत्याङ्गेऽपि प्रविष्टेनोभयविरोधपत्तेः । प्रयुक्तनिवृत्तौ चाङ्गतादीकारे फलाभावाच्च । न च दक्षिणायाश्चे परिक्रयार्थत्वोपपत्तावपि दण्डेनेत्यादिवाक्येन दीक्षायाः प्रसक्तस्य

पौर्णमास्यादिशब्दो कालपरो तथात्वे द्वितीयया सप्तम्यर्थलक्षणा-नुपपत्तेः। आमन्त्राणि हवींष्यभिमृशतीति प्राप्ताभिमर्शनानुवादेन मन्त्रकालोभयविधौ वाक्यभेदापत्तेश्च। काले निमित्तेऽभिमर्शनो द्देशेन मन्त्रविधौ प्रतिपदादिकालीनाभिमर्शने मन्त्रानापत्तेश्च। पौर्णमास्यादिपदाभ्यां पौर्णमास्यादिमयोमन्त्राधिकरणत्वविधौ चोभ-यत्र प्रातिपदिके प्रत्यये च लक्षणाप्रसङ्गो वाक्यभेदश्च तदवस्थ एव। प्रयोगस्य निमित्तत्वाङ्गीकारे च लक्षणाद्वयप्रसङ्गो विकृतावप्राप्त्या-पत्तिश्च। अतो लाघवात् प्रातिपदिकेनैव पौर्णमास्यादिप्रधानमात्र-सम्बन्धिहविर्लक्षणात्तदुद्देशेनैव मन्त्रविशिष्टमभिमर्शनं विनियुज्यते। मन्त्रमात्र वा तदुद्देशेन विधीयते। अभिमर्शनं तु प्रकरणप्राप्तानु-वाद। उत्पत्तिवाक्ये च हवि शब्देन प्रधानमात्रहविरुपादानमुप-सहारविधया न विरुध्यते। अत प्रधानमात्रार्थौ मन्त्रौ॥

क्षितादुत्तरम्॥ यद्यपि चिकीर्षितायां वेदिस्तथापि सान्नाय्यैव, फलप्रधानमयोगेन चिकीर्षितत्वादङ्गप्रधानार्थैव सा। वस्तुतस्तु। देश-लक्षया प्रकरणादेवाङ्गप्रधानार्थत्वसिद्धेरर्थवाद एवायमियत्ति शस्यामहे इति। अत एव शस्यामहे इति वचनात् कर्तृप्रचारमा-त्रार्थत्वमङ्गीकृत्याङ्गप्रधानार्थत्वमपास्तम्। अत सर्वार्थायावेदेरग्नी-षोमीयादौ प्राकृतहविरादावनार्थवेदिबाधकत्व तद्विकृतौ चाति-देश सिद्धो भवति।

यत्तु दाटौ प्राकृतवेदे प्रसङ्ग इति वक्ष्यते। तत्कर्तृप्रचार-मात्रार्थत्व कृत्वा चिन्तया। द्वितीयस्योत्तरम्। सत्य पौर्णमास्यादि-शब्दाभ्यां प्रधानसम्बन्धिहविर्लक्षणा। तथापि सम्बन्धोनाङ्गत्वाय,

शेन विधायकत्वयोर्देशविशेषणत्वाविरुद्धापत्तेः बहिर्वेदिक इत्यस्यानुवादाद्योगाद्विधाने वाक्यभेदापत्तेरगत्या देशविशेषणत्वया शोषवध्यमानोद्देशेन विधीयते। न च देशविशेषणत्वापेक्षया लाघवादन्तर्वेदित्वविशिष्टबहिर्वेदित्वमेव लक्षणया विधीयतामिति वाच्यम्। विशेष्यविशेषणभावे विनिगमनाविरहात्।

द्वितीयोदाहरणेऽपि सौमिक्यावेदेर्दर्शनेनाङ्गप्रधानार्थत्वस्य प्रापितत्वाद्यूपार्थत्वेऽपि वेदेः प्राप्तत्वादर्थोद्देशेन तद्विधाने परिसङ्ख्यापत्तिः। न चाग्नीषोमीयादिरूपाङ्गत्वेऽपि वेदेस्तदङ्गभूतयूपमात्राङ्गत्वे प्रमाणाभावः। प्रयोगविधिना साङ्गानामेवाङ्गानां प्रयोगविधानात्। अन्यथा तदङ्गप्रयाजपशुपुरोडाशादिहविरासादनादौ वेद्यादेरप्राप्तेः। न च वाक्येन वेदेर्यूपार्थाङ्गत्वेन विधानात् प्रकरणगम्यसर्वार्थत्वस्य बाधोपपत्तेः परिसङ्ख्याभावापत्तिः। यद्विंशत्यरत्निपरिमाणार्थवादस्थे यति प्रख्यानेव इत्यस्यार्थमात्रार्थत्वेऽनुपपद्यमानत्वेन सर्वार्थत्वबाधानुपपत्तेः।

न चैवमपि फलतः परिसङ्ख्यानात् वेद्योत्थानापादकप्रमाणप्रतिबन्धाभावेन शास्त्रपरिसङ्ख्यानापत्त्या वेद्योत्थावश्यकत्वात्। अतो वरं देशविशेषलक्षणैका। न चार्थोद्देशेन बहिर्वेदित्वविधानादर्थान्तरे च वेदेरेव प्राप्तत्वादनुवादोपपत्तेर्न लक्षणाऽपीति वाच्यम्। अनुवादवैयर्थ्यभियैव लक्षणाङ्गीकारात्। तत्राप्यन्तर्वेदिपद एव लक्षणाङ्गीकारे बहिर्वेदेरपि विधेयत्वेन वाक्यभेदापत्तेरर्धमन्तर्वेदि अर्धं बहिर्वेदीति पदैर्लक्षितदेशविशेषविशिष्ट-मानस्यैव यूपोद्देशेन मानोद्देशेनैव वा विधानम्। तत्प्रयोजनं तु यूपैकादशिन्यां

प्रधानमात्रार्थत्वस्य यो दीक्षित इत्यादिवाक्येन दीक्षायास्तत्तद्‌ङ्गाङ्गताविधायकेन बाधितस्य प्रतिपन्नत्वार्थता दीक्षाः सोमस्येति वाक्यस्यास्त्विति वाच्यम्। गौरवेणाग्नीषोमीयादिवाक्यस्य दीक्षाविधायकत्वानुपपत्तेः। अतोऽनुवादविधयैव तद्बाधकत्वायुक्तमेव परिसङ्ख्यात्वम्।

वस्तुतस्तु गौरवभियैवानुवादविधयाऽपि न बाधकत्वम्। अपि तु प्रधानाङ्गभूतदीक्षायुक्तपुरुषानुवाद एव य एवं विद्वानिति-वद्दीक्षितपदम्। अतश्च दीक्षावाक्यस्यानुवादकत्वमेव दक्षिणाप्रशंसा-फलम्। अतः प्रधानमात्रार्थमेव दीक्षादक्षिणम्। तथापि तु गाव्ये-ष्वारब्धे अन्या वा दक्षिणा। अश्वेन कार्यसिद्धेर्दानादि वक्ष्यमाणत्वात्। प्रयोजनमग्नीषोमीयादिविकारेषु दीक्षादक्षिणयोरनतिदेशः सि-द्धान्ते। अतश्च तेष्वपेक्षिताया ऋत्विगानत्यादिवदक्षतिलोऽन्याहार्यंदक्षि-णायाः स्वतन्त्रादिदेशः, अपि विवा यत्किञ्चिदानतिसाधनं द्रव्यं वा दक्षिणेत्यपि तत्रैव वक्ष्यते॥३॥१०॥

तथा यूपस्य॥ दर्शपूर्णमासयोर्होतुरन्तर्वेद्येकः पादो भवति बहिर्वेद्येक इति श्रुतम्। तथा सोमेऽग्नीषोमीययूपमानं, प्रक्षाल्यार्ध-मन्तर्वेदि मिनोत्यर्धं बहिर्वेदीति। तत्रान्तर्वेदिदेश एव तत्तदङ्गत्वेन विधीयते, उतान्तर्वेदिबहिर्वेदिशब्दलक्षितदेशविशेषो वेति चि-न्तायाम्। प्रमाणाभावादन्तर्वेदिदेश एवैकपादोद्देशेन यूपार्धोद्देशेन च विधीयते। तद्विधौ पादार्धान्तरयोर्बहिर्वेदिदेशः प्राप्त एवा-नूद्यत इति प्राप्ते।

अथोदाहरणे तावद्धविरासादनार्थाया वेदिकायाः वेदेरेकपादोद्दे-

विचारे समाप्तेऽधुना समाख्यायास्तं कर्त्तुं प्रथमं तावत्स्वाम्यतिरिक्त-कर्त्तृसद्भावः प्रतिसमाध्यते ।

अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिषु दक्षिणायुक्तेषु कर्मसु यद्यपि तावत्स्वर्गकामो यजेतेति सामानाधिकरण्यात्साक्षाद्या अपि यागादिकरणिकाया भावनायाः स्वर्गकामकर्त्तृत्वं प्रतीयते, तथापि कर्त्तृत्वस्य स्वतन्त्रः कर्त्ता तत्प्रयोजको हेतुश्चेति सूत्रद्वयानुसारात् षड्भिर्दीक्षयतीति प्रयोगाच्च साक्षात्प्रयोजकसाधारण्येनैवावगतेरसति प्रमाणान्तरे प्रयोजककर्त्तृत्वायोगेऽपि प्रकृते दक्षिणाऽऽनमनादिना प्रयोजककर्त्तृत्वस्याप्यवगतेः स्वाम्यतिरिक्तस्यापि कर्त्तृत्वम् ।

कर्मकरानतिसाधनवचनो हि दक्षिणाशब्दोऽसत्सु कर्त्रन्तरेषूपपद्यते । न ह्यस्ति किञ्चिद्बलवद्बाधकं येन यदि पत्नीः संयाजयन् कपालमभिजुहुयाद्वैश्वानरं द्वादशकपालं निर्वपेत्तस्यैकहायनी गौर्दक्षिणा तां च देयाय दद्यादित्यत्र देयस्य ऋत्विक्प्रतिषेधादिवा-दृष्टार्थत्वं लक्षणया कल्प्येत । सामानाधिकरण्यस्य प्रयोजककर्त्तृत्वेनाप्युपपत्तेः । आत्मनेपदस्यापि च साक्षात्प्रयोजकसाधारण्येनाकर्त्तरि फलप्रतिषेधकत्वेनैवोपपत्तेर्न स्वाम्यतिरिक्तस्य कर्त्तृत्वप्रतिषेधकत्वम् ।

अत एव यजन्ति याजका इति परस्मैपदप्रयोगः। तेन कस्यापि बाधकस्याभावान्न दक्षिणादानस्यादृष्टार्थत्वकल्पना । अतस्तद्बलाद्दर्शपूर्णमासयोश्चत्वार ऋत्विज इति वचनाद्धौत्रादिसमाख्यावरणाद्याम्नानबलाच्च स्वाम्यतिरिक्ता अपि कर्त्तारः । न च स्वामिनोऽशक्तौ दक्षिणादानादिनाऽन्योपादानम् । दक्षिणादेर्नित्यवदाम्नानविरो-

वेदेरविवृद्धिः। वस्तुतस्तु देशविशेषलक्षणायामपि सामान्यतः प्राङ् विहिताया वेदेरविरोधेनार्थं प्राप्त्युपपत्तेर्यूपैकादशिन्यामपि तदर्थं वेदिविवृद्धिरावश्यकी। अतएव यावद्यूपं वेदिमुद्धन्तीति कल्पसूत्रकारवचनमपि सङ्गच्छते। अतोऽन्यत्प्रयोजनं मृग्यं, देशविशेषलक्षणैव वा प्राचीकर्त्तव्येति ध्येयम् ॥३।१०८॥

सामिधेनी ॥ सोमे, तत्र यत्सुन्वन्ति सामिधेनीस्तदन्वाहुरिति श्रुतम्। यत् यत्र दक्षिणहविर्धानेऽभिषवस्तत्राग्नीषोमीयादिसामिधेनीरनुब्रूयादित्यर्थः। तत्र हविर्धानशकटः सामिधेन्यङ्गमुत तल्लक्षितो देश इति चिन्तायाम्। पूर्ववत्परिसङ्ख्यावाक्यभेदाद्यभावाल्लक्षणापरिहाराय सोमधारणे कृतार्थस्यापि हविर्धानस्यैव पुरोडाशकपालन्यायेन सामिधेन्यङ्गत्वमिति प्राप्ते।

हविर्धानस्यान्यप्रमाणाप्राप्तस्य सामिधेन्यङ्गत्वेन विधावपूर्वविधित्वापत्तेः प्रकृतित आहवनीयमध्यदेशस्यातिदेशप्राप्तस्यानियमेन दक्षिणोत्तरहविर्धानसमीपवर्त्तितया प्राप्तेर्दक्षिणहविर्धानलक्षितदेशस्य नियमविधौ लाघवमिति तदनुरोधेन लक्षणाऽपि न दोषः।

वस्तुतस्तु लाघवस्य प्रमाणानुग्राहकत्वाभिप्रायादुत्पत्त्यधिकरणन्यायेनौत्तरकालिकत्वाच्च तदनुरोधेन लक्षणाऽनुपपत्तेः यद्यत्र देशे सुन्वन्त्यभिषुण्वन्ति तस्मिन्नभिषवदेशे सामिधेनीरनुब्रूयादित्यर्थावगमेन हविर्धानस्याप्रतीतेरभिषवदेशस्यैव श्रौतत्वेन विधेयत्वाच्च लक्षणाऽपि। प्रयोजनं, पूर्वपक्षे हविर्धानोपरि सामिधेनीपाठः। सिद्धान्तेऽभिषवदेशे दक्षिणहविर्धानसमीपे ॥३।११०॥

प्राकरणम् ॥ तदेवं पूर्वैः सह प्रकरणस्यानयोर्विरोधाविरोध-

भ्यासेन भिन्नानां संस्कार्यभेदं विनाऽनुपपत्तेः । अप्रवृत्तस्य पुरुषस्य प्रवर्त्तनफलकमभ्यर्थनं हि वरणम् । न च तदेकस्मिन् पुरुषे अनेकं सम्भवति । भिन्नानां संस्कार्याणां तत्तत्क्रियासु भिन्नास्वेव विनियोगाच्च विकल्पासम्भवः । दर्शपूर्णमासयोश्चत्वार ऋत्विज इत्याद्यनुवादवचनादप्येवम् ।

एवं च ऋत्विजो वृणीत इत्यपि न वरणविधिस्तथात्वे ऋत्विग् इति बहुत्वानुवादानुपपत्तेः । अपि तु ऋत्विक्संस्कारकवरणमात्रानुवादो ऋत्विग्धर्माणां तदुत्तरमप्राप्तानां तद्धर्मविधानार्थश्च । अतो यावन्ति लौकिकानि यावन्ति सम्भवन्ति वा वरणानि, तावन्तः कर्त्तार इति सिद्धम् ॥३।७।१२॥

चमसाध्वर्यवश्च ॥ अध्वर्य्वादिसञ्ज्ञानां रूढत्वादस्तु भेदकत्वम् । चमसाध्वर्युसञ्ज्ञायास्तु चमसैरध्वर्युरित्येवं यौगिकत्वादध्वर्युपुरुषादय एवैत इति प्राप्ते । यद्यपि सञ्ज्ञाया यौगिकत्वे चमसाध्वर्यून् वृणीत इति पृथग्वरणाम्नानाद्वरीतव्यानां चमसाध्वर्यूणां पूर्ववदेवान्यत्वम् । एवं सदस्यं वृणीत इति वचनात्सदस्यस्यापि । एवं च मध्यतः कारिणां चमसाध्वर्यवो होतृकाणां चमसाध्वर्यव इति ऋत्विक्ष्वन्यव्यपदेशोऽपि भेद एवोपपद्यते ॥३।७।१३॥

उत्पत्तौ ॥ ते चमसाध्वर्यवो वरणवाक्ये बहुत्वश्रुतेर्बहवः । यद्यपि तयोरुद्देश्यविशेषणत्वाद्बहुत्वाविवक्षा । तथापि स्वाध्यायोऽध्येतव्य इति वाक्संस्कारविध्यन्यथाऽनुपपत्त्या विनियोगकल्पनदशायान्तद्विवक्षोपपत्तिः । अनयैव दिशा पुरोहितं वृणीते अध्वर्युं वृणीत इत्यादावेकत्वविवक्षा द्रष्टव्या । वस्तुतस्तु तत्र तत्र विनियोगे चम-

धात् । अतः परकीयस्वत्वस्य परेणोत्स्रष्टुमशक्यत्वादुत्सर्गमात्रं स्वामिना कार्यम् । अन्यत्तु विशेषतः प्रमाणाभावेऽन्येनैवेति सिद्धम् ॥२॥१११॥

तत्त्वार्थात् ॥ ते कियन्त इत्यपेक्षायां तत्तत्कर्मणि अध्वर्यादिसंज्ञापुरस्कारेण तत्तत्कर्मविधानाद्यावतां यत्र विधानं तावन्त एव तत्र ज्ञेयाः । अत एवाग्निहोत्रे एक एवाध्वर्युः, दर्शपूर्णमासयोश्चत्वारः, चातुर्मास्येषु पञ्च, पशौ षट्, सोमे सप्तविंशतिः ।

न च परिक्रयवशादेकोपादानावश्यम्भावे तस्यैव पाचकत्वावकादिवत्तत्तत्कर्मकरणनिमित्तावश्य सम्भविष्यतीति वाच्यम् । सञ्ज्ञानां कर्मकरणम् पूर्वमेवाध्वर्युं वृणीत इत्यादिना पूर्वप्रयुक्तत्वेन कर्मकरणनिमित्तत्वाभावात् । अपि तु तत्तद्वरणनिमित्तकत्वं तत्तद्वरणजन्यतत्तद्दानतिनिमित्तकत्व तत्तद्विधानतिजन्याध्यवसायनिमित्तकत्व वा । क्षतेऽपि वरणे यहमध्वर्युः स्यामित्यध्यवसायाभावे अध्वर्युशब्दाप्रयोगात् ।

वस्तुतस्तु अध्यवसायस्यापि निश्चयरूपस्य क्षणिकत्वात्तज्जन्योऽभिमानविशेष एव निमित्तम् । तस्य च सत्रे स्वत एवागततत्वेन वरणाभावेऽपि द्वरहात एव सत्त्वादध्वर्युत्वाद्युपपत्ति । प्रकृतावपि होता अग्रतः सामिधेनीरन्वाहेति वरणात्पूर्वं होतृशब्दप्रयोगोपपत्तिः । अत एव वरणजन्यादृष्टवत्त्वमध्वर्युत्वादिकमिति प्राभाकरमतमपास्तम् । सत्रेऽपि स्वतुयाज्यावरणवत् वरणापत्तेश्च ।

न चैवमप्येकस्यैव तत्तदभिमानोपपत्तेः कर्तृभेदे प्रमाणाभावः । अध्वर्युं वृणीते ब्रह्माणं वृणीत इति तत्तद्विधिविहितवरणनाम-

स्वरोपकारित्वस्यैवोचितत्वात्। स्वामिपरिक्रीतानामपि शिल्पकारिणां तथा दर्शनाच्च। तत्राप्युपगानस्य सामवेदिकत्वादुद्गात्रादीनां षयाणाङ्गानव्यावृत्तत्वेऽपि* सुब्रह्मण्यो नियतः। अन्ये तु अवरा-उपगायन्ति चत्वार उपगायन्तीति वचनान्तरानुसारादनियताः। अत एव नाध्वर्युरुपगायेदिति वचनाच्चासौ ॥३॥११७॥

विक्रयी ॥ सोमविक्रयी त्वन्य एव। वरणादिकं हि अलर्यत्वा-त्तदङ्गपदार्थकरणाय सुत्यानुपादातुं क्रियते। विक्रयस्त्वविहितः क्रयान्यथानुपपत्त्या आवश्यकोऽपि दोषस्वीकारेण रागतः प्रवृत्तपुरुषकर्तृकविक्रयोपजीवनेनापि क्रयसिद्धेरनाक्षेपात्त्वागम्यम्। अतस्तत्र प्रवृत्तानामसम्बन्ध एवेति ॥३॥११८॥

कर्मकार्यात् ॥ ब्रह्माद्यस्समवाध्वर्यवश्च सोमे कर्त्तारः समधिगतास्ते सर्वे ऋत्विक्पदवाच्याः। ऋत्विक्पदस्य ऋत्विग् दधृगित्यादि-स्मृत्या कर्त्तृवाचिक्विप्प्रत्ययनिपातनेन यौगिकत्वावगतेर्वसन्ताद्यृतु-कालीनयागप्रयोगकर्तृवाचित्वनिर्णयेनादृष्टरूपऋत्विक्त्वे रूढिमङ्गी-कृत्यौणादिकत्वकल्पनाऽनुपपत्तेः। तस्य च सर्वपुरुषेष्वविशेषात्। तस्यैतस्य यज्ञक्रतोः सप्तदश ऋत्विज इति तु एकं वृणीत इत्यादि-वदनुवादः। इतरथा परिसङ्ख्यायां त्रिदोषत्वापत्तेः। अदृष्ट-रूपऋत्विक्त्वकल्पनायां गौरवादेव वरणमेव तत्कल्प्यादृष्टमेव वा ऋत्विक्पदप्रवृत्तिनिमित्तमित्यपास्तम्। रूढिकल्पनायां प्रमाणा-भावात्। ब्रह्मादिवरणानां भेदादनेकादृष्टशक्तिकल्पनापत्तेश्च। व्याप-कधर्मस्य वरणस्यैव शक्यत्वाङ्गीकारे तु अतिप्रसङ्ग इत्यस्मन्मत-

* व्यावृत्तत्वेऽपि,— इति भवितुमुचितम्।

साध्वर्यवश्चमसाननुप्रयन्ति अध्वर्युः पुरोविभजते इत्यादौ सङ्कलैकत्वश्रुतेस्तदविरोधोपपत्तिः ॥१॥११४॥

दशत्वम् ॥ ते च दशैकादश वा । न तु षट् । चमसनानात्वात् । अत एव मध्यतः कारिणां होत्रादीनां चतुर्णां होत्रकाणां च मैत्रावरुणादीनां षण्णां चमसाध्वर्यव इति व्यपदेशोऽपि सङ्गच्छते । सदस्यपक्षे तत्समवे एकादश । एवं च दशपक्षे सतौ सिद्धवदन्य चमसाध्वर्यव इति व्यपदेशोऽपि सदस्याभावपक्षे सङ्गच्छते । षट्पक्षे न कथञ्चिद्दशोपपत्तिः ॥२॥११५॥

शमिता च ॥ पशौ शमितारमुपनयीतेति श्रुतः । शमिता चरणभेदादन्याश्रयत्वेऽपि अध्वर्युभेदे यौगिकत्वेन प्रकृतेष्वेव ऋत्विक्षु अनृत्विक्षु वा तेषु तस्य उपपत्तेर्नान्यः । तथाप्यध्वर्योः पराङावर्त्ततेऽध्वर्युः पशोः सञ्ज्ञप्यमानादिति वचनेनासामर्थ्यात्तत्पुरुषः शमिप्रज्ञाता सञ्ज्ञपयेत् । न च तस्य हिंसादोषभिया अप्रवृत्तिः । दक्षिणादिलोभेन तदङ्गीकारेण प्रवृत्त्युपपत्तेः । अत एवामिंव्यं निन्दन्ति । ब्राह्मणस्य च शामित्रविषये कर्म्मो पृथक् निषेधोदोषाधिक्यज्ञापनार्थः । अत एव कर्मो शामित्रे ब्राह्मणालाभेन शूद्रेण क्रियमाणे होमाहं शमितृब्राह्मणाय दद्यादब्राह्मणः स्यादिति वचनं सङ्गच्छत एव । अब्राह्मणः स्यादिति पञ्चमाणपरमिति तु भाष्य ॥३॥११६॥

उपगातारश्च ॥ एवं सोमे समाख्याता उपगातारोऽपि स्तोम्येव । न चोपगातॄणां कर्तृत्वेन सोमे प्रविष्टत्वानां च तूष्णीकत्वेन तदभावादन्य इति वाच्यम् । तूष्णीनामपि मेघमेघार्यं कारित्वात्पर-

स्वामिसम्प्रदानः ॥ अप्रदग्धस्तु सदृशः । तत्रापि पृथक्करणाभा-
भाच्च प्रमविधानाच्चेति प्राप्ते । प्रदृश्यकर्त्तव्यपदार्थाश्रवणादरणस्य प्रकृत्यायेन विनियोगभङ्गं कल्पयित्वा दृष्टार्थत्वावगतेः प्रदग्धस्य पार्थिकत्वेन अप्रदग्धश्रुतेः पाचिकानुवादत्वात्वे तस्य दीक्षायामाच क्षान्तेव सम्प्रदानः । कर्मकरत्वेऽपि वा न पत्नी । अप्रदग्धत्वजनकी-भूतापेक्षाबुद्धौ लिङ्गवैरूप्याङ्गीकारे प्रमाणाभावात् ॥२॥१॥२१॥

ते सर्वार्थाः ॥ तत्तत्कल्पेषु प्रमितानां तेषां कर्तृसामान्यवत्त्वेऽप्य-सति विशेषविधौ लिङ्गप्रकरणाभ्यां तत्तत्पदार्थकर्तृत्वं, न तु तयोर्दुर्बलया आध्वर्यवादिसमाख्यया सङ्कोचः ॥ स्थितं तावदपर्यवसितम् ॥

अग्नयस्तु ॥ आहवनीयादयोऽनारभ्याधीतवचनैर्होमाद्यनुवादेन विहिताः पर्णतान्यायेन प्रकृतिहोमाद्यर्थाः [redacted] विकृतौ हि ये तावद्धोमादयोऽतिदेशेन प्राप्यन्ते, तेषु प्राप्तिकालवैयर्थ्यात् स्पष्टमेव विरुद्धत्वम् । येऽप्यामनहोमादयोऽपूर्वास्तेषामपि विकृतिसम्बन्धबो-धव्यतिरेकेणाङ्गत्वाद्यनुपपत्तेर्विकृतेश्च क्लृप्तोपकाराङ्गग्रहणार्थं पूर्व-मतिदेशकल्पनाऽवश्यम्भावात्तत्र च प्रकृतावाहवनीयप्राप्तिमन्तरेणानु-पपत्तेस्तेष्वपि विरुद्धत्वम् । अस्तु तु नोपदेशेन नापि यूपावटस्तरण-वर्हिर्वेदतिदेशेनाहवनीयप्राप्तिः । अतोऽधिकरणं विनैव तरति प्राप्ते ।

अत्यन्तातिदेशप्राप्तेषु नाहवनीयाद्युपदेशः । अपूर्वेषु त्वनारभ्या-धीतत्वादतिदेशेन प्राप्तिरविरुद्धा । न ह्यामनहोमानां विकृति-सम्बन्धं विना नाङ्गत्वाद्यकलम् । उत्पत्तिवाक्ये दृष्टसामान्यस्य भाव्य-त्वबोधेनापि शाब्दबोधस्य पर्यवसन्नतया तदनुवादेनाहवनीयविधा-नोपपत्तेः । अतस्तेऽपि सर्वार्थाः ॥२॥१॥२२॥

प्रवेश । यजमाने वरणाभावेन ऋत्विक्त्वानापत्तेश्च । यद्वे ऋत्विक्-त्वसम्पत्तये वरणापत्तेश्च । अत एव ऋत्विजो वृणीत इत्यस्यैव वरण-विधित्वादेकमेव वरणं पदप्रवृत्तिनिमित्तमित्यपास्तम् । ब्रह्माणं वृणीत इत्यादिविधीनां वैयर्थ्यप्रसङ्गाच्च । एतेन ब्रह्मादिनिष्ठऋतु-यजनान्येव ऋत्विक्पदप्रवृत्तिनिमित्तमित्यपास्तम् । अनेकशक्ति-कल्पनातादवस्थ्यात् । अतश्च सर्वे एव ऋत्विक्पदवाच्या इति सर्वेषामेव हिरण्यमालित्वादि ऋत्विक्कार्यमिति प्राप्ते ।

सत्यं, ऋत्विक्पदं यौगिकम् । ऋतुयजनसामान्यवाची च सः । तथापि सप्तदशश्रुत्या पङ्कजपदादिवदेव रूढिमकल्पयित्वैव सप्तदशश्रुत्युपनीतप्राचीनप्रयोगस्य सहकारित्वकल्पनयैव सप्तदशानामेव ऋत्विक्पदशक्यत्वोपपत्तिः । न कुण्डादिपदेषु अतिप्रसङ्गनिरा-करणार्थं रूढिकल्पनम् । तथात्वे होमादिवत्प्रत्यर्थलक्षणाप्रसङ्गेनास्य गुणविधित्वस्यैवोपपत्तेः । न चैवं सप्तदशश्रुतेः परिसंख्यात्वापत्त्या त्रिदोषत्वापत्तिः । ऋत्विक्पदव्याप्तकारणताकल्पनवेलायामेव* सप्त-दशश्रुतेस्तात्पर्यग्राहकत्वकल्पनेन प्राप्तपरिसंख्यात्वाभावात् । अतश्च सप्तदशानामेव ऋत्विक्कार्यं हिरण्यमालित्वादि ॥३॥१९॥

नियम ॥ ये ते सप्तदशेत्यपेक्षायां ऋत्विग्भ्यो दक्षिणां ददाती-त्युपक्रम्याम्नाते ब्रह्मणः उद्गातुः इत्यादीनां षोडशानामेव सङ्कीर्त-नात्तेषामेव ऋत्विक्त्वम् । अत एव सत्रे यजमानानामेव ऋत्विक्त्वा-त्तेषामेव यजमानसहितानां दीक्षाश्रवणम् । अतः षोडश तावत्-मधिगताः ॥३॥२०॥

---

* इत्यमेव पाठः सर्वत्र ।

नानि, प्रयाजा अभिद्यवः अञ्जन्ति त्वामध्वर इत्यादीनि उप-देशातिदेशप्राप्तानि । प्रैषोत्तरत्वाच्चैषामनुवचनत्वम् । कानिचित्तु प्रैषत्वे सत्येवानुवचनानि, यथा होता यक्षदित्यादीनि । एषां च प्रैषेष्वध्वर्युप्रैषोत्तरभावित्वाद्धोतर्यजेत्यन्तं प्रैषत्वाच्चोभयरूपत्वम् ।

तदिह मैत्रावरुणः प्रैषानुवचनोद्देशेन विधीयमानः सर्वत्र स्यात् तु प्रैषान्तानुवचनेष्वेव। उद्देश्यविशेषणस्य साहित्यस्याविवक्षितत्वात् । च-शब्दस्यापि प्रैषानुवचनरूपधर्मसाहित्यपरत्वेन प्रैषत्वानुवचनत्वरूप-धर्मयोरेकाधिकरण्यरूपसाहित्यबोधकत्वाभावात् । तस्य च प्रति प्रधानं गुणावृत्त्यन्यायेनैवाक्रमतोऽपि सिद्धेरनुवादकत्वाच्च । अतश्च सर्वत्रैव समाख्याप्राप्तकर्तृत्वबाधेन वाक्यान्मैत्रावरुणनिवेशः । न चावाने-कोद्देशे वाक्यभेददोषः । अर्धमन्तर्वेदि मिनोतीतिवदावृत्तिकत्वा-भावात् । अत एवैकवाक्योपादानगम्यसाहित्यस्योद्देश्यगतस्याप्रतीत-त्वादेव नाविवक्षापत्तिः ।

न चैवमपि शुद्धप्रैषेष्वध्वर्युकर्तृकत्वस्य शुद्धानुवचनेषु च हो-तृकर्तृकत्वस्यैव समाख्यया प्राप्ते कर्त्रन्तरानपेक्षत्वादेव न मैत्रावरुण-विधिः, प्रैषान्तानुवचनेषु तु प्रैषत्वेनाध्वर्युकर्तृकत्वस्यानुवचनत्वेन च होतृकर्तृकत्वस्य प्राप्तेर्विरोधेनोभयोरपि निवृत्तौ कर्त्रन्तरापेक्षायां तत्रैव मैत्रावरुणविधिरिति पार्थसारथ्युक्तं युक्तमिति वाच्यम् । प्रैषान्तानुवचनानामपि हौत्र एव पाठस्य वार्त्तिकोक्तत्वेनाध्वर्युकर्तृ-कत्वाप्राप्तेः । उभयत्र पाठेन तत्प्राप्तावपि च विकल्पेनोभयनिवे-शोपपत्तेर्निवृत्त्ययुक्तत्वाच्च ।

यदपि वार्त्तिके अग्नीषोमीयाङ्गभूतेषु प्रैषान्तानुवचनेषु यजेति

स्थितादुत्तरम् ॥ नाच समाख्यया लिङ्गप्रकरणयोर्बाधः। किन्तु ताभ्यामव्यवस्थया प्राप्तानां कर्तॄणां व्यवस्थामात्रमपेक्षितं क्रियते। अतश्च हौत्रसमाख्याताः पदार्था होत्रा कर्तव्या आध्वर्यवसमाख्याताः आध्वर्युणा औद्गात्रसमाख्याता उद्गात्रा। सर्वेषु हि ऋग्वेदयजुर्वेद-सामवेदेषु ये पदार्था विहिताः तेषामेताः क्रमेण समाख्या याज्ञिकानां प्रसिद्धाः। यौगिकाश्चैते शब्दा न पदार्थानामध्वर्य्वा-दिसम्बन्धव्यतिरेकेण सम्भवन्तीति तेषु तेषां योग्यत्वात्कर्तृत्व-सिद्धिः ॥ ३॥१२३॥

तस्योपदेश ॥ अयं योऽग्नीषोमीयपशाद्यजमानस्य याज्येत्यादिका-दिशेषसमाख्यया च पोतीय नेष्टीय याजमानमित्यादिकया समो-द्यते। न चैवं तादृशविषये सामान्यसमाख्याया निर्विषयत्वापत्त्या सामर्थ्यप्रमित्तिस्तन्यायेन विकल्पापत्तिः। यथाशक्ति प्रयोगे पोत्रादी-नामशक्तौ सविषयत्वोपपत्तेः। वस्तुतस्तु होत्रादिसमाख्यायाः सामा-नाधिकरण्यसम्बन्धेन ऋग्वेदविहितकर्मत्वमुपलक्षणीकृत्यैव तत्तत्पदा-र्थेषु होत्रादिविधायकत्वं निरूपसम्बन्धेनाग्नीषोमीयपशाकाशष्टिमिल-मुपलक्षणीकृत्योपांशुत्वविधायकत्वमिव यत्किञ्चित् प्रयोगमित्यस्य। अतश्च तद्वदेव केषु चित्पदार्थेषु तदभावेऽपि न क्षतिः। अत एव दक्षिणारक्षितकाम्यादौ यजमानस्यैव कर्तृत्वेऽपि समाख्यायान काचिदनुपपत्तिः ॥ ३॥१२४॥

प्रैषानुवचनम् ॥ ज्योतिष्टोमे मैत्रावरुणः प्रेष्यति चानु चाहेति श्रुतम्। सन्ति च तत्र केचित् केवलाः प्रैषाः, अग्नये समिध्यमाना-यानुब्रूहि यूपायाज्यमानायानुब्रूहीत्यादयः। केनचानि चानुवच-

न चैवं सार्वत्रिकत्वापत्तिः। अनुवादस्य सति सम्भवे सन्निहितगामित्वनियमेन यानि प्रैषानुवचनान्यधिकृत्यायं विधिः प्रवृत्तस्तद्विषयत्वस्यैवाङ्गीकारात् ॥ ३।१।२५॥

चमसात् ॥ चमसेषु विशेषसमाख्यया चमसाध्वर्युरूपया तेषामेव होमादौ कर्तृत्वम्। समाख्यागताध्वर्युपदस्य रूढ्या प्रकृताध्वर्युपदवदेव वरणादिनिमित्तत्वाविशेषात्। इयांस्तु विशेषः, यत्तस्य सर्वकार्येषु विनियोग एतेषां तु चमसेष्वेवेति। यदि तु तत्तद्वरणानां भेदादनेकशक्तिकल्पने गौरवमाशङ्क्येत। ततोऽस्तु एषामध्वर्युशब्दस्य गौणत्वम्।

न च विनिगमनाविरह इति शङ्क्यम्। चमसाध्वर्युवरणवाक्ये शक्तिकल्पने चमसाध्वर्युपदस्यैव तत्कल्पनापत्तेरध्वर्युपदस्य ततोऽभिन्नस्य शक्त्यन्तरकल्पनाप्रसक्त्यभावात्। अतो लाघवात् प्रचुरप्रयोगाच्चाध्वर्युपदस्यैव प्रसिद्धाध्वर्यावेव शक्तिरितरेषु तु गौणी। तथापि तु पक्षे तस्यापि होमादिकर्तृत्वाद्धोमकर्तृत्वसादृश्यसापेक्षतेषु गौणत्वोपपत्तेः सामान्यसमाख्यां बाधित्वा चमसेष्वेतेषामेव होमादिकर्तृत्वमिति प्राप्ते।

गौणत्वस्यावश्यकत्वे चमसप्रवृत्तिहोमादिकर्तृत्वेनापि गौणत्वोपपत्तौ सोपजीव्यसामान्यसमाख्याबाधे प्रमाणाभावाच्चमसेष्वप्यध्वर्युरेव होमादिकर्ता तस्यान्यत्र व्यापृतत्वे तु गौणसमाख्यया चमसाध्वर्यवस्तेषामप्यसम्भवे इतरस्यान्य इत्येवं प्रतिप्रसवादयः ॥ ३।१।२६॥

वेदोपदेशात् ॥ चौह्नाचे सामवेदे श्रुतेन युतो ज्योतिष्टोमोपदेशात्। तत्र सहतादिप्रतिदेशेन नाना ऋत्विजः प्राप्ता योगदे-

शब्दस्य प्राकृतत्वात्तत्राचेऽतिदेशेनाध्वर्योः प्राप्तिः । प्रेष्येति प्रैषान्तराम्नानाद्वा । इतरमन्य इति न्यायेन प्रतिप्रसवात् । सोमाङ्गान्तर्वर्त्ति-यजेति शब्दे तु होतर्यजेति लिङ्गानुरोधेन समाख्यां बाधित्वा मैत्रावरुणस्य । तद्व्यतिरिक्तपदान्तरेषु होतुरेव । तत्रश्चांशभेदेन वाक्याकर्तृप्राप्तेरेकपदार्थे च कर्त्तृद्वयासम्भवात् प्रत्युतयोर्मैत्रावरुणविधिरित्युक्तम् । तदपि यजेति शब्दस्याग्नीषोमीयादौ चोदकप्राप्तस्य च होतर्यजेति लिङ्गेन बाधेऽपि तत्पुरुषस्य मैत्रावरुणस्यैव यजेतिपदे तदेकवाक्यतापन्नपदान्तरेषु च प्राप्तेरूपेक्षितम् ।

अबाधेऽपि वा समाख्यायादुर्बलत्वेन यजेति शब्दे तदेकवाक्यतापन्नपदान्तरेषु च प्रतिप्रसवादुरेवैकस्य प्राप्तेर्न कर्त्रन्तरापेक्षा । एवं सोमाङ्गभूतेष्वपि । अतः सर्वत्रैव मैत्रावरुण इति प्राप्ते ।

वाक्यभेदाङ्गीकारेऽप्युत्पत्यन्तेथ-शब्दवैयर्थ्याच्च पदद्वयेन प्रैषान्त्यानुवचनान्येवाधर्मत्वेनोद्दिश्य तेष्वेव मैत्रावरुणविधानम् । च-शब्देन धर्मिणोरितरेतरयोगस्य स्वरूपे कार्ये वा प्रयत्नवत्त्वस्तु च-वस्य च न्यायादेव प्राप्तेरानर्थक्यतद्भ्यायेन धर्मयोरेव प्रैषत्वानुवचनत्वयोरितरेतरयोगप्रतीतेर्निपातस्थले च परस्परान्वयस्य व्युत्पत्तिसिद्धत्वेन वाक्यभेदाभावात्तस्याः विनैव परस्परयुक्तप्रैषत्वानुवचनत्वावच्छिन्नोद्देशेन मैत्रावरुणो विधीयते । अत एव प्रैषानुवचनत्वावच्छिन्ने एव लक्षणोपपत्तेर्न युक्तोवाक्यसङ्कोच इत्यपास्तम् । वस्तुतस्तु प्रकृतानुवाक्यास्वपि काश्चिन्मैत्रावरुणस्य याज्ञिकप्रत्यत्वाच्च-शब्दो नेतरेतरयोगार्थं । अपि तु धर्मिसमुच्चयार्थ एव सन्ननुवाद ।

मस्त्यपि तथात्वापत्तिः। अविधे प्रत्यक्षत्वात्तासाञ्च धात्वर्थान्वयस्या-व्युत्पन्नत्वात् तृतीययाऽवभृथकरणकभावनायामन्वयावगतेर्दर्शत्वेन च भावनोत्पत्त्यन्वयित्वाभावेन तत्प्रयोगान्वयित्वात् प्रयोगस्य चाङ्गप्रधा-नसाधारणत्व ज्ञापनाऽन्वयद्वारा पात्रान्यतद्विशेषणान्वये अविशेषणीभ-यान्वयतात्पर्यावगत्योपदेशेनैव प्रधान इवाङ्गेष्वप्यविबाधात्*। अत-एव यत्र तृतीयाया अश्रवणाभावो यथा यज्ञाथर्वणं वै काम्या इष्टय-ता उपांशु कर्त्तव्या इत्यादौ, तत्र प्रधानकर्मकभावनायामेवान्वया-त्तस्याः चाङ्गान्वयाभावेन प्रधान एव प्राकृतस्वरादिबाधकत्वम्। प्रकृते तु समाख्याया प्रधानमात्रविषयत्वात्तस्य च स्वामिकर्तृकत्वे-नान्यकर्तृकत्वानुपपत्तेः स्वनिर्विंदषत्वापत्त्या कथञ्चिदानर्थक्यतदङ्ग-न्यायेनाङ्गमात्रविषयकत्वकल्पनेऽपि कृत्स्नकर्तृकाङ्गविषयत्वकल्पने प्र-माणाभावात्कण्डूकविनोदनाद्यौपदेशिकाङ्गविषयत्वमेव कल्प्यते।

वस्तुतस्तु तेषामपि विधिस्थ स्वसमाख्ययैव कर्तृप्राप्तेर्न प्रधान-समाख्याविषयत्वम्। अपि तु यानि वेदत्रयाविहितानि स्मृत्याद्य-नुमितवेदविहितान्यङ्गानि, तद्विषयैव सेति ध्येयम्। अत प्राकृता-ङ्गेषु नामैव कर्त्तारः। किं च समाख्याया पाठमात्रनिबन्धनत्वे-नोद्गैः पचेत्यादिवद्विधाननिबन्धनत्वाभावात प्राकृतानां सामवेदे अपठितत्वादपि तद्विषयत्वाभाव ॥३॥१२७॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां

तृतीयाध्यायस्य सप्तम पाद ।

---

* इत्थमेव पाठः सर्वत्र। इवाङ्गेष्वप्यविबाधात —इति प्रतिभाति।

शिक्या औद्गात्रसमाख्यया बाध्यन्त इति तेषूद्गातैव कर्त्ता। समाख्या हि कर्त्तृप्रापिका, कर्त्ता च प्रयोगाङ्गं, प्रयोगश्च प्रयोगविधिना साङ्गस्यैवैको विधीयत इति समाख्यया अङ्गेष्वपि कर्तृविधिरुपदेशेन। अतश्च यथैवाप्तवचनेन वरन्तीत्यपान्देशत्वात्साङ्गभावनाविषयत्वप्रतीतेः प्राकृतेषु प्रयाजादिष्वविबाधकत्वं, तथा प्रकृतेऽपि।

न च समाख्यायाः प्रधानमात्रे श्रुताया अपि अङ्गविषयत्वस्य कल्पनीयत्वेन प्रयोगविध्याश्रितत्वात्तस्य चातिदेशप्रापिताङ्गविषयत्वेन तदपेक्षत्वात्तदुपजीविचोदकप्रापितनानाकर्तृत्वबाधानुपपत्तिरिति वाच्यम्। सत्यपि तृतीयाश्रवणे अपामप्यङ्गविषयत्वस्य कल्पनीयत्वेनोक्तविधयाऽविबाधकत्वानापत्तेः। न हि तृतीयायाः साङ्गकृतिकरणत्वे शक्तिरपि तु प्रधानकरणत्व एव। ननु अङ्गवैशिष्ट्यं विनाऽनुपपन्नमिति अङ्गविषयत्वं कल्प्यमेव।

अतश्च मरादौ कृष्णोपदेशस्येव कल्प्योपदेशस्याप्यतिदेशबाधकत्वं वाच्यम्। अत एव यत्र प्रकृतावेव स्तोत्रशस्त्रादौ वेदान्तरीयविशेषसमाख्यारूपेणोपदेशेनैव कर्त्रन्तरप्राप्तिस्तत्राङ्गविषये कल्प्यायाः प्रधानसमाख्यया बाध इष्ट एव। वर्णितं ह्येतद्गुणमुख्यक्रमाधिकरणे। प्रकृते त्वातिदेशिकत्वात् प्रधानसमाख्याया एव प्राबल्यमिति भावः।

इहापि प्रयोगविध्याश्रितायास्तस्या अङ्गविषये कल्प्यत्वेनोपजीव्यातिदेशापेक्षत्वात्, तेन च कर्तृविशिष्टानामेव प्राप्तत्वेन कर्त्रपेक्षाऽभावात्, समाख्याया आकाङ्क्षाविरहे शुद्धकल्पकत्वात्, कल्पकत्वेऽपि वा प्राकृताङ्गविषयत्वाभावाच्च प्राकृतकर्तृबाधकत्वम्। न चैव-

गामिक्रियाफलकत्वावगतेः । यदि तु क्रियाफलस्याग्न्यादिगतत्वात् परस्मैपदोपपत्तिरित्याग्रह्येत, ततः प्राप्तोपधानानुवादेन दानस्य तत्कर्तृत्वस्य च विधौ वाक्यभेदापत्तेः, च इत्यनेन कर्तृप्राप्तिप्रतीतेश्चोपधानस्याध्वर्युकर्तृकत्वावसायात्तत्समानकर्तृकस्य दानस्यापि तत्कर्तृकत्वसिद्धिः ॥ ३॥१९८॥

संस्कारास्तु ॥ वपनादयः फलिसंस्काराः समाख्यानादध्वर्युकर्तृकाः । तेनाध्वर्युणा क्षुरं दन्तकाष्ठं जलं च गृहीत्वा यजमानस्य केशवपनादिकं दन्तधावनं स्नानं कारणीयं अञ्जनाभ्यञ्जनवत् इति प्राप्ते ।

वपत इत्यात्मनेपदाद्वपनफलाश्रयस्य यजमानस्यैव तत्कर्तृत्वं प्रतीयते । अस्ति च तस्यापि छेदनाख्यवपनाधारत्वेन स्वाङ्गे वपतीवत् तत्कर्तृत्वम् । तदादायैव च तस्मात् केशान्वपाम्यहमिति प्रयोगः । यत्तु नापितोऽवपतीत्यादिप्रयोगः, स च्छेदनानुकूलक्षुरक्रियाकर्तृत्वमादाय । तत्प्रयोजककर्तृत्वमादायैव नापितो यजमानं वापयतीत्यादिप्रयोगः । अतश्च वपत इत्यात्मनेपदस्थले आधारत्वमाश्रयैव तत्कर्तृत्वोपपत्तौ क्षुरग्रहणकर्तृत्वेऽपि तात्पर्यकल्पने प्रमाणाभावः । तेनार्थाक्षिप्तस्य यजमानकर्तृत्वस्य नियम एव । प्रमाणाभावे अध्वर्युकर्तृकत्वनियमस्य कः प्रसङ्ग इति नापितकर्तृकमपि तत् ।

सोमे तु अवपति देवश्रु इति परस्मैपदादध्वर्युकर्तृकगोदानवपनोत्तरं नापिताय क्षुरं प्रयच्छतीति विधानात्तत्कर्तृकमेव तत् । एवमन्यत्राप्यात्मनेपदयुक्ते द्रष्टव्यम् । अत एव यत्र तमभ्यनक्ति प्ररेयी-

## अथ अष्टमः पादः ।

स्वामिकर्म ॥ वरणं दक्षिणादानं च समाख्ययाऽध्वर्य्वादिभिरेव कार्य्यम् । अध्वर्य्युश्च यथा तान् स्वद्रव्येण परिक्रीणीते तमुपाय यजमानः कुर्यात् । अध्वर्य्योरेतरमन्य इति न्यायेन वरणादिकं प्रतिप्रस्थाता कुर्यात् । स चाध्वर्य्युर्दक्षिणाग्राहनात् तेनानत स्वकृत्य कुर्यात् । ऋत्विगन्तरार्थं स्वद्रव्यं दातुं यजमानः उपायान्तरं कुर्यादिति प्राप्ते ।

अवश्यं स्वतोऽध्वर्य्युरन्यान् वृणीते । अन्यथा ध्वर्य्युत्वासम्भवात् । वरणस्यादृष्टार्थत्वापत्तेश्च । तद्वरणं च सोमादौ कर्त्तव्यं, तस्याध्वर्य्युगुणत्वसम्पत्तये वरणस्यावश्यकत्वात् समाख्यातः सकर्तृकत्वावश्यम्भावादवरणे तावत्समाख्याबाध आवश्यकः । एवं दक्षिणादानेऽपि । उपायान्तरकल्पने गौरवापत्तेः । प्रयोगवाक्यावगतस्वामिकर्तृकत्वबाधापत्तेश्च । समाख्याया एव दौर्बल्याद्बाधः ।

वस्तुतस्तु । सर्वत्र स्वामिकर्तृकत्वप्राप्तौ वरणेनैव दक्षिणादानेनाप्यन्यथान्यकर्तृकत्वसिद्धेः समाख्यया नियममात्रं क्रियत इति स्वत्वाद्यवानुरोधेनापि न समाख्यावरणभरणविषयिणी । यद्यपि वा तस्मिन्नुपायान्तरकल्पनाद्यनुरोधेनैव दानमात्रे स्वामिकर्तृकत्वम् । यत्र तु वचनं यथा य एतामिष्टकामुपदध्यात् नीन्वरान्दद्यादित्यादौ, तत्राध्वर्य्वादीनामपि दानकर्तृत्वम् । अत्र हि स्वामिकर्तृकत्वे ह्युपधानस्य सामानाधिकरण्येन तत्समानकर्तृत्वावगतेरस्यापि तत्कर्तृत्वे उपदध्यादिति परस्मैपदानुपपत्तिः । तस्य नित्यत्वेन उपधानभिन्न-

इति वाक्यशेषानुसारात् कल्पयितुमुचितम्। अतश्च तस्य लिङ्गादेव यजमाननिष्ठत्वम्। न ह्यन्यसमवेतदुःखेनान्यदीयं पापं नश्येत्। न वा ऋत्विग्गतपापस्य स्वामिगतफलप्रतिबन्धकत्वकल्पनम्। गौरवात्। अत एव यत्र ऋत्विज उपवसन्तीत्यादिवचनं तत्रानृतवदनन्यायेनारादुपकारकत्वकल्पनं व्यधिकरणशेषे वा फलप्रतिबन्धकत्वादिकल्पनमिति द्रष्टव्यम्। अत एव तत्र न समाख्या नियामिका॥ ३॥ १२०॥

गुणत्वाच्च॥ ये ऋत्विक्संस्कारा हिरण्यमालित्वादयः तत्तद्वेदपठितास्ते समाख्यानादध्वर्य्वादिना कर्त्तव्याः, सकलस्योद्देश्यगतत्वेनाविवक्षितत्वात्। यद्यप्यनुवादापेक्षा, तदा तत्पुरुषैः कार्या इति प्राप्ते।

अनियतकर्त्तृप्राप्तौ समाख्यया लाघवेनापेक्षितनियमसमर्पकत्वात् प्रकृते च संस्कारस्य प्रतिप्रधानावृत्तिन्यायेन सर्वस्यैव नियतप्राप्ततया नियमानपेक्षत्वाच्च समाख्याया अनियामकत्वम्। कर्त्रन्तरपरिसंख्यायकत्वं तु वैरूप्यापत्तेरयुक्तम्। यदि तु समाख्यायास्तत्तत्पदर्थवाचित्वाभेदेनापि हिरण्यमालित्वविषयिण्याः परिसंख्यायकत्वमेवेत्याग्रहेण, तथापि समाख्यया वचनस्य सङ्कोचायोगादेव सर्वविषयत्वनिश्चयः॥ ३॥ १२१॥

तथा कामः॥ ये गुणजन्याः कामाः, यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयादित्यादयस्ते याजमाना अप्यस्य तावदाध्वर्यवत्वात्सामानाधिकरण्याच्च कामयतेः समानकर्तृकत्वप्रतीतेरध्वर्युनिष्ठा एव। अत एव यत्र दध्नेन्द्रियकामस्येति वैयधिकरण्यं तत्र यजमानगामित्वमेव। प्रक्षेपाख्यहोमस्याध्वर्यवत्वादिति प्राप्ते।

मिनुयादिति हितः परस्मैपदनिर्देशादध्वर्युभिन्नकर्तृकत्वावगतेः

क्रयाऽनक्ति दण्डेन दीक्षयतीत्यादौ परस्मैपदनिर्देशोऽधिकः श्रुतश्च सत्यप्याधारत्वमादायात्मनेपदोपपत्त्या यजमानकर्तृकत्वे व्यापारान्तरस्यापि विधेयत्वादध्वर्युकर्तृकत्वमिष्टमेव ।

स्नाने तु स्वनिष्ठव्यापार एव स्नातीति परस्मैपदस्यापि प्रयोगादन्यकर्तृके च स्नापयतीत्येव प्रयोगाद् यजमाननिष्ठव्यापारस्यैव विधेयत्वेनान्यकर्तृकव्यापारस्याविधेयत्वेन नाध्वर्युनियमः । न चात्र परस्मैपदादन्यकर्तृकत्वनियमः, स्नाधातोः स्वरितेत्त्वाद्यभावेन तदभावात् । अतः फलिसंस्काराः स्वामिकर्तृका एव, कर्तृसंस्कारास्तु हिरण्यमालित्वादयः सामान्यविहिताः सर्वेषामेव, विशिष्य विहितास्तु तेषामेवेति न तत्रापि समाख्यया नियमः । तस्य नियामकमानत्वेन प्रापकत्वाभावादिति उच्यते ॥ ३ ॥ १९८ ॥

तपश्च ॥ सोमे द्व्यहं नाश्नाति त्र्यहं नाश्नातीति श्रुतम् । तत्राशनप्रतिषेधोऽनृतवदनप्रतिषेधवदेवाऽऽरादुपकारको न फलिसंस्कारकः । आत्मनेपदाद्यभावात् । अन्येऽपि वा स्वरितेत्त्वाद्यभावाच्च । अतश्च समाख्यानादध्वर्युकर्तृकत्वम् । वस्तुतस्तु । अनृतवदेव प्रतिषेधाशनस्याविहितत्वादभावस्य चानुष्ठेयत्वाच्च समाख्याविषयत्वमिति कर्तृमात्रविषयत्वे प्राप्ते ।

आरादुपकारकत्वपक्षे यजमानस्य क्रतुवैगुण्यजनकत्वं तस्य च फलप्रतिबन्धकत्वमित्यादिकल्पनाऽपेक्षया साधनेनाशनाभावस्य दुःखजनकतया क्लृप्तत्वात्तद्दुःखस्य च स्वजनकीभूतपापनाशकत्वस्यापि क्लृप्ततया केवलं तदपेक्ष्य सोमफलप्रतिबन्धकत्वभावकल्पनया अशनाभावस्य यजमाननिष्ठफलप्रतिबन्धकाभावसम्पादकत्वमेव यदाशनमस्तदा मेधार्ह-

कर्मफलमेव एतेन मन्त्रेण प्रकाश्यत इति द्रष्टव्यम्। तच्च कर्म यजमानगाम्येव। ऋत्विक्फलस्योपस्थानाद्यप्रयोज्यत्वेन तत्प्रकाशने तदङ्गत्वानुपपत्तेः। तच्च यजमानादामाशत्वेनाग्निं प्रत्यनाम्नातत्वाच्च। न च यजमानफलमेवाध्वर्य्युणाऽऽशास्यताम्। मदति अगन्म इति चाध्वर्य्युप्रकाशकत्वेन लिङ्गविरोधात्। अतो याजमाना एवैते। अत एव यत्रैव नैतादृशं लिङ्गं, तत्राध्वर्यवा एव ॥ २ ॥ १३ ॥

द्व्याम्नातेषु ॥ ये मन्त्राः सामान्यत आध्वर्यवसमाख्याते काण्डे समाख्याताः पुनश्च याजमानेऽपि विशेषतः समाख्यायन्ते। यथाऽऽज्यग्रहणमन्त्राः स्रुग्व्यूहनमन्त्राश्च। ते तावत्तत्पदार्थे प्रत्यभिज्ञायमानत्वादिध्मावाद्याभिधाः। अतश्च गुणभूतकर्तृद्वयस्य विकल्पः। विशेषसमाख्याबलाद्वा यजमान एव कर्त्ता। आज्यग्रहणस्रुग्व्यूहनादेर्वा निःसन्दिग्धमाध्वर्यवत्वात्तदङ्गभूता मन्त्रा अपि तत्कर्तृका एव। न चैवं द्विःपाठवैयर्थ्यम्। एकत्र स्वरूपज्ञानमन्यत्र विनियोग इत्येवं सार्थक्यादिति प्राप्ते।

एकपाठेनैवोभयसिद्धौ द्वितीयस्य वैयर्थ्यापत्तेस्तस्योच्चारणान्तरविधायित्वावगतेस्तस्य च समाख्यान्तरेण कर्त्रन्तरसिद्धिः। उच्चारणान्तरप्रयोजनं तत्क्रियाप्रत्यवेक्षणमिति नादृष्टकल्पनाऽपि। यद्यपि च तन्नियमेन यजमानस्य न प्राप्तं, तथापि द्विःपाठबलादेव तत्कल्प्यमिति न दोषः। यत्र तु नैवंविधं प्रयोजनं कर्तृभेदो वाऽसम्भावी। यथा अयं यज्ञमानश्च इत्यस्यामौद्गात्रे एव प्रगीताप्रगीतभेदेन समाम्नातायाम्। तत्राग्न्याऽभ्युदयशिरस्कत्वं परित्यज्य उत्पत्तिविनियोगपरत्वेन सार्थक्यमिति विशेषः ॥ २ ॥ १४ ॥

सामानाधिकरण्यबाधेन याजमानत्वमेव। यद्यपि यो वृष्टिकामः स सौभरेण स्तुवीतेत्यादौ न परस्मैपदं, तथापि नौद्गात्रगामित्वम्। फलकामनाऽनुरोधेन यजमानफलसाधनीभूतनित्यगुणबाधानुपपत्तेः। अतस्तत्र सामानाधिकरण्यमात्मनेपदस्य प्रयोजककर्तृत्वाभिप्रायेणैव व्याख्येयम्। अतएव यत्र न नित्यगुणबाधोऽबाधेऽपि वा साक्षादेव वचनं, तत्र स्वामिभिन्नगामित्वेऽपि न क्षतिः। यथाऽऽत्मने वा यजमानाय वा यं कामं कामयते तमुद्गायेदिति। अत्र पृथग्यजमानपदश्रवणादात्मपदश्रवणाच्चात्मपदेनोद्गातैवोच्यते। अतएवाऽनुषङ्गेण वाक्यभेदोऽप्यदोषः। तमित्यनेनोभयविशिष्टं वैकल्पिकं कामं परामृश्य उद्गेयत्वविधानाद्वा न वाक्यभेदः। गायतेश्च गायन्ति यं सामगा इत्यादौ अर्थाभिधानेऽपि प्रयोगाच्च कामस्वार्थफलोद्गेयत्वविधानात्॥ ३॥ १२२॥

मन्त्राश्च॥ २६ कार्ये करणभूताः कर्मफलप्रकाशकाः कर्माङ्गभूतमन्त्रा आयुर्दा अग्ने अगन्म सुवरित्यादयः। ते समाख्यानादाध्वर्यवा इति प्राप्ते।

यद्यप्येते लिङ्गादिनाऽऽहवनीयोपस्थानादौ विनियुक्ता सूक्तवाकादिवत्तृतीयया इतिकरणेन वा विनियुक्तत्वाभावादानुषङ्गिकफलप्रकाशकास्तथापि कर्मफलमेवोपस्थानादिप्रयोज्य प्रोत्साहनाय प्रकाशयन्ति। तत्र च यच्चैतत्प्रकाश्यं फलं कर्मजन्यत्वेन सृष्टं, तत्र तत्फलमेव नियतमनियतं वा प्रकाश्यते। अत एव दर्शपूर्णमासादौ स्वर्गायुरादेः फलत्वात्तत्फलार्थप्रयोग एव तत्तन्मन्त्रो न फलान्तरार्थप्रयोगे। यत्र तु नैतत्प्रकाश्यस्य कर्मफलत्वं तत्र यथायथ

त्वात् । द्वन्द्वता हि नाम एकया सहोपावर्जनक्रियया धेनुवत्सयोः मध्यामध्यत्वसम्पादनं, एकया स्वत्वज्ञानविषययोर्मूत्रसम्पुटयोः । एवं दाद्गरस्यपि द्रष्टव्यम् ।

न च तत्कर्तृत्वानुरोधेन प्रधानभूतपदार्थानां कर्तृबाधः । अङ्गगुणविरोधन्यायेन तदसम्भवात् । न च तानि सम्भाव्य यजेतेति ज्ञातप्रयोजकत्वेनैव द्वन्द्वानाम् यागसमानकर्तृकत्वावगतेः वचनादेवाङ्गनित्वादपि पदार्थेषु समाख्याया बाध इति वाच्यम् । ज्ञातप्रयोजकत्वेनाप्युपपत्तेः प्रधानसमाख्याबाधकत्वानुपपत्तेः । एवं द्वन्द्वानामिष्टसमाख्याऽपि प्रयोजकत्वाभिप्रायेणैव व्याख्येया । अतः समाख्यानं याजमानं पदार्थमात्राध्वर्यवमेव ॥ ३ ॥ १२६ ॥

विप्रतिषेधे ॥ द्वैधपक्षे यूपपरिव्याणे चाध्वर्यवः करणमन्त्रः परिवीरसीत्ययं श्रुतः । तथा, युवा सुवासा इत्ययं क्रियमाणानुवादी होत्रोऽपि । तौ च द्वावपि यूपाय परिवीयमाणायानुब्रूहीति प्रैषवशादेतदुत्तरपाठाधीनत्वेनैवाध्वर्युविहितोत्तरक्षणे एककालीनौ । अङ्गपरिव्याणभावनाकरणत्वमकालत्वात् क्रियमाणानुवादित्वाविरोधः । सोमविक्रयौ च कौत्सवाचिनामयने तथैव प्राप्तौ । अथ च यो होता सोऽध्वर्युरिति च श्रुतम् । तत्र च समाख्याने वार्तिकप्रयुक्तकरणजन्यहोत्राध्वर्य्वादेरानन्तर्यभावेनाभावाद्धोतेत्यत्र होत्रध्वर्युपदाभ्यां तत्कार्यलक्षणया कार्यद्वयेऽप्येककर्तृकत्वं विधीयते । अतश्चौपदेशिकैककर्तृकत्वबलेन प्राकृतैककालत्वबाधात् प्रथमतः करणं पश्चादपर इत्येकः पक्षः ।

होतृत्वादेरध्यवसायमात्रनिमित्तकत्वस्य स्थापितत्वात् पक्षेऽपि

ज्ञाते च ॥ वाजपेयादौ यत्र कृशीर्यजमान वाचयतीति श्रुतं, तत्र याजमानो मन्त्रः । वाचनमाध्वर्यवमित्यविवादम् । परन्तु वाचयतेर्ब्रह्मचारिणो गायत्र्युपदेशादौ शिक्षणवाचित्वेन क्लृप्ततया प्रकृतेऽपि शिक्षणविधायित्वावगतेः तस्य चादृष्टार्थत्वापत्त्या ज्ञातत्व-सम्भवादुक्तविधानानुरोधेनाज्ञ एव वाजपेयादावधिकारी । अतो-ऽन्येषां क्रतूनामध्ययनविधिसिद्धज्ञानोपजीवनेन ज्ञानधिकारकत्वेऽपि वाजपेयादौ तदसम्भवादज्ञस्यैव वाचनमिति प्राप्ते ।

वाचयतेर्वचनानुकूलव्यापारमात्रवाचित्वेन क्वचिदन्यथानुपपत्त्या शिक्षणपरत्वेऽपि स्मरणमात्रपरत्वेनापि प्रकृते वाचनोपपत्तेरर्थज्ञाना-क्षेपकत्वे प्रमाणाभावात् ज्ञस्यैव वाचनम् । तत्र खण्डशो वा इमं मन्त्रं ब्रूहीत्येव वेत्यन्यदेतत् ॥ ३ ॥ १ ३ ५ ॥

याजमाने ॥ दर्शपूर्णमासयोर्वत्समुपावसृजतीत्यादीनि कानि-चित्कर्माण्याध्वर्यवसमाख्यायुक्तानि प्रत्येकं विभिन्नदेशे विधाय, पुनस्तान्येव याजमानसमाख्यायुक्तानि द्वन्द्वीवत्सञ्चोपावसृजत्युखा-ञ्चाधिश्रयतीत्याद्युक्तानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि सम्पाद्य यजेतेति श्रुतम् । तदेषां ब्राह्मणमन्त्रवदुभयकर्तृकत्वं तावन्न सम्भवति । अदृष्टार्थत्वापत्तेः । न चाभ्यासात्कर्मार्थत्वम् । अन्यपरत्वात् । अत एव एककर्तृकत्वावश्यभावे विशेषसमाख्यानाद्याजमानत्वे प्राप्ते ।

नैषां याजमानकाण्डे विधानम् । आध्वर्यवे भिन्नदेशविहितानां-मेव द्वयोर्द्वयोः प्रत्यासत्त्याख्यद्वन्द्वतारूपगुणविधानार्थमेवानुवादात् । अतः पदार्थेषु तावदध्वर्युरेव कर्ता । न च द्वन्द्वतायामेव यजमानः शक्तः । अन्येन क्रियमाणानामन्येन द्वन्द्वतायाः सम्पादयितुमशक्य-

कालेषु कृत्याश्चेति चकारेण लोटोऽपि प्राप्तकालतायां विधानात् प्राप्तकालतायामयं लोट्। प्रोक्षण्यासादनस्य प्राप्तः काल इति। युष्मदर्थकोमध्यमपुरुषस्य साधुत्वार्थः। अथ वा। हे प्रोक्षण्यासादन, तव प्राप्तः काल इति क्रियायां चेतनत्वाध्यारोपेण वः। यत्र तु अग्नीदग्नीन्विहरेत्यत्रैव प्रैषः, तथाऽपि सम्बोधनानुरोधेन प्रैषार्थस्याग्नी-ध्रकर्तृकत्वम्। यद्यत्र हे अग्नीत् ममाग्निविहरणस्य प्राप्तः काल इति व्याख्यातुं शक्यत्वात् तथापि समाख्याबाध इति प्राप्ते।

समाख्यानुरोधेन मध्यमपुरुषस्य साधुत्वेन क्रियायां चैतन्यत्वा-रोपेण व्याख्याने प्रमाणाभावात् सम्बोधनमध्यमपुरुषयोश्चादृष्टार्थत्वा-पत्तेः प्रैषत्वसमाख्याबाधापत्तेश्च प्राप्तकालार्थकत्वानुपपत्तेः। प्रैषस्यापि लक्षितौपचारिकत्वापत्त्या एकत्राध्वर्युसमाख्याबाधेनोभयोर्भिन्नकर्तृ-कत्वमेव ॥ १ ॥ १२८ ॥

अध्वर्युः॥ तथापि बहुषु प्रधानभूतेषु प्रैषार्थेषु समाख्याबाधे प्रमा-णाभावादेकस्मिन् प्रोक्षणीरासादयेत्यादिप्रैष एवाध्वर्युबाधेनान्यकर्तृ-कत्वम्। अत एव निर्वपं स्फ्यन्धारयित्वा संप्रैषमाह यद्न्यं धारयेत् स्फ्योऽवश्चैवाध्वर्युं स्यादीति धारयितुर्भिन्नमध्वर्युं दर्शयतीति प्राप्ते।

प्रैषार्थस्यान्यकर्तृकत्वेऽपि प्रयोजकत्वेनाध्वर्योः कर्तृत्वोपपत्तेः समाख्यायाः कुत्राप्यबाधात् प्रैषार्थानन्य एव कुर्यात् प्रैषोच्चारणं त्वध्वर्युः। स च सोमादावपि विशेषवचने प्रतिप्रस्थात्रादिरन्यः पुरुषः, दर्शादौ त्वाग्नीध्र एव कर्मकरत्वेन याज्ञिकप्रसिद्धत्वादिति ध्येयम्। यत्तु लिङ्गं, यद्यध्वर्युरन्यश्चान्वारभेत्तदा स्फ्यस्य स्पृशेते-त्यर्थेऽपि बाधकाभावाद्धारणप्रैषयोराध्वर्यवत्वेऽप्युपपन्नम्। स्फ्यधार-

तत्प्रभवेन पदद्वये कार्यलक्षणायां प्रमाणाभावाच्छाघन्य एवाध्वर्युपदे लक्षणामङ्गीकृत्याध्वर्यवपदार्थानां होतृसंस्कारकत्वेन विधानम्। अप्राकृतकार्यकारित्वापत्तेः होतृपदे कर्मलक्षणापत्तेश्च होतैव वा तत्कर्तृत्वेन विधीयते। तथापि तु परिधौ पशुं नियुञ्जीतेत्यत्र परिधित्वाविरोधेनेव होतृत्वाविरोधेनैव कर्तृत्वविधानाद्दौत्रः क्रियमाणानुवाद्येव तेन मन्त्रोऽभ्यस्यः। अपरन्तु तेन कालान्तरेऽन्येन वा तत्पुरुषेण तस्मिन्नेव काले प्रयोक्तव्य इति प्राप्ते।

पुरोडाशकपालवदग्निपरिधानार्थस्यैव परिधेः पशुनियोजने विनियोगानुक्तं परिधिधर्माणां मन्त्रकादीनां प्रावल्यम्। प्रकृते त्वध्वर्युनिमित्तहोतृत्वेनैवाध्वर्यवे विनियोगाद्धोतृकार्यस्य प्रयोजकत्वकल्पने प्रमाणाभावादाध्वर्यवस्य करणस्यैव प्रत्यक्षवाक्यावगत-तृचित्वेन प्रावल्यात्पातिदेशिकपदमाम्नायमाणकक्रियमाणानुवादिनः प्राथम्यं, न वा कालान्तरे तस्य होत्रा पाठः। न च श्रेयान् भवतीति विज्ञानवगतक्रियमाणानुवादित्वबाधापत्तेः। क्वापि करणमन्त्राध्वर्यवितीनुसरणे होत्रा तस्य पाठः। यूपायेत्यादिमैत्रे होतुः कर्तृत्वेन प्रैषार्थे तदसम्भवात्। अतस्तस्मिन् तत्काले एव होतृपुरुषोऽन्यः कश्चिदन्तरङ्गोऽध्वर्य्वादिः कर्त्ता। तस्य कर्मान्तरत्वाशक्तौ न बधिर-त्वेऽपि ॥ २ ॥ १२७ ॥

प्रैषेषु ॥ प्रोक्षणीरासादयेत्यादयः प्रैषाः प्रैषार्थाश्च प्रोक्षण्यासादनादयः समाख्यानादाध्वर्युणैवैकेन कर्त्तव्याः। न च स्वस्मिन् स्वस्य प्रैषानुपपत्तिः। चेतो इत्या खिद्यत इत्यादाविव स्वस्मिन्नपि स्वस्योपदेशसम्भवात्। वस्तुतोनैवायं प्रैषः। अपि तु प्रैषाभिधर्मप्राप्त-

तथापि यजमानगामित्वम्। अतश्च तदनुरोधेन ममेति मम यजमानस्येत्येवं व्याख्येयम्। मह्यमित्यादौ त्वस्वच्छन्देन यजमान एवोपचारादभिधीयत इति न दोषः। प्रयोजनं, अवेक्ष्यस्याघ्रामाभावादूहानूहप्रयोजनाभावेऽप्यर्थानुसन्धानविशेषरूपं द्रष्टव्यम् ॥ ३ ॥ १४० ॥

कर्मार्थम् ॥ यत्र तु मा मा सन्ताप्तमित्यादावृत्विक्करणविनियुक्त एवासन्तापनादिरूपं फलं ऋत्विग्गामित्वेऽपि क्रतुविरोधिसन्तापनिवर्त्तकतया तदुपयोगि, तत्र यजमानस्य चेति षष्ठ्याः परम्परयाऽप्युपपत्तेर्लिङ्गानुरोधादृत्विग्गाम्येव ॥ ३ ॥ १४१ ॥

व्यपदेशाच्च ॥ एवं यत्रापि तनौ सचेत्यादौ द्विवचनानुपपत्तिस्तत्रापि ऋत्विग्गामित्वम् ॥ ३ ॥ १४२ ॥

द्रव्यसंस्काराः ॥ बर्हिर्धर्माणां प्रकृतावङ्गप्रधानसाधारण्यमुक्तम्। अतश्च दैक्षपशावपि बर्हिषा यूपावटमवस्तृणातीति विहिते यूपावटस्तरणबर्हिष्यपि दार्शिकबर्हिर्धर्मा भवेयुरिति प्राप्ते।

प्रकृतौ बर्हिषि हवींष्यासादयतीति वचनादङ्गप्रधानसाधारणहविरासादनार्थस्यैव बर्हिषि धर्मा न कार्यमात्रार्थे इत्युत्तराधिकरणे वक्ष्यते। यद्यपि वा परिभोजनीयादिवत् प्राकृतकार्यमात्रार्थत्वं स्यात्, तथापि नाप्राकृतकार्ये यूपावटस्तरणबर्हिषि भवेयुः। उपकारस्य तद्भावेनैव पदार्थानामतिदेशेन विकृतावप्राकृतकार्यकारित्वकल्पनाऽनुपपत्तेः। न हि प्रकृतौ येन केनचित्सम्बन्धेन अपूर्वसम्बन्धि बर्हिरुद्देश्यतावच्छेदकम्। येनाप्राकृतस्यापि तत्सम्बन्धाद्धर्मप्रापकत्वं भवेत्। सम्बन्धविशेषग्राहकप्रमाणबलेन तावद्विशेषणानामेव प्रवेशेनानुपस्थितसामान्यस्योद्देश्यतावच्छेदककोटावप्रवेशात्। न च तथापि

यमपि कल्पसूत्रेषु आध्वर्यवमेव प्रसिद्धमिति । अथ वार्त्तिकं प्रौढिवादः ॥३॥१२८॥

ऋत्विक्फलम् ॥ ये इतिकरणेन तृतीयया वा विनियुक्ता, करणमन्त्रास्तेषां मान्त्रवर्णिकक्रियाजन्यफलप्रकाशकत्वं, न [illegible] आयुर्दा अग्न इत्यादिवत् प्रधानफलानुवादकत्वमित्युक्तं कौस्तुभे । तद्यथा- ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं परिगृह्णातीत्यादावग्न्यन्वा-धानक्रिया तावदाध्वर्यवी । मन्त्रलिङ्गवशेन प्रधानभूतक्रियायां समाख्याप्राप्तकर्तृबाधानुपपत्तेः ।

न च पाठमात्रेण मन्त्रेणाध्वर्युगतक्रियाप्रकाशनम् । वयन्त्वेन्धाना-इति मन्त्रलिङ्गवशेन क्रियासमानकर्तृकत्वस्य मन्त्रे प्रतीतेः । अतश्च मन्त्रक्रिययोरुभयोराध्वर्यवत्वात् फलमपि वर्चःप्रभृति तद्गतमेव । अन्यथा ममाग्ने इति मम न ममेत्यादिमन्त्रलिङ्गविरोधापत्तेः ।

न च साङ्गप्रधानविधायिफलवाक्यावगतात्मनेपदानुरोधेनाङ्ग-फलानामपि स्वर्गकामकर्तृकत्वावगतेर्यजमानगामित्वमिति वाच्यम् । श्रुतस्यात्मनेपदस्य सावकाशतया तेन कल्पितस्यापि लैङ्गिकस्याध्वर्यु-कर्तृत्वस्य बाधानुपपत्तेः । न चात्मनेपदार्थस्यैव तद्विषये बाधे विधेरन्यप्रधानविषयेऽनुष्ठापकत्वस्यापि बाधापत्तिः । प्रमाणा-भावात् । अतोऽग्निसंस्कारार्थानुष्ठापितक्रियाजन्यानुषङ्गिकफलस्य तत्रानुपयोगिनोऽप्याध्वर्यवत्वेऽपि न काचित् क्षतिरिति प्राप्ते ।

यां काञ्चन यत्र ऋत्विज आशिषमाशासते यजमानस्यैव सेत्य-न्यथासिद्धलिङ्गानुगृहीतात्मनेपदश्रुत्या यजमानगामित्वावगतिः । एतल्लिङ्गबलादेव च यत्र नात्मनेपदश्रवणं यथा जुहुयादित्यादौ,

विकृतौ ॥ अनारभ्य, यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्त्तव्या इति श्रुतमुपांशुत्वं प्रधानवदङ्गेष्वपि मन्त्रोच्चारणधर्मत्वात्काम्यशब्दस्य च कामप्रयोजकत्वेनाङ्गेष्वपि प्रयोगोपपत्तेर्जनकमात्रपरत्वेऽपि चोद्देश्यविशेषणत्वेनाविवक्षितत्वादिष्टीनामेवाविवक्षितत्वे सोमेऽपि तदापत्तेः साङ्गेष्वेवमिति प्राप्ते।

अङ्गेषु कस्मिंश्चिदपि काम्यशब्दप्रयोगाभावात्फलसम्बन्धेन प्रधानमात्रपरत्वावगतेः काम्यमेष्टिरित्युभयपरामर्शकतच्छब्दस्य चोद्देश्यपरत्वेनोभयविवक्षोपपत्तेः प्रकृतौ प्राकरणिकधर्मैस्त्वर्थावरोधे नियमासम्भवेऽपि काम्यविकृतीष्टिप्रधानमात्रे नियमः। न चाचोदितः प्रवर्ग्यणाम भूयेनेत्यादिवाक्यकरणविभक्तिनिर्देशो येन साङ्गस्य भवेत्। तत्प्रत्ययेन कर्मत्वाभिधानात्तु प्रधानमात्र एव नियमः ॥२।१।४६॥

सन्निधान ॥ श्येने, हुतिनवनीतमाज्यं भवतीति श्रुतम्। हुतिनवनीत प्रकरणात् श्येनप्रकरणाङ्गम्। न चाज्यानुवादेन हुत्यधिकरणकनवनीतप्रकृतिविधिः। आज्यस्य नवनीतप्रकृतिकत्वस्य प्राप्तत्वात्। तदनुवादेन हुत्यधिकरणकत्वविधाने एकप्रसरताभङ्गापत्तेश्च। अतो बहूनामिष्टिप्रधानार्थं एवैकोहुत्यधिकरणकनवनीतप्रकृतिकः सन्निधानात् श्येने विधीयते। आज्यपदन्तु तस्यैव नवनीतप्रकृतिकस्यानुवादः. अन्यपदार्थतात्पर्यग्राहकत्वेति नानेकविधानता। अत एव श्येनोऽप्याज्यद्रव्यकत्वादुपांश्वाजविकार एव। प्रकरणान्तरभक्ते तु सोमप्रयाजयाजमात्रमिति प्राप्ते।

निष्टिविधौ गौरवापत्तेः अतिदेशप्राप्ताज्यपरत्वमेवाज्यशब्दस्याङ्गीकृत्य तदुद्देशेन हुत्यधिकरणकनवनीतप्रकृतिकत्वमेव प्रयो-

मांसम्॥ षट्त्रिंशदाब्दिके शाक्यानामयनाख्ये सत्रे, मंस्थिते मस्थितेऽहनि गृहपतिर्मृगयां याति तत्र यान् मृगान् हन्ति तेषान्तरथाः सवनीयाः पुरोडाशाभवन्तीति श्रुतम्। मांसं भवतीति विधिना प्रत्यायकत्वात् पुरोडाशस्य तदुद्देशेनैव विधीयते। विधेरेव हि सवनीयार्थे भावनाभाव्यवाकाङ्क्षत्वम्। अतस्तत्प्रत्यायकस्यैव तदुचित, न सवनीयानाम्। यदा तु पुरोडाशाः सवनीया इति भवदेवादिष्टतः पाठस्तदा प्रायणिकत्वादिधेयतरत्वप्रत्यायकत्वाच्च पुरोडाशकार्यस्यैवोद्देश्यत्वं स्पष्टमेव।

न च पुरोडाशस्य सवनीयपदेन विशेषणम्। विशिष्टोद्देशापत्तेः। अत. सर्वपुरोडाशकार्ये तरत्वं विधीयते। सवनीयपदन्तु सवनीयासवनीयपुरोडाशमात्रे गौणं लाक्षणिकं वा। अतः पुरोडाशमात्रे तरत्वं धानाद्यादिस्थाने इति प्राप्ते।

सवनीयपदवत् पुरोडाशपदेऽपि कार्यलक्षणापत्तेः प्रायणिकसवनीयपदमेव सवनीययागोद्देश्यतापरम्। प्रथमायास्तु द्वितीयार्थे लक्षणा उभयत्रादिष्टिर्हैव। अतः सवनीययागोद्देशेनैव धानादिप्रत्यकबाधेन तरत्व विधीयते। पुरोडाशपद लेकं अयन्यश्च पुरोडाशवत्सवनन्तेन सवनीययागेषु लाक्षणिकमनुवादः। दृष्टश्च पुरोडाशशकलमुर्विन्यादौ पुरोडाशशब्द. सवनीयहविःपर इति तस्य सवनीययागलक्षकत्व सुकरमेव। तदेवं श्रुत्यादिषट्प्रमाणकमङ्गत्वं निरूपितम्। अत. पर प्रयोज्यत्व निरूप्यिष्यते ॥३॥१॥५०॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

तृतीयस्याष्टमः पादोऽध्यायश्च ॥

---

गात्रान्तःपातितया विधीयते । आज्यप्राप्त्यैव प्राप्तमिति तन्मात्र-विषयता । यत्तु दृतिनवनीतपदस्य तत्पुरुषत्वमङ्गीकृत्य दृत्यधिकर-णकनवनीतमेव आज्यपदलक्षिततत्कार्योद्देशेन द्रव्यतया प्रकृत-रूपाज्यप्रत्याम्नायेन विधीयत इति न्यायसुधाकृतोक्तम् । तदाज्यपदे सामतिकलक्षणापत्तेस्तदपेक्षया आनुशासनिकनिरूढलक्षणापादक-षष्ठीसमासाङ्गीकारस्यैव न्याय्यत्वादुपेक्षितम् । यदि तु किञ्चित्प्रमा-णान्तरम्भवेत्तदा तदेवास्तु ॥३।१।४७॥

आधाने ॥ सर्वत्र धर्माणामनारभ्याधीतप्राकरणिकसाधारण्येना-पूर्वोपकारे एवान्वयात्पवमानेष्ट्यादीनामपि च श्येनापूर्वोपकारकत्वा-त्तत्रापि दृतिनवनीतमिति प्राप्ते ।

यदुपकारकता वैधप्रमाणप्रमिता तदुपकारके एव धर्माणां निवेशः । न त्वर्थसमाजपक्षोपकारकत्वेऽपि । श्येनोपकारकयजमा-नाभ्यञ्जनादावपि दृतिनवनीतत्वापत्तेः । न चाधानादेः श्येनोप-कारकत्वं प्रमाणप्रमितम् । अग्निमात्रार्थत्वस्यैव प्रमितत्वात् । अतः श्येनप्रयोगवर्त्तितदुपकारकाङ्गे एव तन्निवेशः ॥३।१।४८॥

तत्काले वा ॥ एवं चेत्सुत्याकाले एव श्येनवैशेषिकाणां सद्य-पशुनालम्भन इत्यादीनां दर्शनाद् दृतिनवनीतस्यापि सुत्याकाला-भ्यञ्ज एव निवेश इति प्राप्ते ।

सामान्यतोदृष्टेन वाक्यबाधोपयोगासामर्थ्यम् । न हि पशु-धर्मित्वस्यापि सुत्याकालत्वे श्येनाङ्गत्वं प्रयोजकं, अपि तु प्रधान-प्रत्यासत्ति-तत्प्रकाशोत्कर्ष-वाक्यबाधरूपहेतुत्रयम् । न चात्र तदस्ति । अतः यथार्थतेव ॥३।१।४९॥

कारकत्वेनाङ्गत्वसत्त्वेऽपि तत्तयोरभावेन व्याप्यत्वस्याप्यभावात्। अतो-नावच्छेदकावच्छेदेन हेतुहेतुमद्भावः। तथापि क्वचिद्दध्यानयनादि-निष्ठप्रयोज्यत्वनिरूपणे तन्निष्ठशेषत्वनिरूपणस्योपयोगात् सामानाधि-करण्येन तन्निरूपणं प्रति अङ्गत्वनिरूपणस्य हेतुत्वात् सङ्गत्युपपत्तिः।

अथ प्रयोज्यत्वं, क्वचित्क्रत्वर्थपुरुषार्थविचारद्वारेण निरूप्यते, क्वचि-दन्यद्वारेण, क्वचित्साक्षादेवेति प्रयोज्यत्वमेवाध्यायार्थः। क्रत्वर्थपुरुषार्थ-त्वन्तु तृतीयचिन्त्यमपि उदाहरणविशेषनिष्ठतया प्रयोज्यत्वसिद्ध्यर्थं विचार्यत इति विवेकः ॥४॥१॥१॥

यस्मिन् ॥ वक्ष्यमाणयोः क्रत्वर्थपुरुषार्थयोर्लक्षणमुच्यते। तत्र तन्त्ररत्ने तावत्स्वय प्रार्थितसाध्याधीनानुष्ठानः पुरुषार्थस्तदुपकारार्थः क्रत्वर्थ इत्युक्तम्।

तत्र, फले काम्यकाशादौ न कलञ्जभक्षयेदित्यादिनिषेधेषु चाव्याप्तेः। अनुष्ठेयत्वाभावात्। निषेधेषु स्वय प्रार्थितसाध्यत्वमसिद्धेश्च। क्रत्वर्थलक्षणे आधानादावतिव्याप्तेश्च।

यद्यपि शास्त्रदीपिकायामितिकर्त्तव्यतात्वेनान्वितत्वं क्रत्वर्थत्वं तद्भिन्नत्वं करणफलान्वयि पुरुषार्थत्वमित्युक्तम्। तदपि न, क्रत्वर्थ-निषेधानामक्रियात्वेनेतिकर्त्तव्यतात्वेन तेष्वव्याप्तेः। आधानाध्य-यनयोरुभयभिन्नतया तन्त्ररत्ने तदुक्तत्वेन* तत्र पुरुषार्थलक्षण-स्यातिव्याप्तेश्च।

तस्मात् स्वयं प्रार्थितत्वदुद्देश्यतानिरूपितविधिविषयताकत्वं पुरुषार्थत्वम्। स्वय प्रार्थितत्वञ्च शास्त्रानधीनेष्टसाधनताज्ञानजन्ये-

* इत्थमेव पाठः सर्वत्र। तदुक्तत्वेन, इति तु प्रतिभाति।

श्रीगणेशाय नमः ।

# अथ चतुर्थोऽध्यायः ।

## प्रथमः पादः ।

---

अथातः क्रत्वर्थं ॥ एवं सिद्धे शेषविनिरूपिते शेषत्वे प्रयोजकनिरूपितं प्रयोज्यत्वमिह निरूप्यते । तच्च परोद्देशप्रवृत्तकृतिव्याप्यत्वम् । कृतिव्याप्यत्वञ्चानुष्ठापकत्वरूपं कालादिव्यावृत्तं वाजपेयाधिकरणे कौस्तुभ एव निरूपितम् । अतश्च कालादेः कृतिकारकत्वघटिताङ्गत्वसत्त्वेऽपि प्रयोज्यत्वाभावः । अङ्गत्वाच्च प्रयोज्यत्वस्य भेदः ।

तेन यदुद्देशप्रवृत्तकृतिव्याप्यत्वं यस्य, तत्तत्प्रयोज्यम् । यथा दध्यानयनप्रयाजा आमिक्षादर्शपूर्णमासादेः । यन्निष्ठकृतिव्याप्यतानिरूपितोद्देश्यताऽस्ति यत्तत्तस्य प्रयोजकम् । यथाऽऽमिक्षादर्शादि दध्यानयनादेः । उद्देश्यता चात्रानुपादेयपशुकसाधारणी ग्राह्या । तेन कामनिमित्तादेः प्रयोजकत्वाविघातः ।

यद्यपि विधिरेव सर्वत्रानुष्ठापकः । प्रवर्त्तनारूपत्वात् । प्रवर्त्तनारूपो हि विधिरिष्टसाधनत्वमिव कृतिसाध्यत्वापरपर्यायप्रयोज्यत्वमपि विषयस्याक्षिपतीति भवति प्रयोजकः । तथापि स यदुद्देशेन प्रयोजयति तस्यापि प्रयोजकत्वव्यवहारः शास्त्रे ।

अत्र च यद्यपि न प्रयोज्यत्वावच्छेदेन तन्निरूपणं प्रति शेषत्वनिरूपणस्य हेतुत्वम् । निमित्ताद्यङ्गत्वाभावेऽपि नैमित्तिकस्य तत्प्रयोज्यत्वेनाङ्गत्वे व्यापकत्वस्येव पुरोडाशकपालादेस्तुषोपवापं प्रति

यदंशे अप्राप्तित्वादंश एव कल्पनात् फलस्य च रागप्राप्तत्वेन तत्कल्पने प्रमाणाभावादविधेयत्वम्। प्रयोजनं, पूर्वपक्षे श्येनफलस्याभिचारस्य विधेयत्वान्निषेधाविषयत्वम्। सिद्धान्ते तु रागप्राप्तत्वाद्धिंस्यादिति निषेधविषयत्वम्।

न च हिंसाशब्दस्य मरणानुकूलव्यापारवाचित्वात्तस्य च वैरिमरणाख्याभिचारफलकश्येनरूपस्य विहितत्वात्कथं निषेधविषयत्वमिति वाच्यम्। अभिचरन् यजेतेति सामानाधिकरण्याच्छ्येनसमानकर्तृत्वावगतेरभिचारपदस्य मरणानुकूलश्येनकर्तृनिष्ठविषदानादिव्यापारवाचित्वावगतेस्तस्यैव श्येनफलत्वावधारणाद्रागप्राप्तस्य तस्य निषेधविषयत्वोपपत्तेः। एवञ्चायमर्थः श्येनेन विषदानाद्युत्पत्तिद्वारेण वैरिमरणम्। न तु श्येनेनैव साक्षादिति ध्येयम्।

यत्तु वैरिनिष्ठो मरणानुकूलव्यापार एवाभिचारपदार्थः। तत्र च यजमानस्य श्येनद्वारा प्रयोजककर्तृत्वमिति तस्य निषेधाविषयत्वेऽपि यजमानस्य पापोपपत्तिरिति केनचिदुक्तम्। तत् श्येनस्यैव तथा सति प्रयोजकव्यापारत्वात्तस्य च विहितत्वात्तत्कर्तृत्वेन यजमाने पापोत्पत्त्यनुपपत्तेरुपेक्षितम्। यत्र तु वैरिमरणकामो यजेतेति श्रुतं, तत्र वैरिमरणानुकूलकर्तृनिष्ठलौकिकव्यापाराभावेऽपि वैरिमरणरूपपरानिष्टचिन्तनादेव पापमिति ध्येयम्। अभिचारार्थकर्मस्पर्शामयधर्मत्वस्मरणाद्वा तथा। प्रकृतेऽपि तथैव वाऽस्तु।

यदा गोदोहनादीनां षष्ठीश्रुत्या पुरुषार्थत्वावगमेऽपि प्रकरणात् क्रत्वङ्गत्वम्। इतरथा, प्रणयनस्य चमसलोपेनाङ्गाभावाद्वैगुण्यापत्त्या विगुणप्रणयनाश्रिताद्गुणादपि फलानापत्तेः। अत उपजीव्यत्वाद्दुर्बलमपि प्रकरणं विनियोजकम्।

च्छाविषयत्वम् । स्वर्गकामादौ हि इष्टसाधनता न शास्त्रगम्या । इदञ्च स्वर्गस्य देशविशेषरूपत्वे । सुखविशेषरूपत्वे [illegible] शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाविषयत्वं बोध्यम् । यागक्रतूपकारादौ तु शास्त्रगम्येति । तेन स्वयं प्रार्थिताः स्वर्गादयस्तु तथा । एतदुद्देशेन विधीयमानं यागादि भवति पुरुषार्थम् । फलस्य च पुरुषार्थत्वव्यवहारो भाक्त इत्युक्तमेव फलं पुरुषार्थत्वादित्यत्र ।

उद्देश्यताविधेयते च स्वरूपसम्बन्धविशेषात्मिके स्वपघटके न तु साध्यत्वानुष्ठेयत्वात्मिके । तेन निषेधस्थले नरकाभावोद्देशेन निवृत्तिविधानात्स्वत्वोद्देशेन च कालविधानाच्चाव्याप्तिः । पुरुषार्थप्रत्यवशुद्धाविधिषु च दोषाभावोद्देशेन तत्तत्क्रियाविधानाच्चाव्याप्तिः । एवञ्च स्वयं प्रार्थितभिन्नत्वे सत्युद्देश्यतानिरूपितविधेयतावत्त्वमेव क्रत्वर्थत्वम् । क्रतुशब्दो ह्यस्मिन् प्रकरणे स्वयमप्रार्थितपरः । तेनाधानाध्ययनयोर्ज्योतिष्टोमाद्यर्थत्वाभावेऽपि तादृशाभ्यर्थत्वात्मार्थत्वात्क्रत्वर्थत्वोपपत्तिः ।

क्रत्वर्थनिषेधेषु चोक्तविधया क्रतुवैगुण्यपरिहारोद्देशेन निवृत्तेर्विधेयत्वान्नाव्याप्तिः । नातिरात्र इत्यादौ तु क्रतुषाड्गुण्यज्ञानान्तरजन्यत्वेऽपि षोडशिग्रहणाभावं प्रत्युद्देश्यत्वाविधानात्स वा । एवं क्रत्वर्थाभ्यनुज्ञाविधिष्वपीति सर्वं समञ्जसम् ।

यद्वा, यागेन स्वर्गकरणम् । अपि तु फलस्यापीतरांशवद्भावनाविशेषणत्वाद्विधेयत्वम् । न चान्यांशयोरपि विशेषणत्वातिरिक्तं विधेयत्वम् । यदि तु विशिष्टभावनाविधावर्थादितरांशयोर्विधिरित्युच्येत, तत्फलस्याप्यविशिष्टमिति प्राभे ।

विशिष्टभावनाविधाने चार्थिकविशेषणविधेराश्रयणावश्यकत्वात्तच्च च

अथ या षष्ठीसम्बन्धमात्रवाचिनी षष्ठ्यादिन्यायेन सार्वकाम्य-वाक्यप्राप्तपशुप्रयोजकप्रणयनजनकफलसम्बन्धेनैव प्रकरणानुरोधेन पशू-द्देशेन गोदोहनं विधत्ते। न तु साक्षादिति प्राप्ते।

दुर्बलप्रकरणानुरोधेन परम्परासम्बन्धाङ्गीकारे प्रमाणाभावा-च्छ्रीयादिवन्नियमविधित्वाघटनाभावाच्च साक्षादेवोद्देश्यत्वं पशूनाम्। प्रणयनवैगुण्यस्य च परप्रयुक्तगोदोहनजन्योपकारमात्रोपजीवनेन प्रणयनस्य तत्प्रयोगे अनङ्गत्वमपापादितया अनारभ्याधीतत्वात्पुरुषार्थत्व-मेव तस्येति पशुप्रयुक्तमेव गोदोहनमिति तत्तत्पशुकाममात्रमेव कर्तव्यम्।

यत्तु भाष्यकारादिभिर्ब्राह्मणः प्रतिग्रहादिना द्रव्यमर्जयेत्क्षत्रिया-दिना राजन्य इत्यादिविधिमुदाहृत्यानारभ्याधीतस्यापि प्रतिग्रहा-दिनियमस्य फलकल्पनाभिया क्रत्वर्थत्वावधारणात् तादृशविशिष्टोपा-र्जितद्रव्यमपि सर्वं क्रत्वर्थमेव। अत एवाप्यभिचरितहिरण्यादि-सम्बन्धात् तथाविधाद्दोषाणामपि क्रत्वर्थत्वसिद्धिरिति पूर्वपक्षयित्वा। श्रुत्याद्यभावाद्दृष्टकल्पनस्य च क्रत्वर्थत्वपक्षेऽपि तुल्यत्वान्नियमस्य क्रत्वर्थत्वानुपपत्तेरर्जनस्य च रागप्राप्तत्वेनाविधेयत्वात् तदर्जितद्रव्यस्य दृष्टार्थत्वाद्विहिताविहितसाधारणपुरुषकृत्यमात्रोपयोगित्वमेव। इतरथा जीवनपरिलोपात् सर्वतन्त्रपरिलोपापत्तेः। किञ्च द्रव्यार्जनरूपा-द्गोपक्रमेण सर्वक्रतूनामुपक्रमाद्यो दर्शपूर्णमासयाजी सोऽमावास्यां वा पौर्णमासीं वाऽतिपातयेदित्यनारभ्याक्रपातिपातनदर्शनात्तुपपत्तिः। अतो द्रव्यार्जनं तावत्पुरुषार्थम्। नियमोऽप्यदृष्टार्थत्वेऽपि पुरुषार्थ-एव। एवञ्च चामवत्याद्योऽपि पुरुषार्था एव। क्रत्वर्थत्वे प्रमाणा-

क्षणभावनायाः प्रतिषेध एवायं पुरुषार्थः कलञ्जभक्षणादिप्रति-षेधवत् ।

अतश्च निषेधेनेक्षणस्यानिष्टसाधनत्वाक्षेपेऽपि फलान्तराकाङ्क्षा-भावान्नैतादृशा ह्येनसा युक्तो भवतीत्याद्यर्थवादिकाघक्षयफलकल्प-नानुपपत्तेर्नार्थवादिकफलप्रयुक्तत्वम् । अर्थवादस्त्वीक्षणजन्यप्रत्यवाया-भावबोधनद्वारा ईक्षणनिन्देति प्राप्ते ।

तत्र व्रतमिति व्रतशब्देनोपक्रमस्थेनानुष्ठेयक्रियाप्रतिपादनात् तदनुरोधेनोपसंहारस्थो निषेधोऽप्यनुष्ठेयामेव क्रियां विधत्ते । अत एव नञ्-ईक्षतिभ्यामीक्षणाभावसंकल्परूपा क्रियैव लक्षणया विधी-यते । मानससंकल्पस्य प्रयत्नविशेषत्वात् । ईक्षतिरेव वा लक्षको नञ्पदं तात्पर्यग्राहकम् । न चैवमुद्यदादित्यस्य पदार्थैकदेशे ईक्षणे अन्वयानुपपत्तिः । कारकाणां प्रथमतो भावनान्वयस्यैव स्वीकारेणै-कदेशेऽन्वयाप्रसक्तेः । इष्यते हि सोमादीनां प्रथमत एव धात्वर्थे-ऽन्वयस्तन्मते एवेदं दूषणं न त्वस्मन्मते । अतोऽनीप्सितकर्मत्वेन सङ्कल्पक्रियाकरणत्वेनैव वा भावनान्वयः । पार्ष्णिकान्वये तु समस्त-पदघटितवाक्यस्यैव कल्पनान्न कोऽपि दोषः ।

अतश्चादित्येक्षणाभावसंकल्पभावनैवोदये निमित्ते विधीयते । उद्यदादित्यशतृप्रत्ययेन निमित्तत्वाभिधानात् । तत्फलञ्चार्थवादि-काघक्षयः । अतः सिद्धं भावनाभिन्ने नञः सम्बन्धात् पर्युदासः, स च फलप्रयुक्त इति ।

नन्वेवमपि नञोऽभेदवाचित्वस्य तदन्य-तद्विरुद्ध-तदभावेषु नञ इति प्रसिद्धेरन्यपदेनैव सम्बन्धाङ्गीकारादुद्यन्तमादित्येक्षण-

प्रतिषिद्धत्वाभावान्मुख्यवृत्तित्वमेव। सोऽपि च यानि कर्माणि जीवि-
केत्यादिवचनात्प्रकरणाद्यभावाच्च पुरुषार्थः।

न्यायागतेन द्रव्येण कुर्यात् कर्माणि वै द्विजः।
अन्यायोपगतं द्रव्यं गृहीत्वा यो ह्यपण्डितः॥
धर्माकाङ्क्षी तु यजते न धर्मफलमश्नुते।

इत्यादिवचनैश्च मुख्यगौणसाधारणद्रव्योपायानामधिकारितारतम्येन क्रत्वर्थस्यापि बोधनात् संयोगपृथक्त्वन्यायेनोभयार्थत्वेऽपि न दोषः। यदि तु शिलोञ्छादेः क्वचित्फलश्रवणं भवेत्, तदा जीवनाश्रितयावज्जीवशिलोञ्छनियमस्यैव फलजनकत्वं बोध्यं, न तु प्रतिग्रहस्येति ध्येयोऽयं विचारः। छलाचिन्तालेन वा बोध्यः ॥४॥१॥२॥

तदुत्सर्गे ॥ तस्य व्रतमित्युपक्रम्य,

नेक्षेतोद्यन्तमादित्यमस्तं यन्तं कदाचन।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्॥

इत्यादि प्रजापतिव्रतं श्रुतम्। तत्रापि भाष्यकारादिभिः प्रतिषेधत्वे पर्युदासत्वे वोभयथापि फलकल्पनादिभिया क्रत्वर्थत्वमाशङ्क्य, अनारभ्याधीतत्वात्क्रत्वाद्यभावेन च क्रत्वर्थत्वानुपपत्तेः पर्युदासत्वमङ्गीकृत्य पुरुषार्थत्वं सिद्धान्तितम्। तदपि कलञ्जभक्षणप्रतिषेधशिरस्कधारणन्यायेन क्रत्वर्थत्वशङ्कानुपपत्तेरुपेक्षितम्।

विचारस्त्वयमेवात्र कर्त्तव्यः। किमयं प्रतिषेधः पर्युदासो वेति। सिद्धान्ते चार्थवादिकफलमयुक्तत्वात् प्रतिषेधपक्षे च तदभावात् अङ्गत्वानुपपत्तिः। तत्र मन्त्रः प्रधानाम्नायत्वानुपपत्तेर्धात्वर्थाभावाच्च सम्पाभियाऽनुपपत्तेः पर्युदासत्वायोगाद्रागप्राप्तेक्षणादित्ये-

लक्षकत्वाभावाद्यज्ञशब्देऽपि तदनापत्तेर्नैतस्य स्फ्यादिविधायकत्वम् । तदेतदर्थवादत्वस्य तृतीयसिद्धत्वेन पूर्वपक्षोत्थानाभावेऽपि शिष्य-हितार्थमुक्तमिति द्रष्टव्यम् ।

यत्तु भाष्यादिभिः लिङ्गमुक्तं स्फ्याद्याकारस्य प्रवदानेन विकल्पत्वात् पूर्वपक्षे परिधानीये कर्मणि आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति यज्ञपात्रकरणकदाहानुपपत्तिरिति । तत्पूर्वपक्षे उद्धनना्द्यर्थपात्राणां पृथक्सत्त्वात्तेषाञ्च यज्ञसाधनत्वाभावेऽप्यायुधशब्दा-भावेन प्रयोजकतयैव यज्ञपात्रत्वोपपत्त्या दाहोपपत्तेरुपेक्षणीयम् ॥ ४॥२॥४॥

तथैकत्वं ॥ पशुना यजेतेत्यादौ यजोपादेयपश्वादिगता संख्या विभक्त्युपात्ता सा किं विवक्षिता न वेति चिन्तायाम् । सत्त्वप्रधा-नानि नामानीति स्मृत्या प्रातिपदिकार्थस्य पश्वादेर्विभक्त्युपात्त-संख्याविशेष्यत्वरूपसत्त्वसमाख्यया विभक्त्युपात्तसंख्यायाः प्रातिपदिकार्थं प्रति पदश्रुत्या योग्यतारूपलिङ्गेन च विशेषणत्वावगमाद्वाक्यीयक्रिया-न्वयानुपपत्तेस्तदभावेऽपि क्रियाया अवैगुण्यान्न विवक्षिता संख्या ।

न चैकत्वादेः पश्वन्वयेऽपि तद्विशिष्टस्यैव पशोः कारकान्वयद्वारा क्रियासम्बन्धाल्लोहितोष्णीषादिवत्पशुविशेषणस्यापि विवक्षोपपत्तिः । संख्याकारकत्वयोर्विभक्त्या युगपदुपादानेन संख्यायाः प्रथमतः पश्व-न्वयमभिधाय पश्चाद्विशिष्टस्य पशोः कारकान्वयाभिधाने विरम्य व्यापारतापत्तेः । न च तथापि संख्यायाः पदश्रुत्या पश्वन्वयाङ्गी-कारायुगपदन्वयद्वयस्य शाब्दबोधस्य च विरुद्धत्वात् प्रथमतः शुद्धस्य पशोः कारकान्वयमङ्गीकृत्य पश्चात्संख्यायाः पश्वन्वयाङ्गीकारे तथापि

स्यैवाधिकारपक्षकत्वेन विधानोपपत्तेर्न संकल्पलक्षणा । न च सुबन्तसमन्वयेन नञः समासापत्तिः । नानुयाजेष्वितिवदुपपत्तेः । न च नञः स्यादित्यपदेन वा सम्बन्धः उभयपदेन चेत्यत्र विनिगमकाभावः । विधेयसाकाङ्क्षत्वस्यैव विनिगमकस्य सत्त्वादिति चेत् ।

तथात्वेऽपि नोद्यन्तमिति सुबन्तपदस्य निपातान्वयव्युत्पत्त्यभावेन उभयविधेऽपि पदद्वयलक्षणाया आवश्यकत्वात् । तथात्वे स्वभावेनैव नादृष्टादित्येक्षणस्य सर्वदा जायमानत्वेनाप्राप्तत्वोपपत्तेर्विधिवैफल्यात् । स्वरसतः प्रतीयमाननिषेधस्य संकल्पलक्षणयाऽप्यपरित्यागेन भवदुक्तपर्युदासानुपपत्तेश्च । अस्मिन्नुदाहरणे तथाङ्गीकारेऽपि न वारित्रमित्यत्रैकादश्यां न भुञ्जीतेत्यादौ च संकल्पलक्षणाया आवश्यकत्वाच्च । प्रयोजनं स्पष्टम् । सूत्राण्यप्यस्मिन्नेव विचारे सुधीभिर्योज्यानि ॥ ४ ॥ १ ॥ २ ॥

द्रव्याणि ॥ स्फ्येत्याद्युपक्रम्य श्रुतस्य यज्ञायुधवाक्यस्य तृतीये उदाहृतस्यैव प्राधान्यभूतायुधोद्देशेनोत्पत्तिवाक्याविहितद्रव्यकोपांशुयाजोद्देशेनैव वा स्फ्यादिद्रव्यविधायकत्वम् । इतरथा समस्तवाक्यवैयर्थ्यापत्तेः । यज्ञशब्दस्य तत्साधनोद्धननादिलक्षकत्वापत्तेश्च । तस्मादुद्धननादिवाक्यैः स्फ्यादीनामुद्धननाद्यर्थत्वेऽप्याम्नानेन सह विकल्पेनोपांशुयाजार्थत्वमपीति प्राप्ते ।

प्रकरणविध्येकवाक्यत्वादस्य तदर्थवादत्वेनाप्युपपत्तेः अनन्यथोपभूतेन पर्णेन वेति वाक्येन विहितस्याज्यस्य पात्रिकत्वापादकत्वानुपपत्तेरुद्धननादिक्रियाभेदेऽपि च दृष्टत्वस्य प्रकरणरूपैकक्रियासम्बन्धादेवोपपत्तेरायुधशब्दस्य प्रयोजकत्वलक्षणयाऽप्युपपत्तौ साधन-

ष्यादीनामपि बाधप्रसङ्गात् तच्चिन्त्या दानाश्रितस्यैव गोरुद्देशेन विधानार्थमेकवचनोपपत्तेः । अतो विवक्षितैव संख्या । अत एव कर्णयामा अवलिप्ता रौद्रा नभोरूपा पार्जन्यास्तेषामैन्द्राग्नो दशम इति दशमत्वदर्शनमुपपन्नम् ॥४॥१॥५॥

तथा च ॥ भवतु संख्या शब्दार्थत्वाद्विवक्षिता । लिङ्गन्तु उपादेयगतमप्यशब्दार्थत्वादविवक्षितम् । न हि तत्प्रातिपदिकार्थं । स्त्र्यादिपदात् तदप्रतीतेः । तथा लिङ्गत्रयसाधारण्येन लिङ्गसामान्यव्यभिचाराच्च । नापि प्रत्ययार्थं । व्यभिचारादेव । नापि टाबादिसुब्विकाराणां तत्सत्त्वेन सुखीत्यादीनाम् । विलिङ्गे दण्डादौ विपरीतलिङ्गे कुटुम्बिकादौ च प्रयोगेण व्यभिचारादेव । अत शब्दानुशासनमात्रमिदं, न लिङ्गं नाम कस्यचिच्छब्दस्यार्थं इत्यविवक्षितमिति प्राप्ते ।

सिद्ध तिष्ठतीत्यादावनन्यथासिद्धलिङ्गप्रतीतेर्लिङ्गमपि क्वचिट्टाबादिसुब्विकाराणां क्वचित्तृचतल्लादिप्रातिपदिकविकाराणां वाच्यम् । अत सुबर्थत्वेन संख्यावत् क्वचिच्च प्रातिपदिकार्थत्वेनैव विवक्षितम् । यत्र तु साधकत्व साधुत्वार्थं तच्छब्दप्रयोग ॥४।१॥६॥

आश्रयिषु ॥ यजति जुहोतीति वा यत्र श्रुत, तत्र यजेस्तावद्देवतोद्देशविशिष्टद्रव्यत्यागवाचित्वात्त्यागांशस्यादृष्टविधया आरादुपकारकत्वम् । उद्देश्यांशस्य तद्दृष्टविधया तदुपकारकत्वमेव । अतएवोद्देशाङ्गभूतदेवतायाख्यानाङ्गभूतद्रव्यापेक्षया दुर्बलत्वम् । प्रक्षेपस्तु तत्र त्यागाङ्गद्रव्यसंस्कार एव । जुहोतिस्थले तदङ्गमेवादृष्टविधये

विरस्यव्यापारतापत्तिरिति वाच्यम् । तथापि भावनान्वितकारकविशेषणविशेषणस्यासमस्तपदस्थत्वे भावनान्वयव्युत्पत्त्यभावेनाविवक्षोपपत्तेः । इतरथाऽऽरुण्यस्याप्यानुमानिकमत्वर्थलक्षणया एकहायनीं प्रत्येव विशेषणत्वोपपत्तौ प्रथमतः क्रियान्वयमभ्युपगम्य पार्ष्ठिकैकहायनीसम्बन्धसिद्धान्तभङ्गापत्तेः ।

अत्र च लौहित्यादेर्भावनान्वितकारकविशेषणविशेषणत्वेऽपि समस्तपदत्वान्न क्षतिः । वारवन्तीयादेस्तु ज्ञात्वा शब्दोक्तभावनायामेवान्वय इति न कापि क्षतिः । अत एव सोमारुण्यादीनामपि न प्राथमिको धात्वर्थान्वयोऽपि तु भावनान्वय एवेत्युक्तं तत्र तत्र ।

किञ्च न प्रत्ययार्थस्यैकत्वस्य प्रकृत्यर्थं पशुं प्रति प्रकारता । प्रत्ययार्थप्राधान्यभङ्गापत्तेः । अपि तु पशोरेव करणत्वप्रतीत्यैकत्व प्रत्यपि प्रकारता । अतश्चैकत्वस्य करणत्ववद्विधेयभावनायामप्रकारत्वादविवक्षेति प्राप्ते ।

पशोः करणस्य भावनान्वये न लेशतोऽपि, प्रमाणाभावात् । अतश्च पशोस्तद्द्वारा भावनान्वयवत् सङ्ख्याया अपि बलीयस्या समानाभिधानश्रुत्या आधेयत्वेन सामानाधिकरण्येन वा प्रथमतः कारकान्वयस्यैवाङ्गीकारात्सङ्ख्यायाः पदश्रुत्यादिना आधारत्वसम्बन्धेन पश्वन्वयोपपत्तेर्निरूढव्युत्पत्त्यैव सङ्ख्याया भावनासम्बन्धिताद्विवक्षितत्वम् ।

न चैवं यदि सोमक्रयणहेतुरेकाङ्गा दक्षिणा दद्यादित्यादावेकपदत्वैयर्थ्यम् । गामित्यनेनैवैकत्वविधानोपपत्तेरिति वाच्यम् । एकत्वविधिवल्लिङ्गविधेरपि प्राप्तदक्षिणाऽनुवादेन धेनुर्दक्षिणेति यत् विशिष्टकारकान्तरविधानेनापत्तौ दादशगतमत्यावसामान्यविहिता-

स्वाहाकारयागः। प्रकृतौ तु द्रव्यनाशे यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वाऽऽज्येनैता देवताः परिसंख्याय यजेतेति वचनादाज्येन समापनम्। सन्निपत्योपकारकत्वे तु संस्कार्याभावादिडादिवल्लोप एवेति विशेषः ॥४॥१॥७॥

सूत्रे॥ एव तावत्क्रत्वर्थपुरुषार्थविचारद्वारेण प्रयोजकत्व चिन्तितम्। इदानीन्तु साक्षादेव तच्चिन्त्यते। तत्सिद्ध्यर्थस्तु काचित्कोऽङ्गाङ्गिभावविचार इति सूत्रग्रहणार्थं प्रतिज्ञामात्रमिदम् ॥४॥१॥८॥

एकनिष्पत्तेः॥ चातुर्मास्येषु प्रथमे पर्वणि तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति श्रुतम्। तत्र दध्यानयनस्यामिक्षा वाजिनञ्चेत्युभयं प्रयोजकमुतामिक्षैवेति चिन्तायाम्।

दध्यानयनवाक्ये तावत्तप्तपयोऽधिकरणकं दध्यानयनमात्रं श्रुतं न तु पयसो दध्नो वा प्राधान्यम्। सप्तम्या प्राधान्यानभिधानात्। तथात्वे उद्देश्यविशेषणत्वेन तापस्याविवक्षापत्तेश्च। न चानयतेर्द्विकर्मकत्वात् पयसो व्याप्यमानत्वेन दध्यपेक्षयाऽपि प्राधान्यावगतिः। द्विकर्मकधातुस्थले हि अधिकरणत्वादिकारकान्तराविवक्षायां कर्मकारकसम्बन्धमात्रविवक्षायाञ्च सम्बन्धसामान्ये षष्ठीप्राप्तौ अकथितञ्चेति सूत्रेण कर्मसंज्ञाकरणाद्द्वितीयाविधानावगतावपि प्राधान्ये प्रमाणाभावात्। प्रकृते सप्तमीश्रवणेनाधिकरणत्वविवक्षावगतेर्द्वितीयकर्मप्रसक्त्यभावाच्च।

दध्नस्तूपयोगाभावादेव सुतरां न प्राधान्यावगतिः। न ह्यामिक्षा नाम दधिपयोरूपा। रसघनीभावादिधर्मभेदेनार्थान्तरत्वात्। तस्यै शृतं तस्यै दधि तस्यै आमिक्षा तस्यै वाजिनमिति भेदेन

तरौ । समप्रधानौ वा । अत एवोभयत्र मन्त्रस्तत्तदङ्गभूतदेवतादिप्रकाशनार्थ एवेति स्थितिः ।

यत्र तु स्वाहाकारस्विष्टकृत्सूक्तवाकपशुपुरोडाशपिष्टलेपादिहोमवाजिनेज्यादौ परकीयं द्रव्यं देवता वा प्रक्षेपाग्नेनोद्देशेन मन्त्रेण वा संस्क्रियते । यथा स्वाहाकारसूक्तवाकपशुपुरोडाशाद्याग्नेयादिमन्त्रदेवतोद्देशाभ्यां स्विष्टकृति प्रक्षेपाग्नेः तदीयं द्रव्यं, मन्त्रेणैव तदीया देवता । उद्देशाग्नेः स्विष्टकृद्देवताकत्वात् । पिष्टलेपादौ प्रक्षेपेण तदीयं द्रव्यमेव । सर्वत्र प्रमाणं तत्र तत्रोक्तं वक्ष्यते । यस्तु तत्र त्यागांशः सोऽदृष्टार्थ एव । न च तस्य पदार्थैकदेशत्वान्निष्प्रयोजनकत्वेऽपि न क्षतिः । विहितपदार्थान्वयानुपपत्त्या तदवयवानामप्ययादिविहितत्वेन प्रयोजनाकाङ्क्षोपपत्तेः । अत सोऽप्यदृष्टार्थ एव संस्कारमपेक्षाद्यङ्ग तत्संस्कार्यद्रव्याद्यङ्गमेव चेति तत्संस्कार्यद्रव्यदेवतादावेव प्रोक्षणादिवददृष्टं जनयतीति सन्निपत्योपकारकत्वमयुक्तमेवेति भाति ।

विशिष्टतया ग्रहीतस्य त्यागांशस्य प्रक्षेपाद्यङ्गत्वे प्रमाणाभावाद्देवतादेश्च दृष्टमात्रापेक्षत्वेनादृष्टोपकारानपेक्षत्वात् प्रकरणात्त्यागांशस्यारादुपकारकत्वमेव प्रयाजादिवत् । तत्र त्रेताग्निविशेषः । यत्परप्रयुक्तद्रव्यदेवतोपजीवि, तत्र परप्रयुक्त्यभावे स्वातन्त्र्येण तद्द्रव्यदेवताऽऽक्षेपकम् ।

अत एवैककपालस्य सर्वहोमे स्विष्टकृत्त्यागस्य लोप एव । स्वोपकारकद्रव्यस्य नाशादिनिमित्ताभावेनार्जनापि समापनायोगात् । चयनादावयागे वाचनिकप्रयाजादिविनियोगेऽपि च न

आमिक्षायागाङ्गत्वानापत्तेस्तद्विकारेऽतिदेशो न सिद्ध्येत्। अष्टौ हवींषीत्यस्य च विनिगमनाविरहेणावयुत्यानुवादत्वस्य लभ्यते* आपत्तेः। यत्तु भाष्यकारादिभिः पूर्वपक्षे वाजिनलोपे आमिक्षानाश इव पुनर्दध्यानयनेन वाजिनोत्पत्तिः सिद्धान्ते न्यायेन समापनमिति प्रयोजनमुक्तम्। तत् षष्ठे हविर्नाशादिनिमित्ते न्यायेन समापनस्य विधिवत्त्वेन वक्ष्यमाणत्वेन पूर्वपक्षेऽपि तुल्यत्वादुपेक्षितम्। ४। १॥९॥

षट्कर्म॥ सोमक्रयार्थमेकहायनीं विधाय क्रयदेशे तन्नयने क्रियमाणे, तस्याः षट् पदान्यनुनिष्क्रामति सप्तमं पदं स्फ्येन लिखेत्। हिरण्यमन्तर्धाय पदे जुहोति। ततः सप्तमं पदमध्वर्यु-रञ्जलिना गृह्णाति। यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्ष-मुपाञ्ज्यादिति श्रुतम्†।

तत्राक्षाभ्यञ्जनमपि क्रयवदेकहायनीनयनस्य प्रयोजकम्। जन्यत्वदृष्टत्वस्याप्युभयत्र समत्वात्। अक्षाभ्यञ्जने हि तच्छब्देनैव पदपांसवो निर्दिष्टा इति ते तदङ्गम्। पदस्य चैकहायनीनिरू-पितत्वम्, तस्याः सप्तमं पदमित्युपक्रमाच्छाखान्तरवचनाच्चावगत-मिति सोऽपि तदङ्गम्।

अतश्च नीयमानसंस्कारार्थस्य नयनस्याप्युभयार्थत्वादुभयप्रयोज्य-त्वम्। न च प्रकरणादेवैकहायनीलाभात् तच्छब्दस्यानुवादकत्वम्। प्रकरणप्राप्तेः पूर्वप्रवृत्त्यङ्गीकारेण प्रयोजकत्वफलकाङ्गत्वविध्युपपत्तेः। न च तथापि क्रयप्रयुक्तत्वविशिष्टैकहायन्या एव तच्छब्देन परामर्शात्

* लभ्येत,—इति भवितुमुचितम्।

† तेनाक्षमुपाञ्ज्यादिति,—। इति भाष्यधृतः पाठः।

व्यपदेशाच्च। गोपयसोर्यदिति विकारवाचि-मयट्प्रत्ययान्तपयस्याशब्द-पर्यायत्वाच्च। जुषतां युज्यं पय इति तु धान्यशब्दवद्विकारपरम्। अतश्च दध्यानयनस्य वाक्ये उद्देश्याभावात् सामर्थ्येन दधिसंसृष्टपयो-ऽन्यामिक्षार्थत्वाङ्गीकारे च अन्यत्वाविशेषेण वाजिनार्थत्वस्याप्युपपत्तेः उभयं प्रयोजकमिति प्राप्ते।

सा वैश्वदेवीति सर्वनाम्नः प्रकृतपरामर्शित्वात् पूर्ववाक्ये यत्सामा-न्येन निर्दिष्टं तदामिक्षेत्यवधार्यते, न त्वर्थान्तरम्। एतच्च मधु-राम्लरूपयोस्तयोरेवावधार्यत इति न ततोऽप्यर्थान्तरम्। घनीभावस्तु पीयूषादिवद्भेदेऽप्युपपन्न एव। पृथङ्निर्देशोऽप्यवस्थान्तरात्। विकारार्थ-मयट्प्रत्ययश्रुतिरपि तच्छब्दाद्यनुरोधेनावस्थापरैव। तस्मा-दामिक्षाऽर्थान्तरमपि तु दधि पयो वा। तथापि विशेषनिर्णय-स्त्वष्टमेऽतिदेशविचारे निरूपयिष्यते।

तत्सिद्धं स्ववाक्य एवामिक्षारूपोद्देश्यसम्बन्धित्वावगतेर्दध्यानयनं तत्प्रयुक्तमेव। न तु वाजिनप्रयुक्तम्। तस्य तच्छब्दाद्यभावेनार्था-न्तरत्वप्रतीतेः। तत्सम्बन्धेऽपि शेषित्वानवगमात्। अतश्च तस्यानु-निष्पन्नत्वात् तद्यागस्य खिलकादादिवदनुनिष्पन्नप्रतिपत्तित्वावगमेन परप्रयुक्तदध्यानयनोपजीवित्वावगतेर्न तत्प्रयोजकत्वं वाजिनस्य कल्प-नीयं गौरवात्।

प्रयोजनं, पूर्वपक्षे वाजिनयागस्यार्थकर्मत्वेन समप्राधान्यापत्तेरा-मिक्षायागविकारेऽनतिदेशः, सिद्धान्ते त्वनुनिष्पन्नप्रतिपत्तित्वेना-मिक्षायागाङ्गत्वात् तद्विकारेऽतिदेशः।

सोमेश्वरस्य तु सिद्धान्तेऽपि वाजिनयागे अर्थकर्मत्वं वदन्-

द्वैधमित्यत्र निराकृतत्वात् पुरोडाशार्थकपालनियम इत्याशङ्क्येत, ततोऽस्तु नाम पुरोडाशसम्बन्धविशिष्टस्यैव विधानम्। तत्फलस्य तद्विशिष्टकपालव्यावृत्तिरेव न त्वप्रयोजकत्वमपि। सम्बन्धरूपाङ्गाभावेऽपि अग्निहोत्रहवणीन्यायेन प्रधानभूतकपालबाधानुपपत्तेश्चर्वादौ तन्नियमाभावरूपस्याप्रयोजकत्वफलस्यासम्भवादिति प्राप्ते।

पुरोडाशसम्बन्धस्य प्रमाणान्तरेणाप्यालोचने तत्प्रयुक्तत्वस्याप्यवगतेर्न पुनरुपोपवापविधिरपि तत्प्रयुक्ते। अतो लाघवादवघातकालीनस्तूपवापः परप्रयुक्तकपालोपजीवितया न कपालोपादानापादनयोः प्रयोजकः। नियमकालीनस्तु कपालधारणस्य प्रयोजको भवत्येव। उपादानस्य तु सोऽप्यप्रयोजकः। प्रयोजनं, चर्वादौ न कपालनियमः। अग्निहोत्रहवण्यास्तु वक्ष्यते ॥४।१।११॥

पश्वालम्भात्॥ पशौ, गलमस्याविध्यति लोहितं निरस्यतीति श्रुतं निरसनं, पश्वालम्भस्य गलस्याहितस्यैव वा प्रयोजकम्। न चैव तस्य प्रतिपत्तिः। हृदयादीनामेव हविष्ट्वेन तस्यानुपयुक्तत्वादपूर्वसाधनत्वाभावात्। अतश्चार्थकर्मैतद् गलरोहितस्य तावत्प्रयोजकम्। पश्वालम्भोऽपि च विशसनवाक्ये श्रुतं प्रयोजनाकाङ्क्षं सत् हृदयादेरिव लोहितादेरपि पशुप्रकृतिकत्वमाक्षिपति। न हि हृदयादेस्तदुत्पत्तिवाक्याधीनम्। तस्य तदभावे हविष्ट्वेनैव तद्विधायकत्वात्। अतस्तत्त्वपरं पशुपदमपि देवतासम्बन्धसिद्ध्यर्थं वस्तुतोऽनुवाद एव।

अस्तु वोत्पत्तिवाक्यावगतं पशोर्यागसाधनत्वम् विशसनवाक्यानुरोधात् हवीरूपहृदयादिप्रकृतित्वरूपमेवेति विशसनवाक्यस्यापि

पुरोडाशकपालन्यायापत्तिः । तथात्वे फलाभावेन तच्छब्दवैयर्थ्यापत्तेस्तस्यैकहायनीस्वरूपमात्रपरत्वाङ्गीकारादिति प्राप्ते ।

विधिगौरव-प्रयोजकशक्तिकल्पनागौरवाभ्यां तच्छब्दस्य पूर्वपरामर्शित्वस्वभावेनोपजीव्यप्रकरणप्राप्तानुवादकत्वावगतेरेकहायन्याः क्रयमात्राङ्गत्वावधारणात् तदङ्गभूततन्नयनस्यापि तन्मात्रार्थत्वप्रतीतेरत्राभ्यञ्जनं पदहोमादिकं वा क्रयप्रयुक्तैकहायनीनयनलाभेन चरितार्थं नैकहायन्यास्तन्नयनस्य वा प्रयोजकम् ।

अतश्चैकहायन्यां क्रयार्थं नीयमानायां दैवाद्धानेऽपि सप्तमपदपातेऽभ्यञ्जनार्थं पुनर्न तदानयनम् । यथाग्निप्रयोगादौ क्रयलोपेऽपि वा नैकहायनीप्रयुक्तिः । अत्राभ्यञ्जनार्थं तु ये केचित्पांसवो ग्राह्या एव । गुणलोपे मुख्यलोपानुपपत्तेः । होमस्तु आरादुपकारकत्वाद्भवत्येव । यथाग्निप्रयोगे आहवनीये निरधिकरणक एव वेत्यन्यदेतत् ॥४।१।१०॥

कर्माभिधान ॥ दर्शपूर्णमासयोः पुरोडाशकपालेन तुषानुपवपतीति श्रुतम् । तत्र कपालस्य, कपालेषु पुरोडाशं श्रपयतीति श्रपणे विनियुक्तस्यापि तृतीयया तुषोपवापार्थत्वेनाप्यार्थिकविशेषणविधिना विनियोगात् उभयप्रयुक्तत्वम् । न च पुरोडाशार्थकपालत्वेनैव तुषोपवापे विनियोगाच्च तुषोपवापाप्रयुक्तत्वम् । प्रकृतिविकारभावाभावेन तादर्थ्यसमासायोगात् । षष्ठीसमासे च सम्बन्धमात्रावगतेस्तस्य च कपालत्वेनैव विनियोगेऽपि पुरोडाशार्थपात्रस्यैव प्रसङ्गेन ग्रहणोपपत्तेरनुवादकत्वात् ।

यदि तु प्रसङ्गलक्षणाभावादुपादेयस्यापि प्रकृतपदस्य च तानि

छायां यावत्प्रकृतप्रतिसम्बन्धित्वाभावस्तावन्नान्याक्षेपकत्वकम्। गौरवात्। अस्ति च प्रकृते प्रतिपत्त्यपेक्षः शेषः। अतस्तदुपजीवकत्वमेव। अत एव शेषात्स्विष्टकृत इत्यपि लिङ्गमुपपद्यते। एवञ्चोत्तरार्द्धस्य त्यागं प्रति गुणत्वेन विनियुक्तस्यापि प्रधानगतप्रतिपत्त्यपेक्षानुरोधेन वाक्यान्तरकल्पनया प्रक्षेपांशं प्रति प्राधान्येऽपि न क्षतिः। श्रुतयागविधिनाऽपि धारणप्रयोजकत्वकल्पनाभिया तदनुपपत्तेश्च।

अत एवानुमितप्रतिपत्तेरेव धारणप्रयोजकत्वादिकल्पना। शेषो नानुमिते प्रमाविति न्यायात्। अनुमानस्य फलमुखत्वाच्च। अत एव सर्वाणि हवींषि समवद्यतीति लिङ्गमपि प्राधान्यादुपपन्नम्। अत एव स्विष्टकृत्प्रक्षेपोऽपि प्रधानाङ्गभूतस्त्यागयुक्त एव सन् स्विष्टकृत्यागस्याप्यङ्गं तत्प्रयुक्तश्च। प्रतिपाद्यत्वाविशेषात्। अतः न नाशयविनो नोत्तरार्द्धस्य वा प्रयोजकः। आज्यप्रक्षेपस्य तु प्रयोजको भवत्येवेति सिद्धम्।४॥१॥१३॥

अभिघारणे॥ दर्शपूर्णमासयोः, प्रयाजशेषेण हवींष्यभिघारयतीति श्रुतम्।

तत्र प्रयाजशेषोऽभिघारणस्य तृतीयाद्वितीयाभ्यामुपयुक्तसंस्कारापेक्षया चोपयोक्ष्यमाणसंस्कारस्याभ्यर्हितत्वाद्धवि संस्कारकत्वमेव। न तु प्रयाजशेषप्रतिपत्त्यर्थत्वं, लक्षणाप्रसङ्गात्। न च हविःसंस्कारकत्वे अदृष्टकल्पनापत्तेरपेक्षितदृष्टरूपप्रतिपत्त्यर्थत्वलाभाय लक्षणाद्यङ्गीकरणमपि न दोषायेति मिश्रमतं युक्तम्। निषादस्थपत्यधिकरणन्यायेनादृष्टकल्पनादेः फलमुखत्वात्। किञ्च द्वितीयायाः सप्तम्यर्थत्वकल्पने हविषामभिघारणं प्रत्युपादेयत्वापत्तेरुद्दतयजत्वस्य

तत्परत्वमेव । तथापि निरसनस्यार्थकर्मत्वाच्छ्रापणीवल्लौकिकशक-लोहितप्रयोजकत्वे न किञ्चिद्बाधकमिति भाष्ये ।

द्वितीयया निरसनस्य प्रकृतित्वावगमाच्च लोहितादिप्रयोजकत्व-मपि । उपयुक्तत्वाभावेऽपि वास्तुनिष्पन्नत्वेन प्रतिपत्त्यपेक्षत्वात् परम्परयाऽपूर्वसम्बन्धस्य सत्त्वेन सामर्थ्याभावात् प्रतिपत्तिकर्मत्वोप-पत्तेः । प्रयोजनं, पशुलोहिताद्यभावप्रयोगे तल्लोपः । प्रायश्चित्तं परं तल्लोपनिमित्तं भवत्येव । सोमेश्वरशिखिनस्त्वभागत्वपक्षे तु त्यागांशस्यान्येन येन केनचिद्वा द्रव्येण सम्पादनं भवत्येवेति द्रष्टव्यम् ॥४।१।१२॥

एकदेश ॥ यथोत्तरार्द्धात् स्विष्टकृते समवद्यतीत्यादौ न द्वितीयादिनिर्देशस्तत्र प्रतिपत्तित्वे प्रमाणाभावादपादानत्वेन श्रुत-स्योत्तरार्द्धस्य यागं प्रति गुणत्वादुत्तरार्द्धस्य तावद्यागः प्रयोजको-भवत्येव । तस्य च समवायिकत्वेन स्वप्रतिसम्बन्धियत्किञ्चिद्द्रव्य-स्याक्षेपकत्वं सुलभमेव । न च प्रकृतपुरोडाशरूपावयविसत्त्वे न तदन्याक्षेपकत्वम् । प्रकृतस्य स्वकार्ये सर्वस्य विनियुक्तत्वेनान्यत्र विनियोगासम्भवात् । न च तस्य प्रतिपत्त्यपेक्षत्वात्तदाक्षेपांशेनास्य प्रतिपत्तिकर्मत्वम् । अक्षेपांशस्याग्नेयादिप्रक्षेपवत्स्वयागाङ्गत्वेनैव प्रयो-जनानपेक्षत्वात् । उत्तरार्द्धस्यांशभेदेनापि गुणत्वप्रधानत्वयोरङ्गी-कारे वैरूप्यप्रसङ्गाच्च । प्रधानमात्रत्वस्वीकारेऽपि लक्षणायास्तावद-निवारणाच्च । अतः स्विष्टकृद्यागोऽर्थकर्मैव प्रयाजादिवत्तच्चोत्तरार्द्ध-तद्वयविनोः प्रयोजक इति भाष्ये ।

यद्यपि तावदर्थकर्मैव स्यात्तथापि समवायिकत्वात्प्रतिसम्बन्ध्यपे-

विवक्षापत्तौ विध्येव करणापत्तिः। तथा च यद्येकत्वाधिकरणे तद्विवक्षाऽभिधानं वार्त्तिककारीयं नोपपद्येत।

यत्तु अभिघारणे मत्वाधारत्वेनान्वितानामपि हविषामाधारता-नियमं प्रत्युद्देश्यत्वाद्विशेषणाविवक्षेति। तन्न। श्रुताभिघारणं प्रत्यु-पादेयत्वेन विवक्षितत्वे आर्थिकाधारतानियमं प्रत्यपि न्यायाणामेवो-द्देश्यतापत्तेः। किञ्च यदर्थो नियमस्तदर्थो नियम इति सर्वत्र श्रुतेराधारतानियमोऽपि अभिघारणनियमवत्तद्वारा प्रधानेष्वेवोप-युज्येत। इतरथा प्रयाजावघातोपवापादिवाक्येष्वपि करणता-नियमस्य प्रकृतिप्रतिपत्त्यर्थत्वकपालसंस्कारकत्वापत्तेरेकत्वादिविवक्षा-पत्तिः। एतेन यदप्यूह्येऽपि लक्षणामग्नीध्राद्याधारतानियमोद्दे-श्यतानामैवेव हविःसंख्याविवक्षामूरुवतो भट्टसोमेश्वरस्यापि मतं प्रत्युक्तम्।

यत्तु केचित् तृतीयाया एव द्वितीयार्थे लक्षणामग्नीध्रा-द्याभिघारकत्वोभयार्थत्व विजातीयानेकोद्देश्यकत्वाच्च न वाक्यभेद-इत्याहुः। तदपि न। निपातस्यप्यधिकरणविरोधस्य तादव-स्थ्यात्। श्रुतोद्देश्यत्वे लाक्षणिकत्वस्यान्याय्यत्वाच्च। न्याय्यत्वेऽपि वा श्रुतद्वयीरुपोद्देश्यसंस्कारस्यैव धारणप्रयोजकत्वापत्तेश्च।

किञ्च वैजात्यं न तावन्निमित्तफलादिवत्। उभयोरपि स्फीतत्वात्स्वयोद्देश्यत्वस्य समानत्वात्। अथ वैजात्याभावेऽपि साकाङ्क्षत्वादेव नानेकोद्देश्यता। तथात्वे गोदोहनादेरपि पशु-प्रणयनाद्युभयोद्देश्यतापत्तेः। अतोऽभिघारणस्य केवलहविःसंस्कारा-र्थत्वाश्रिनयमकालीनतुषोपवापपुरोडाशकपालन्यायेन श्रोपोत्पादना-

स्वापविशेषेण सर्वप्रयाजार्थत्वादौपभृतेन विकल्पः। चिरतः प्राचीनं प्रयाजान्यजतीति तु अवयुत्यानुवादमात्रमिति प्राप्ते।

कालविशिष्टसमानयनस्यानूयाजाज्यसंस्कारकत्वे अदृष्टार्थत्वापत्ते-र्विशिष्टविधिगौरवात् चिरित्यस्यावयुत्यानुवादत्वापत्तेश्च प्रयाजार्थ-स्यैवेदं समानयनम्। तच्च जुह्वा जुहोतीति वचनाद्यं प्राप्तमेवेति तदनुवादेन कालमात्रमनेन विधीयते। अतश्च प्रयाजानूयाजेभ्य इत्यत्र प्रयाजाभ्यामनुयाजेभ्य इत्यपि विग्रहे न दोषः। अत एव जौहवमपि परिशेषादाद्यप्रयाजचयार्थमेवेति न विकल्प-प्रसङ्गोऽपि।

एवञ्चातिथ्यायामिडान्तत्वेनानूयाजाभावेऽपि चतुर्गृहीतान्याज्या-नीति बहुवचनं जौहवौपभृतचतुर्गृहीतयोः प्रयाजेषु समुच्चयात् ध्रौवचतुर्गृहीतमादाय सङ्गच्छते। इतरथा तयोर्विकल्पादनूयाजा-भावे ध्रौवमादाय चतुर्गृहीतद्वित्वापत्तेर्बहुवचनानुपपत्तिः। अतश्च प्रयाजद्वयं समानयनस्य तत्सहकृताज्यस्य च प्रयोजकमिति सिद्धम्। सूत्रादौ तु समानयनपदं तत्कालीनप्रयाजद्वयपरम्। आज्यसंस्कारस्य समानयनस्याज्यप्रयोजकत्वसिद्धान्तानुपपत्तेः ॥४॥१॥१५॥

तत्र ॥ एवं तावदौपभृतस्य प्रयाजार्थत्वमङ्गीकृत्य प्रयोज्यत्वं विचारितं, तदेव चाक्षिप्य समाधीयते। चतुर्जुह्वां गृह्णाति अष्टावुपभृति गृह्णाति चतुर्ध्रुवायां गृह्णातीत्यसंयुक्तोत्पन्नान्या-ज्यानि लिङ्गप्रकरणाभ्यां यावत्सर्वप्राकरणिकद्रव्यापेक्षकार्यार्थत्वेन विनियुज्यन्ते, तावच्चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तदष्टावुपभृति गृह्णाति अनूयाजेभ्यस्तत्सर्वस्मै वा एतद्यज्ञाय गृह्यते तत् ध्रुवाया-

श्रौतविधेरेव तत्कल्पकालौचित्यमिति वाच्यम् । पूर्वाधिकरणत्रैवा-नुमानिके तत्कल्पनस्यादोषत्वात् । अनुमानस्य फलमुखत्वाच्च । अनय प्रतिपत्तिवत्त्वेनैवाचित्यस्य धारणस्योपजीवनादिनिगमनाविरहेण सन्निहितसर्वेचविंशु अभिघारणोपपत्तावपि न कालान्तरीयहविर्धारणमिति । अत एव प्राजापत्यवपानां ऋतुपशुभिः सह करणपक्षे सह पशूनालभते वपानामभिहृतत्वायेति लिङ्गं मन्नामसकालीनत्व-पक्षे तदभावं दर्शयति । स्पष्टञ्च यथा वा एतर्हि वपा यर्हि अनभिहृता इति रूक्षत्वाद्यं सद्यत्वमसिद्धपक्षे दर्शयति । न चाभि-घारणान्तरेण रूक्षत्वनिवृत्तिः । तस्य तापमात्रनिवर्त्तकत्वेन रूक्ष-तायाश्चनिवारणात् ॥४॥१॥१९॥

समानयनं ॥ दर्शपूर्णमासयोः प्रयाजार्थे जुह्वां चतुर्गृहीतं विधाय, अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तदिति वचनेन चौपभृत विधाय पुनर्ध्रुवायां चतुर्गृहीतं विहितम् । तत्रैव चाभि-हायेडो बर्हिः प्रतिसमानयते जुह्वामौपभृतमिति श्रुतम् ।

तत्र किं प्रयाजाः समानयनस्य तत्संस्कृताज्यस्य प्रयोजकास्तदर्ध-मेदमुभयं, उत ते अप्रयोजकाः अनूयाजा एव तु तयोः प्रयो-जकास्तदर्थमेदमुभयमिति चिन्तायाम् ।

प्रयाजानूयाजेभ्यस्तदिति दन्द्वान्ते श्रुतस्य मध्यवचनस्य प्रत्येकं सम्बन्धाददेश्यगतत्वाप्राप्तत्वेनानुवादायोगादौपभृतस्य न्यायत एव सर्वप्रयाजार्थत्वप्रतीतेः प्रयाजार्थस्याङ्गस्य सर्वप्रयाजादौ समानीतत्वा-द्दर्हिःप्रयाजकाल उपभृति अनूयाजार्थस्यैव सत्त्वेन तस्यैवेदं समानयनं तत्संस्कारार्थमनूयाजप्रयुक्तं न तु प्रयाजप्रयुक्तम् । अत एव औहव-

माज्यमित्यादिवचनैस्तत्तत्कार्यार्थत्वेन विनियोगादौपभृतस्यानूयाजमात्रार्थत्वम्। यत्तु अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तदिति वचनम्। तत्र प्रयाजत्वानूयाजत्वरूपोद्देश्यतावच्छेदकभेदे वाक्यभेदापत्त्याऽनूयाजानां प्रयाजोपकारत्वानुवादमात्रमिति प्राप्ते।

उभयतोऽप्यनुवादावश्यकत्वे समानयनादिविधिदृष्टार्थत्वाद्यनुरोधेन मुख्यानुवादवचनस्यैवानुवादत्वम्। न च वाक्यभेदः, यद्येकानाधिकरणन्यायादितकौस्तुभोक्तरीत्याऽध्वर्युयजमानौ वाचं यच्छत इतिवद्वाक्यभेदात्। अत औपभृतं प्रयाजानूयाजार्थमिति सिद्धम्॥ ४।१।१५॥

तदष्टसंख्यं॥ अष्टावुपभृतीत्यनेनाष्टसंख्याकं यद्द्रव्यं विधीयते, तत् चतुःसंख्याकग्रहणद्वयमिति चिन्तायाम्। श्रुतत्वादष्टसंख्यैव विवक्षिता न चतुःसंख्याद्वय, लक्षणापत्तेः। न चानारभ्याधीतेन चतुर्गृहीतं जुहोतीत्यनेनाभिहितद्रव्यकसर्वहोमानुवादेन चतुर्गृहीतविधानात्प्रयाजादिष्वपि तत्प्राप्तेः प्रयाजानूयाजार्थचतुर्गृहीतद्वयोद्देशेनोपभृत्यानयनमात्रस्यात्र विधिप्रतीतेरष्टपदं चतुष्कद्वयलक्षणार्थमिति वाच्यम्। अनारभ्यविधिना जुहोतिचोदनाविहितप्रधानभूतहोमोद्देशेन चतुर्गृहीतविधानेऽपि प्रयाजादिषु यजतिचोदनाचोदितेषु प्रक्षेपाख्यहोमस्य तदीयद्रव्यसंस्कारकत्वेन समुद्दिश्य चतुर्गृहीतविधानानुपपत्तेः। अत एवोपांशुयाजादौ चतुर आज्यस्य गृह्णात्याहेत्यादिविध्यन्तरादेव ध्रुवादिनचतुर्गृहीतविधानम्।

अस्तु वैतादृशविषये तत्प्राप्तिस्तथापि वाचनिकेन प्राकरणिकेन वा अष्टत्वेन बाधात् तस्य प्रयाजाद्यतिरिक्तविषयत्वमेवावश्यकम्।

प द्वितीयवाक्येन विनियोगः। अस्तु वा द्वितीयवाक्याद्विशिष्टस्वरु-
कर्मकभावनानुवादेन यूपधर्ममात्रविधिरिति न विशिष्टविधिरपि।

न चैवमपि प्रकृतसम्बन्धस्य सन्निधिकत्वादेवोत्तरार्धादिवद्यूपी-
यत्वोपपत्तेरप्रयोजकत्वोपपत्तिः। स्वतन्त्रकाष्ठाप्रयोजकत्वेऽपि स्वरु-
निष्ठाग्न्यग्रोषणादिधर्मप्रयोजकत्वोपपत्तेः। अतएव धर्मप्रयोजक-
त्वेन काष्ठान्तरप्रयोजकत्वशङ्कायां सन्निवर्त्तकत्वेन, यदन्यस्य* वृक्षस्य
स्वरुं कुर्यादन्योऽस्य लोकमस्यारोहेदुरिति निन्दाऽपि सङ्गच्छते।
धर्मप्रयोजकत्वेऽपि च यूपैकादशिन्यां यथानुपूर्व्यं स्वरुभिः पशून्
समंज्येति यूपभेदेन स्वरुभेदे दर्शनं नानुपपन्नम्। न चैवमपि
षष्ठ्या यूपावयवत्वसम्बन्धेनाप्युपपत्तेर्यूपधर्मत्वयूपसम्बन्धपरत्वे एव
नियामकाभावः। प्रकृतकरणत्वादेव यूपीयत्वसिद्धेरन्यथानुप-
पत्तेरेव नियामकत्वादिति साम्प्रतम्।

—स्व-यूपधर्मत्वसम्बन्धः षष्ठ्यर्थः। आनुमानिकयूपावयवत्व-
सम्बन्धस्यैव तदर्थत्वोपपत्तेः। अतएव यथाप्राप्ति प्रयोगादौ यूपा-
भावेऽपि स्वरुत्वेनैव अञ्जनादिसिद्धिः पश्चादपि तत्सिद्ध्यर्थम्। न च
प्रकृतयूपैव प्राप्तत्वादिति विधेयत्वम्। एतद्विभागे यूपपदरहितानां
परस्तादान-अञ्जनम-वृश्चछेदन-स्पाणाऽऽयादीनां यूपार्थत्वम् स्वरु-
त्वस्यापि प्रकारेण प्रकृतयूपसम्बन्धितयैवोपपत्तेः। द्वितीय-
यूपच्छेदनादि, यूपच्छिन्नवृक्षाद्दिशाखेन विहित यूपाभावे पर्व
निर्वर्तनाम्। न तु अञ्जनमात्रपि। अनन्यानिष्टजिनकयूपानु-

* यदन्यस्य,—इति आदर्शपुस्तक पाठः।

† यदन्यस्य, इत्यादर्शपुस्तक पाठः।

अतस्तद्बलेन व्याप्तिकल्पनाया यत्र यत्रानूयाजसामान्याभावोऽन्यत्रापि, तत्र चतुर्थचतुर्गृहीतनिवृत्तिरूपप्रयाजसिद्धि । अतश्च व्यतिरेकमुखेन चतुर्थचतुर्गृहीतमनूयाजार्थमितरच्च प्रयाजार्थमिति सिद्धं भवति । तत्राष्टत्वस्य चतुष्कद्वयलक्षणार्थत्वे उपपन्नम् इति तत्सिद्धि । इतरथा ह्यनूयाजाभावेऽप्यष्टगृहीतत्वानिवृत्तत्वेन औपभृतौपभृतरूपचतुष्कद्वयस्यैव प्राप्तेर्भक्त्यनुवादानुपपत्ति । कथञ्चित् प्राप्तावपि वा समस्तवाक्या नर्थक्यम् । [illegible] च वाचनिकत्वत्वे विधेरेवायमर्थवाद हेतुपरत्वे सम्भवति । श्रुतिलक्षणाभावात् । वस्तुतस्तु भाष्यपदेऽपि लक्षणा । हेतुवत्त्वेनैवार्थस्यानूयाजार्थत्वेऽर्धस्य प्रयाजार्थत्वे चावगते वाक्यादा वनूयाजाभावेनैवाष्टत्वस्य बाधोपपत्ते । अस्तु वा मा वा । प्रयोजन, पूर्वपक्षे प्रयाजद्वयार्थे अर्धन्यूनसमानयनम् । अष्टगृहीतस्य सम स्यादयुतत्वादिति न्यायेन पक्षस्यापि विभागात् । सिद्धान्ते त्वर्धं समानेयम् ॥ ४॥१॥१६ ॥

इति भाट्टदीपिकायां चतुर्थस्य प्रथम ॥

स्वरु ॥ ऐन्द्रे पशौ, यूपस्य स्वरु करोति स्वरुणा पशुमनक्तीति श्रुतम् । तत्र स्वरुशब्दवाच्यस्याप्रसिद्धत्वादाद्यवाक्येन स्वरुकर्मका* भावनैव विधीयते । तत्र च साधनीभूतद्रव्यापेक्षाया, तत्र [illegible] प्रथम शकलं परापतेत्तत् स्वरुरिति वचनेन शकलस्य साधनत्वावगमा- दितिकर्तव्यतापेक्षायां यूपपदेन तद्धर्मलक्षणया अञ्जनप्रोक्षणादयो- विधीयन्ते । अथ वा यथैव यूपावयवकत्व सिद्धान्ते पश्वर्थतयैव सम्मते यूपधर्मकत्वमप्यस्य पश्वर्थं इति न लक्षणा । एवमुत्पन्नस्य

* इत्यमेव पाठ सर्वत्र । स्वरुकर्मिका,—इति तु भवितु युक्तम् ।

प्रादेशमात्रत्वमात्रविधानफलकत्वाच्च लाघवम्। तत्र तु शाखाहरणो-द्देशेन प्रादेशमात्र विशाखत्वाधिकत्वविधाने गौरवम्। याज्ञिकास्तु द्विवादमेव वदन्ति ॥ ४।२।१२ ॥

शाखायां ॥ तत्रैव, शाखामाच्छिनत्ति, शाखामाहरति, मूलतः शाखां परिवासोपवेषं* करोतीति श्रुतम्। तत्र शाखाशब्दस्ता-वदाद्यवाक्ययोः समूलस्यैव वाचको न त्वग्रमात्रस्य। अतस्तृतीयवाक्ये-ऽपि तत्पर एव। तदर्थं च परिवासनं अग्रमूलविभागार्थम्। अत-स्तृतीयवाक्ये मूलत इति पदं द्वितीयार्थे तृतीयार्थे वा तद्धितं व्याख्यायोपवेषं करोति इत्यत्राप्येवेति। न त्वपादानार्थकं तत्परि-वासने। तथात्वे अपवाद्युपवेषत्वप्रसङ्गेन मूलत इत्यस्योत्तरवाक्यया-सम्बद्धत्वात्। अतः परिवासनेनाग्रं मूलं च शाखापदाभिधेयं विभज्य मूलमुपवेषत्वमुत्पादयेत् इति तृतीयवाक्यार्थः। तस्य च विनियोगापेक्षायामग्रस्य वत्सापाकरणादौ मूलस्य कपालोपधानादौ वचनादिविनियोगः। अत उभयमपि छेदनाहरणपरिवासनादीनां प्रयोजकम्।

अस्तु वा शाखाशब्दोऽग्रमात्रवाची। तथापि मूलत इति द्वितीयार्थे परिवासनस्य कर्मेति परिवासनमुभयप्रयुक्तम्। तथा वा मूलापादनकपरिवासनमुपवेषकरणार्थं विधीयत इति सोऽपि प्रयो-जक इति प्राप्ते।

मूलत इति तसि. पञ्चम्यर्थक एव। सार्वविभक्तिकत्वानुशासनं तु लाक्षणिकम्। अन्यथा विशिष्य पञ्चम्यर्थकत्वानुशासनवैयर्थ्य-

* उपवेषशब्दो मूर्द्धन्यषकारयुक्तो भाष्ये सर्वत्र।

निष्पन्नत्वसिद्ध्यर्थं यूपावयवकत्वविधिरर्थवानेव । अतएव यूपानुनिष्पन्नप्रथमप्रकल्पनाशे येन केनचित्काष्ठेनाञ्जनं पशोः । तेन प्रोक्षणादेः स्वर्थत्वे प्रमाणाभावाच्च स्वरुस्तेषां प्रयोजकः । सूत्राणि च सुधीभिरस्मिन्नेवार्थे व्याख्येयानि न तु भाष्यकारीये ॥ ४।२।१ ॥

शाखायां ॥ दर्शपूर्णमासयोः शाखामधिकृत्य, प्राचीमाहरतीति श्रुतम् । तत्र प्राचीशब्दस्तावद्दिग्विशेषवाची । प्राचीमुदेति सवितेति प्रयोगात् । देशवाची वा, न तु तद्देशस्थशाखावाची । अतस्तोपक्रमस्थमासिपदिके लक्षणाऽपेक्षया वरं द्वितीयैव सप्तम्यर्थे व्याख्यातुं युक्ता । प्रतिशब्दाध्याहारो वा । (१)कर्माकाङ्क्षायां च प्रकृतत्वादेव शाखा तत्त्वेन सम्बध्यते । प्राग्देशस्य च पूर्वोत्तरावध्यपेक्षायां प्रत्यक्षोपस्थितत्वात्सामर्थ्याच्च वन-विहारदेशौ तत्त्वेन सम्बध्येते । तेन वनाद्विहारोपलक्षितप्राचीं प्रति शाखामाहरतीति वाक्यार्थो न तु वृक्षस्य प्राचीं शाखामिति । तथात्वे छिनत्तीति स्यान्न त्वाहरतीति प्राप्ते ।

प्रधानभूतविभक्तौ लक्षणायाः प्रतिशब्दाध्याहारस्य वा कर्माध्याहारस्य पूर्वोत्तरावध्यध्याहारस्य चाकृतस्यापेक्षया एकस्मिन् प्रातिपदिक एव प्रकृतशाखालक्षणया वाक्यार्थोपपत्तेः, शाखास्य वृक्षावयवविशेषत्वरूपशाखात्वेनैवोपस्थितवृक्षावधिकतयाऽप्युपपत्तेः शाखावादएवायम् । तेन वृक्षस्य प्राग्देशभवां प्राचीं शाखां छित्वा आहरतीत्यर्थः । प्रयोजनानुरोधात्तु विहारदेशं प्रतीति लभ्यते । शाखायां

(१) प्रतिशब्दाध्याहारे प्राचीं प्रति आहरतीति लभ्यते । तत्र च किमाहरतीत्यध्याहरणस्य कर्माकाङ्क्षा । तत्र प्रकृता शाखैव कर्मत्वेन संबध्यते इति भावः ।

प्रसङ्गात्। अतो मूलापादानकं परिवासनं द्वितीयाश्रुत्या शाखा-संस्कारकमेव। न तु वाक्यादुपवेशकरणाङ्गम्। न चोभयसंस्कारकम्। द्वितीयाश्रुतेर्बलीयस्त्वात्। उद्देश्यानेकत्वप्रसङ्गाच्च। अतः शाखा-शब्दोऽपि मूलापादानकपरिवासनसिद्ध्यर्थं न विरुध्यते। अतएव वत्सापाकरणादौ शाखापदेनैवास्य विनियोगः। अतो मूलं परिवासनाङ्गमेव। एवं च व्यवहितकल्पनाऽपि न प्रसज्यते। अतएव परिवासनानुनिष्पन्नमूलस्यैवोपवेशरूपं संज्ञान्तरकरणम्[1]। अन्यथा शाखा-पदेनैव सर्वत्र विनियोगेन संज्ञान्तरवैयर्थ्यापत्तेः। अतो न व्यवहित-कल्पनाया आवश्यकत्वम्। अतः संज्ञाकरणमात्रफलक उपवेशं करोतीत्ययमनुवादो ल्यबन्तापेक्षितक्रियान्तरप्रदर्शनार्थः। अतो न मूलं छेदनादीनां प्रयोजकम्। प्रयोजनं, पौर्णमास्यां शाखाऽभावेन येन केनचित्काष्ठेन कपालोपधानं न तूपवेशकरणम्॥ ४।२।९॥ ९ ॥

हरणे॥ तद्वेव, सूक्तवाकेन प्रस्तरं प्रहरतीति सह शाखया प्रस्तरं प्रहरतीति च श्रुतम्। तत्राद्यवाक्ये तावन्मान्त्रवर्णिकदेवतासम्बन्धा-द्धोमविधिरित्युक्तम्[2]। न तु द्वितीयवाक्यविहितप्रहरणानुवादेन प्रस्तरमुद्दिश्य सूक्तवाकविधिरिति तन्त्रसारोक्तम्। यागस्यापि विधौ वाक्यभेदापत्तेः। यागविधायकवाक्यान्तरकल्पने गौरवाच्च। अतश्च द्वितीयवाक्ये प्रहरतिना होममनूद्य शाखासाहित्यमात्रविधिः। सहशब्दस्य निपातत्वेन परस्परान्वयव्युत्पत्तेश्च न शाखा साहित्यं

---

(१) योऽयं समाहृताया पलाशशाखाया परिवासनानुनिष्पन्नो मूल-भागः प्रादेशमितः, तस्यैवोपवेशसंज्ञेत्यर्थः।

(२) तृतीयाध्यायस्य द्वितीयपादे सूक्तवाके चेति पञ्चमाधिकरणे।

कर्मणा यमभिप्रैति स सम्प्रदानमिति स्मृत्या क्रियां प्रति व्याप्यमानं कर्मकारकं प्रत्यपि सम्प्रदानस्य व्याप्यमानत्वावगतेर्विधिबलेन कस्य चिद्व्याप्यमानस्यापेक्षितत्वे कल्प्यमाने व्याप्यव्याप्यस्य सुतरां व्याप्यत्वमिति न्यायेन मैत्रावरुण एव तदवगतेस्तस्यैवोद्देश्यत्वम् । सम्भवति च मैत्रावरुणस्योपयोगादुद्देश्यत्वम् । वेदिविदादौ तु बाधात् स्तरादेरेवोद्देश्यता । दृष्टस्यावलम्बनं दण्डस्य प्रयोजनमिति नादृष्टार्थत्वमपि । न चैवं दण्डमिति द्वितीयाऽनुपपत्तिः, सक्तुवत्करणत्वलक्षणार्थत्वात् ।

यत्तु मूलेऽनीप्सितकर्मत्वेन तदुपपत्तिरित्युक्तम् । तज्जुहोतेरपि, तृतीया च होश्छन्दसीत्यादिस्मृत्या* सकर्मकत्वावगतेः सक्तुष्वपि तदापत्तेरनीप्सितकर्मत्वेऽपि चोद्देश्यानेकत्वनिमित्तवाक्यभेदापरिहार्यत्वस्य कौस्तुभ एवोक्तत्वादुपेक्षितम् ।

अस्तु वा दण्डस्यानीप्सितकर्मत्वेनैवान्वयः । सम्प्रदानस्य च सत्यपि प्राधान्ये सम्प्रदानत्वेनैवान्वयात् । द्विकर्मकत्वापत्तिरित्यपि बोध्यम् । अतश्च दण्डविशिष्टदानस्योपयोगापेक्षायां दण्डी प्रैषानन्वाहेत्यादिना प्रैषानुवचनार्थत्वेन विनियुज्यते । अतो निरूढपश्वादौ दीक्षासोमक्रयाभावेऽपि दण्डदानानुष्ठानं तस्य प्रैषानुवचनप्रयुक्तत्वान्नानुपपन्नम् ।

इदन्त्विह वक्तव्यम् । प्रदानस्य दण्डं प्रत्यर्थकर्मत्वे दीक्षादण्डस्य कथं दानाङ्गत्वम् । न हि स्वत्वत्यागे कृते यजमानेन पुनः स्वयं

* इत्थमेव पाठः सर्वत्र । स्मृत्या इति तु भवितुमुचितम् । तृतीया च होश्छन्दसि इति हि पाणिनिसूत्रम् । न त्वियं श्रुतिः ।

शङ्का। कुशलेनाध्वर्युणा यावत्संयवनोपयोगिनीनामेवापां प्रणयनेन शेषाभावात् प्रतिपत्तित्वानुपपत्तेः। अतः सक्तुन्यायेन नियमनस्यार्थ-कर्मत्वात् प्रयोजकत्वमिति प्राप्ते।

द्वितीयासंयोगादाकीर्णकराणां प्रतिपत्तिरेवेयम्। न च शेषा-भावः, तस्यावर्जनीयत्वात्। अनन्यथासिद्धप्रतिपत्तेर्धारणप्रयोजकत्वाच्च। अतः संयवनमेव प्रयोजकम्। अत्र चाग्नेयादिहविःपाकत्वेनैव संयवनस्य उद्देश्यता। तेन चर्वादावपि प्रणीताः भवन्त्येव। अत एवाभ्युदितेष्टौ दधिपयसोरपि प्रणीताधर्मा वक्ष्यन्ते। वस्तुतस्तु कपालं प्रति स्वोप-जन्यपाकत्वेनैव पिष्टसंयवनत्वेनैवोद्देश्यता। अतिप्रसक्तधर्मेण तदङ्गी-कारे प्रमाणाभावात्। दधिपयसोः प्रणीताधर्मास्तु सत्त्वापत्त्या। याज्ञिकास्तु चर्वादावपि प्रणीताः कुर्वन्ति। प्रयोजनं, संयवनोत्तरं प्रणीतानाशो नियमनार्थं तदनुत्पत्तिः॥ ४॥२॥५॥

प्रासनवत्॥ सोमे, दण्डेन दीक्षयतीत्यनेन दण्डस्य दीक्षाभि-व्यञ्जकत्वं विधाय, क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति श्रुतम्। तत्र पूर्ववदेव द्वितीयासंयोगात् मैत्रावरुणसम्बन्धि दानं दण्डप्रतिपत्तिः चतुर्थी षष्ठ्यर्थलक्षणा*। वेदविदे गान्ददातीति यथा प्राधान्याभावेऽपि सम्प्रदानार्थिकैव। अतश्च दीक्षितदण्डस्य दानमात्रेण प्रतिपत्तिसिद्धेर्नान्यं स एव दण्डो दण्डी मैत्रावरुणस्याऽ-त्यागेन प्रैषानुवचने विनियुज्यते। तेन स प्रैषानुवचन दण्डदानस्य प्रयोजकमिति निरूढपशादावपि न तदनुष्ठेयमिति प्राप्ते।

* इदमेव पाठ सर्वत्र। लक्षिता,—इति तु सविशुद्धमुचितम्।

दीक्षितपदरहितवाक्ये प्रतिपत्तिविध्यन्तराकल्पनेऽपि [redacted] क्षतिः। तैत्तिरीयवाक्येनैव मैत्रावरुणपदाश्रवणेन दानस्य प्रतिपत्तित्वसिद्धेः। क्रीतवाक्ये [redacted] मैत्रावरुणपदश्रवणेन तत्प्राधान्यावगतेः तदुपकारार्थत्वमेव। अतश्च तैत्तिरीयवाक्ये श्रुतक्रयदानापेक्षया क्रीतवाक्ये श्रुतस्तद्दण्डाक्षेपप्राप्तिकल्पनागौरवपरिहारार्थं च परस्परापेक्षिततया दीक्षितदण्डस्यैव मैत्रावरुणोपकारार्थत्वसिद्धिः।

न च क्रीतवाक्यविहितदण्ड एव तैत्तिरीयवाक्येन दीक्षासम्बन्धविधानोपपत्तेः न प्रतिपत्तिविधायकत्वमिति वाच्यम्। तथात्वे दण्डोद्देशेन दीक्षितत्वविधावेकप्रसरताभङ्गापत्तेः। न चैवमप्येतद्वाक्यविहितप्रतिपत्त्यनुवादेन क्रीतवाक्ये राजक्रयोत्तरकालत्वस्यैव विधानोपपत्तेरर्थकर्मत्वम्। मैत्रावरुणसम्प्रदानस्यापि विधौ वाक्यभेदापत्तेः। अत उभयथापि दानविधिः। तत्र च दीक्षितवाक्ये प्रतिपत्तिविधिः। सम्प्रदानाश्रवणात्। दीक्षितपदश्रवणाच्च। क्रीतवाक्ये उभयश्रुत्याऽर्थकर्मत्वमेव। उभयप्रयोजनं पूर्ववत्।

यत्तु तन्त्रे क्रीतवाक्येऽपि प्रैषानुवचनोपयोगिदण्डसंस्कारकत्वमेव दानस्येति दण्डस्याप्रीप्सितकर्मत्वमेव। न चैतावता दण्डप्रतिपत्तित्वं, उपयोक्ष्यमाणसंस्कारस्य न्याय्यत्वात्। मैत्रावरुणस्य तु सम्प्रदानत्वे मैत्रावरुणस्येति न कश्चिद्दोषः। यद्वा मैत्रावरुणोद्देशेनैव दण्डदानं मैत्रावरुणसंस्कारकम्। कल्पितेन विधिना उपयोक्ष्यमाणदण्डसंस्कारकमपि। अपेक्षावशात्। मन्त्रे प्रैषादौ दण्डैकत्वं तु दण्डी प्रैषानन्वाहेति दण्डिपदे प्रथमातिक्रमे कारणाभावादेकवचनान्तेन व्युत्पत्तिमङ्गीकृत्य समर्थनीयमिति दिक्॥४।२।६॥

कर्मत्वम् । न च प्रतिपत्त्यपेक्षत्वाद्दृष्टार्थत्वलाभाय तल्लक्षणायामपि न दोषः । निषादस्थपत्यधिकरणन्यायेन लक्षणानुपपत्तेः । यत्तु कैश्चिद्भावनाभेदमात्राङ्गीकारेण तस्मिन्नेवावभृथे समुच्चयेन निवेशः पूर्वपक्षितः, तदाजिनेऽपि तथापत्तेरुपेक्षितम् । अतोऽवभृथस्यापि दीक्षोन्मोचनरूपैककार्यत्वेन विकल्पापत्तेः द्रव्याणामपि विकल्पः । अदृष्टार्थत्वे तु तन्त्रेणानुष्ठानात्समुच्चय इति प्राप्ते ।

कर्मान्तरत्वेऽवभृथशब्दस्य नामातिदेशकत्वे गौणत्वापत्तेः वाचकत्वे नैकशक्तिकल्पनाप्रसङ्गाद्देवताऽभावेन चारूपत्वापत्तेः(१) वारुणेनेत्यनुषङ्गस्य देशलक्षणयाऽप्युपपत्तावन्याय्यत्वाद्यागरूपधात्वर्थ एव सोमलिप्तप्रतिपत्तित्वेन विधीयते । एवं च धात्वर्थाविवक्षा परपदार्थसम्बन्धविधानं कर्मान्तरत्वादिकल्पना च नाश्रिता भवति । न च तेनेत्यनेन करणत्वत्यागेन कर्मत्वलक्षणा । आनुषङ्गिकसम्बन्धयोगक्षणीयाऽङ्गीकारेण साहित्यमात्रोक्तौ कर्मत्वेनैव तदाश्रयणलक्षणाया अप्रसक्तेः । अवभृथपदं परं देशलक्षणार्थमिति न कश्चिद्दोषः ॥४॥ २॥८॥

कर्त्तृ ॥ तत्र तत्र कर्त्तारोऽध्वर्य्वादयः, कालाः पौर्णमास्यादयो, देशाः समादयो, द्रव्याणि व्रीह्यादीनि, गुणाः शुक्लादयः, संस्काराश्चावघातादयस्तत्तदाक्षे श्रुताः कर्मचोदनयैवाक्षेपेण प्राप्तत्वाच्च विधीयन्ते । अतो कर्मविधिभिर्नियमेन प्रयुज्यन्त इत्याशङ्काऽभावे प्राप्ते ।

---

(१) दृश्यदेवते हि यागस्य रूपमित्यनुपदं वक्ष्यते ।

उत्पत्तौ ॥ सोमे, कृष्णविषाणया कण्डूयते इति कण्डूयनाङ्गत्वेन कृष्णविषाणां विधाय पुनराम्नातम् । नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यतीति । तत्र निनयनवत्प्रासन प्रतिपत्तिरेव, द्वितीयासंयोगात् । न च दक्षिणादानोत्तरकालमपि दीक्षितस्य कण्डूयनसम्भवात् तत्करत्वाभावेन न प्रतिपत्त्यर्हता । अनन्यथासिद्धप्रतिपत्तिविधिवशादेव दक्षिणादानप्राक्कालीनकण्डूयनस्यैव कार्यत्वावधारणात् ।

न च प्रतिपत्तिमात्रे कार्यस्य जातत्वेन संस्कारवैयर्थ्यापत्ते-र्विनियोगभङ्गेन प्रकृतदर्थकर्मत्वमेव स्यादिति वाच्यम् । जातेऽपि कार्ये उपयुक्तादि क्व निक्षेप्तव्यमिति अपेक्षायामेवेति प्रतिपत्ति-नियमविधेरुपयोगोपपत्तेः । तन्नियमादृष्टस्य चोत्पत्त्यपूर्वे जाते-ऽपि तद्व्यवहितकार्यान्तरोपयोगियागापूर्वनिष्ठयोग्यताजनन एवो-पयोग । न तु एतदकरणस्य तत्कार्यनाशकत्वकल्पनम् । प्रयाजा-द्यवघातकरणस्याग्नेयादिकार्यानुत्पादकत्वकल्पनापत्तेः । अकरणस्यादि-कारणतावच्छेदकत्वादिकल्पने गौरवाच्चेत्यादि कौस्तुभे अपूर्वाधिकरणे स्फुटम् । अत एवाङ्गितायां परिधानीये कर्मणि प्रासनादिरूप-प्रतिपत्तेरपि ऐहिककर्मातिरिक्तकर्माङ्गत्वस्यैव फलवत्त्वेन तदभावे-ऽपि फलोत्पत्तावपि न क्षतिरित्यपि तत्रैव स्फुटम् ॥४॥२॥१०॥

लौकिके च ॥ सोमे, एव वारुणेनैककपालेनावभृथं यन्ति इत्य-नेनावभृथसंज्ञकं कर्म विधाय, यत्किञ्चित्सोमलिप्तं तेनावभृथं यन्तीति श्रुतम् । तत्र तृतीयया सोमलिप्तस्य करणत्वावगमात्तस्य च प्रागेऽसमवेऽप्यवभृथ प्रत्युपपत्तेः न द्वितीयार्थलक्षणया प्रतिपत्ति-

देशप्राप्तधर्मादिलोपे प्रमाणाभावाच्चित्र विधानानुपपत्तेरति-व्याप्यानुपयुक्ताया एव बर्हिर्व्यक्तेरुभयोद्देशेन निरिष्टिकोपदेशः । तत्र बर्हिर्धर्माणामातिथ्यार्थे कृतानामन्तःपूर्वोत्पत्तौ नाग्रात्तस्यामेव व्यक्तावुपसदार्थं पुनः पुनरुपादानवच्चं करणम् । यद्यपि च कृप्तोपकारकप्राकृताघारपुनःश्रवणादुपसदामपूर्वत्वं वक्ष्यते, तथापि प्रकृतौ बर्हिषोऽङ्गप्रधानसाधारणत्वात् सौवाघारार्थमेव तत्करणम् । बर्हिर्धर्मैरपि च तेनैव सम्बन्धेनोपसदुद्देशेन विधानम् । इतरथा प्राकृतकार्यकारितापत्तेः । बर्हिःप्रतिपत्तेस्तु दाहाख्यायाः प्रकृतावुत्पत्त्यपूर्वसिद्धयोग्यतासम्पादकतयेह तत्र नाशादग्नीषोमीयान्ते करणेऽपि नातिथ्योपसदर्थत्वम् । खण्डेष्टिवादा तयोस्तल्लोपः । तेन निरिष्टिकोपदेश इति द्वितीयः पक्षः ।

विना वचनमन्यथोपयुक्तस्यान्यथोपदेशे शिष्टाचारविरोधादतिदेशप्राप्तलवनादिबाधे प्रमाणाभावाच्च आतिथ्याप्रकरणपठिततदङ्गाश्वबालादिबर्हिर्धर्माणामुभयोरतिदेशो वाचनिक इति तृतीयः पक्षः। अस्मिंश्च पक्षे न किञ्चिदपि व्यक्त्यैक्यम् ।

सिद्धान्तस्तु । बर्हिःपदे लक्षणायां प्रमाणाभावात् किञ्चिदपि व्यक्त्यैक्यविधानम् । तथातिथ्योपक्रमे श्रूयमाणं बर्हिस्तदुभयसाधारणमिति तत्र क्रियमाणा धर्मा अपि प्रतिपत्तिवत् सर्वसाधारणाः । न चाश्ववालादिधर्माणां प्रकरणेन तन्मात्रार्थत्वापत्तेः प्रसङ्गे चोपकारकत्वेऽपि* इतरार्थत्वे प्रमाणाभावः । अश्ववालादिवाक्यानामेत-

* इत्थमेव पाठः सर्वत्र । मम तु प्रसङ्गेनोपकारकत्वेऽपि,—इति पाठः प्रतिभाति ।

यावदाक्षेपेणानियताः प्राप्यन्ते, तावद्वचनेन नियमफलकविधिकरणान्नियमेनैव प्रयोजकत्वम् । नियमविधिप्रकारश्च सर्वोऽप्यनागतावेक्षणन्यायेनात्र कौस्तुभे च मन्त्राधिकरण एव दर्शितः ॥४॥२॥ ८॥१०॥११[1] ॥

यजतिचोदना ॥ यजजुहोत्यादिपदार्थाविध्यनुवाद्याः के इति विचार्यन्ते । यत्र प्रक्षेपाङ्गको देवतोद्देशपूर्वको द्रव्यत्यागोऽनुष्ठीयते, स यागपदार्थः । प्रयाजादिषु प्रक्षेपसिद्ध्यर्थमात्रं विशेषणम् । तच्च यागाक्षेपेणैव प्रक्षेपसिद्धेः । शक्यतावच्छेदकं चोक्तविधत्यागत्वसमव्यापकं जातिरूपमखण्डोपाधिरूपं वा सामान्यमित्युक्तमेव । प्रक्षेपप्रधानक उक्तविधस्त्यागो होमपदार्थः । सम्प्रदानस्वत्वापादनपूर्वको द्रव्यत्यागो दानपदार्थः । उभयत्रापि शक्यतावच्छेदकं तत्तद्धर्मसमव्यापकं पूर्ववदेव सामान्यम् । एतत्सूत्रव्याख्यानान्तराणि तु गतार्थत्वान्न लिखितानि ॥४॥२॥१२॥१३॥

विधेः ॥ सोमे, यदातिथ्यायां बर्हिस्तदुपसदामग्नीषोमीयस्येति श्रुतम् । तत्र देवदत्ताय गौर्यज्ञदत्ताय दीयतामितिवदातिथ्यायां बर्हिरासन्नमाश्रित्य उपसदाद्यर्थं विधीयते । तेनातिथ्यायां बर्हिष उपादानमात्रं प्रयुज्यते । अन्ये धर्मा आस्तरणादिकार्यहेतत्वादाभ्यामिति प्रथमः पक्षः ।

उपादानमात्रस्यातिथ्याप्रयुक्तत्वे अप्राप्तकार्यकारित्वापत्तेरिति-

(१) अत्र भाष्यकारेण षोडशाधिकरणानि कल्पितानि । प्रथमं कर्तृदेशकालानां नियमार्थम्, द्वितीयं मन्त्रगुणयोः, तृतीयं संस्कारविधानस्य । अन्यपक्षता तु नवमेऽत्र सम्प्रदर्शितम् । एवमुत्तरत्रापि संग्रहो द्रष्टव्य ।

# अथ चतुर्थोऽध्यायः।

## तृतीय पादः।

द्रव्य ॥ अनारभ्य, यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोतीति श्रुतं द्रव्यम्, सोमे, यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते इति श्रुतः संस्कारो, वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजा इज्यन्ते वर्म भ्रातृव्याभिभूत्यै इति श्रुतं कर्म च, नापापश्लोकश्रवणादिरूप-फलार्थम्। कामशब्दाद्यभावेन वर्तमानापदेशस्य फलपरत्वानुपपत्त्या-ऽर्थवादत्वस्यौदुम्बराधिकरणे साधितत्वात्। न च स्तुतिपरस्याप्यस्य लक्षणया फलपरत्वम्। एकस्यार्थद्वयपरत्वे वाक्यभेदात्। न च रात्रि-सत्रवदुपस्थितत्वेन कामयुक्तपदान्तरकल्पनया फलार्थत्वम्। तद्वदिह वाक्यादिप्रमाणेन जुह्वाद्यर्थत्वस्यावगततया फलाकाङ्क्षाविरहात्।

न च कर्मोदाहरणे प्रकरणगम्यक्रत्वर्थत्वापेक्षया स्ववाक्योप-स्थितफलपदकल्पनायामेव वैरूप्यलाघवमिति वाच्यम्। विजातीय फलसम्बन्धकल्पनात् क्लृप्तक्रतूपकारस्यैव फलस्यौचित्यात्। अत-एव हि प्रबलप्रमाणेनोपस्थापितसाकाङ्क्षसम्बन्धस्यैकताङ्गत्यागेनापि दुर्बलनिराकाङ्क्षसाकताङ्गग्रहणं विकृतौ क्लृप्तत्वमात्रेण। अतो नैते फलप्रयुक्ता उभयप्रयुक्ता वा, अपि तु क्रतुप्रयुक्ता एवेति फल-कामनायामसत्यामप्यनुष्ठेयाः। औदुम्बराधिकरणसिद्धस्याप्यस्यार्थ-प्रयुक्तत्वरूपप्रयोजनस्य सूचनार्थं पुनरुक्तिः ॥४।३।१॥

नैमित्तिके ॥ काम्यं गोदोहनादि कामाभावेऽपि नित्यप्रयोगे

द्वाक्याव्यवधानेन चितयापूर्वसाधनीभूतैतद्धर्मकरोद्देश्यत्वात् । अत्र च लक्षणया एतद्भिन्नमेवोद्देश्यतावच्छेदकम् । अतो न वाक्यभेदः । वर्हिःपदेन च तद्धर्मैक्यं लक्षणया विधीयते । न चैवं लक्षणाद्वयापत्तौ धर्मातिदेशपक्षात्कोविशेषः । जहत्स्वार्थलक्षणाया विशेषात् । आश्ववालादिधर्माणामुपपदार्थत्वस्य वाक्यीयत्वेन प्राकरणिकातिथ्यार्थत्वबाधापत्तेश्च । अनमुद्देशेनापि विधाने विध्यपि पदेषु चितरूपोद्देश्यतावच्छेदकलक्षणाया आवश्यकत्वाच्च । यथा च यावज्ज्यहृत्तिधर्मस्योद्देश्यतावच्छेदकत्वेऽप्येकैकविकारेऽतिदेशस्तथा कौस्तुभे प्रहैकत्वाधिकरणे निरूपितम् ॥४॥२॥१४॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
चतुर्थस्य द्वितीयः पादः ।

वैश्यस्येति श्रुतम्। ज्योतिष्टोमापूर्वसाधनीभूतब्राह्मणादिरूपाधिकारिसंस्कारार्थत्वेन विहितं पयोव्रतादि तत्प्रयुक्तमित्यविवादमेव। अत्र च न बार्हद्गिरादिवद् ब्राह्मणस्य निमित्तत्वम्। दृष्टविधया तस्योद्देश्यत्वे सम्भवति निमित्तत्वकल्पने प्रमाणाभावात्। अत एव रागप्राप्तभक्षणद्वारैव पयोनियममात्रस्य रोगादिनाऽशनाप्रवृत्तिः, तस्य न पयःप्रयोजकतेति ध्येयम् ॥४॥३॥४॥

चोदनायां॥ विश्वजिता यजेतेत्येकाहकाण्डपठितविश्वजिदादावश्रुतफलके भावनायां भाव्यापेक्षायां समानपदश्रुत्युपनीतोऽपि यागो न भाव्यः। ततोऽप्यन्तरङ्गविधिश्रुत्यवगतप्रवर्त्तकत्वबलेन पुरुषार्थस्यैव भाव्यत्वावगतेः[१]। तृतीयान्तनामधेयसामानाधिकरण्येन यागस्य करणत्वावगतेश्च। अतोऽश्रुतेऽपि फले तद्वाचककामपदान्तफलपदाध्याहारेण पुरुषार्थफलकत्वमेव। तच्च पदमध्याहृतमपि वेदाकाङ्क्षयाऽध्याहृतत्वाद्वैदिकमेव। वेदतुल्यं वा।

तच्च फलमेकमेव कल्प्यते न सर्वाणि, एककल्पनयैव निराकाङ्क्षत्वात्। तदप्येकं स्वर्ग एव न तु पुत्रपश्वादि। यन्न दुःखेन सम्भिन्नमित्यादिवाक्यात् स्वर्गशब्दस्य सुखविशेषमात्रवाचित्वेन विजातीयसुखत्वस्यैव[२] जन्यतावच्छेदकत्वे लाघवात्। पुत्रादीनान्तु सुखसाधनतया पुरुषार्थत्वस्य विलम्बोपस्थितिकत्वाच्च। स्वर्गस्य

(१) यागस्य क्लेशरूपतया स्वतः पुरुषार्थत्वाभावेन फलस्यैव भाव्यत्वमुचितमिति भावः।

(२) इत्थमेव पाठः सर्वत्र। विजातीयसुखत्वस्यैव इति तु समीचीनः प्रतिभाति।

उपस्थितत्वेऽपि न ग्राह्यम्। तथा, वार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात् पार्थुरश्मं राजन्यस्य रायोवाजीयं वैश्यस्येति ब्राह्मणाद्यधिकारकत्वे निमित्ते द्वादशाहसम्बन्धि-ब्रह्मसामस्तोत्रोद्देशेन विहितं वार्हद्गिरादि नैमित्तिकं निमित्ताभावेऽसुत्योमाधिकारके प्रयोगे न ग्राह्यम्। निमित्ताभावेऽप्यनुष्ठाने निमित्तसम्बन्धस्य वैयर्थ्यापत्तेः।

न च कामाभावे तत्साधनानुष्ठाने फलानुत्पत्तावपि क्रतुसाद्गुण्योपपत्तेर्न कश्चिद्विरोध इति वाच्यम्। तस्य क्रत्वर्थत्वे प्रमाणाभावेन तदा तदनुष्ठाननैयत्ये प्रमाणाभावात्। क्रत्वपेक्षायास्त्वार्थाच्छिन्न-यत्किञ्चित्-साधनग्रहणेनैव निवृत्त्युपपत्तेः। अत एव प्रबल-प्रमाणेनाङ्गत्वेऽवगतेऽपि साहृताङ्गानां विकल्प्याङ्गत्ववदस्यापि नित्य-प्रयोगार्थत्वमित्यपास्तम्।

यदा तु कामनिमित्तसम्बन्धरहितं वारणाभीवत्ताद्याम्नातमेव, तदा कः प्रसङ्गः काम्यनैमित्तिकग्रहणस्य। यत्र तु तन्नाम्नात, तत्रार्थाच्छिन्नस्य यस्य कस्यचिद् ग्रहणम्। सिद्धोऽप्ययमर्थः प्रयोगस्व-रूपप्रयोजककथनार्थमुक्त इति न विरोधः ॥४।३।२॥

एकस्य ॥ यत्र तु विध्यन्तरं दध्ना जुहोतीत्यादि श्रुतम्, तत्र काम्यस्यापि द्रव्यान्तरेण विकल्पः। द्रव्यान्तरविध्यभावे तु तस्यैव ग्रहणम्। न च दध्ना जुहोतीत्यादिर्दध्यादेरुत्पत्तिविधिः। उक्थ्यपूदादिवदस्यालौकिकत्वाभावात्। नापि काम्यदध्यादेराश्रयविधिः। तस्य प्रकरणान्तरेण वैयर्थ्यात्। अतो नित्यप्रयोगेऽङ्गताबोधार्थमेव स विधिरिति तस्योभयप्रयुक्तत्वम् ॥४।३।३॥

द्रव्याणां ॥ सोमे, पयोव्रतं ब्राह्मणस्य यवागूराजन्यस्यामिक्षा

चोदनया कर्मशब्दस्य सर्वकर्मपरत्वावगमात् श्रुतफलकविश्वजिदादि-मात्रपरत्वे प्रमाणाभावः।

न चैवमपि कर्मान्तरमाधारत्वेनाम्नायि तत्फलकल्पोपपत्तेर्विश्व-जिदाश्रयोत्पत्तिपरत्वेनापि चरितार्थत्वात् फलकल्पनाऽनुपपत्तिरिति वाच्यम्। उक्तवाक्येन कल्पनालाघवानुरोधेन कृप्तप्रयोगविधिकाना-मेव कर्मणां मोक्षफलकत्वावगमेनाकृप्तप्रयोगकस्य विश्वजिदादे-र्ग्रहणे वैरूप्यप्रसङ्गेन विश्वजिदादेरपि प्रयोगविधिसिद्ध्यर्थं फल-कल्पनाया आवश्यकत्वात्। एतेन विविदिषन्ति यज्ञेनेत्यादिवाक्या-त्कर्मणा पितृलोक इत्यादिवाक्याद्वा विविदिषादिमात्रार्थत्वं पितृ-लोकमात्रार्थत्वं वा विश्वजिदादेरपास्तम्। अत एव प्रयोगान्तर-कल्पनाभियैव प्रयाजादीनां न विविदिषाद्यर्थत्वम्। एतेन धर्मेण पापमपनुदतीत्यादि वाक्येन पापक्षयफलकत्वं विश्वजिदादेरपास्तम्। तस्य नित्यस्थले निमित्तप्रयुक्तनैमित्तिकानुषङ्गिकत्वेन विश्वजिति प्रयोजकत्वकल्पने वैरूप्यापत्तेः॥४॥३॥५॥६॥७॥

रात्रौ॥ ज्योतिर्गौरायुरित्यादिवाक्योक्तानि सौत्यानि कर्माणि विधाय, प्रतितिष्ठन्ति ह वा य एतारात्रीरुपयन्तीत्यादि श्रुतम्। तत्र रात्रिसत्रादौ पूर्ववत् स्वर्गकल्पने स्वर्गोपस्थितिस्तदा-चकपदोपस्थितिः कामपदाभावात्कल्पना चेति गौरवापत्तेर्लाघवात्. श्रुतप्रतिष्ठादेरेव भाव्यत्वकल्पनम्।

तत्र नियं व्यवस्था। यत्र श्रुतानामेव पदानां लक्षणया फल-परत्वसम्भवो यथोदाहृते वाक्ये तिङ्प्रत्ययस्य स्वऽर्थत्वं कल्पयित्वा भविष्यत्कालस्त्वत्तित्वेन साध्यत्वावगतौ प्रतिष्ठादिस्वाभाव्यादौचितत्व-

बहुभिः प्रार्थ्यमानतया शास्त्रस्य महाविषयत्वलाभाच्च । लाघवाद्य-विशेषेऽपि च न सुखत्वस्यैहिकामुष्मिकसाधारणस्य, विलम्बोप-स्थितिकत्वाच्च जन्यतावच्छेदकत्वम् । स्वरसतो दुःखासम्भिन्नसुखस्यैव इच्छाविषयत्वाद्दुःखसम्भिन्नसुखस्य फलत्वानुपपत्तेः[1] । व्याप्यधर्मेण जन्यत्वसम्भवे व्यापकधर्मस्यान्यथासिद्धत्वाच्च व्यभिचारेण सुखत्वस्य स्वर्गत्ववदेव कार्यतावच्छेदकत्वानुपपत्तेः[2] । अतो विश्वजित्त्वावच्छिन्न-कारणतानिरूपितजन्यतावच्छेदकत्वं विजातीयस्वर्गस्यैव[3] युक्तम् ।

मोक्षोऽपि च यद्यपि दुःखध्वंसरूपस्तदा पापक्षयादिवदेव न विश्वजिज्जन्यः जन्यतावच्छेदकत्वे गौरवात्[4] । यदि त्वानन्दावाप्तिरूप-स्तदा तस्य ज्ञानैकजन्यत्वाच्च विश्वजिज्जन्यत्वम्[5] । यद्यपि हि,

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।

इत्यादिवचनात्कर्ममात्रजन्यत्वं ज्ञानकर्मसमुच्चयो वा प्रामा-णिकः[6], तदापि त्यक्त्वा कर्मफलासङ्गम् इत्याद्युपक्रमोपसंहारपर्या-

---

(१) ऐहिकसुखन्तु दुःखभिन्नमेवेत्याशयः ।

(२) अन्यथासिद्धत्वं व्यभिचारे, व्यभिचारश्च जन्यतावच्छेदकत्वानुपपत्तौ हेतुः । विजातीयसुखत्वपर्यवसितं स्वर्गत्वं यथा कार्यतावच्छेदक-मुपपद्यते, तथा सुखत्वं नेति व्यतिरेके दृष्टान्तः ।

(३) इत्थमेव पाठः सर्वत्र । विजातीयस्वर्गत्वस्यैवेति भवितुमुचितम् । विजातीयसुखत्वस्यैवेति तु युक्तं प्रतिभाति ।

(४) अभावस्य प्रतियोगिज्ञानाधीनज्ञानविषयत्वेन तस्य जन्यतावच्छेदकत्वे गौरवमिति भावः ।

(५) ज्ञानादेव मुक्तिरिति हि वेदान्तडिण्डिमः ।

(६) मोक्षस्य कर्ममात्रजन्यत्वमिति मतन्तु दार्शनिकैर्नादृतं । समुच्चित-ज्ञानकर्मकार्यत्वं प्राचामनुमतमपि शङ्कराचार्येण निराकृतम् । इत्यत उक्तं यद्यपि प्रामाणिक इति ।

सिद्धा भाव्यत्वम्। धातोरेव वा भव्यत्वं परिकल्प्यैक्यविषयत्वावगतौ स्वर्गादिवदेव साध्यत्वावगतिः। तत्र प्राथमिकभव्यापेक्षायां 'श्रुत-वाक्यस्यैव लक्षणया फलपरत्वे प्रमिते पश्चात् स्तुत्यपेक्षायां अप्राप्ति-फलसम्भवविधेरेव स्तावकत्वम्।

यत्र श्रुतेष्वर्थवादपदेषु न स्तावकत्वकल्पनां विना फलपरत्व-मात्रेणोपपत्तिः, यथा यदष्टाकपालो भवति गायत्र्यैवैनमित्यादौ। तत्र तेषां स्तावकत्वमेव। फलाकाङ्क्षायां तु उपस्थितपदद्वयमान-जातीयपदान्तरस्यैव कामपदयुक्तस्य कल्पनेति न सर्वथा स्वर्ग-प्रयुक्तत्वम् ॥४।३।७॥

काम्ये॥ यत्र श्रुतब्रह्मवर्चसादिफलकेष्वपि शास्त्रस्य महा-विषयत्वाभावे स्वर्गफलकत्वकल्पना। ब्रह्मवर्चसादिकन्त्वायुरादि-पदानुपश्लिष्टकम्। तत्र किं वाच्यम्। रात्रिसत्र इति प्रकृतमन्द-विषयन्यायेन शिष्यहितार्थं परिहर्तुं सूत्रम्। फलाकाङ्क्षायाः श्रुत-पदैरेव शान्तेरुद्देश्यानेकत्वनिमित्तकवाक्यभेदप्रसङ्गाच्च न स्वर्गकल्पना। महाविषयत्वाभावस्तु विशेषश्रवणे न दोषः। आयुरादौ प्रमाण-द्वयसत्त्वादानुषङ्गिकत्वेऽपि प्रकृते तदनुपपत्तेश्च ॥४।३।८॥

सार्वकाम्यं॥ एकैकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो-ज्योतिष्टोमः, एकैकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो-दर्शपूर्णमासाविति श्रुताभ्यां वचनाभ्यां संयोगपृथक्त्वन्यायेन सर्व-फलार्थत्वम्। न तु तत्तत्प्रकरणस्थगुणकामानामपि दर्शादिप्रयोज्य-त्वात्तदभिप्रायेणानुवादत्वम्। वैयर्थ्यादौपचारिकत्वाङ्गीकारे ताद-र्थ्यस्य प्रमाणाभावाच्च। अतोऽप्राप्तार्थत्वादेव विधिभावनावाचि-

तदा तेषां कामनाऽभावेऽप्यायुरादिवदुत्पत्तौ नैव किञ्चिद्बाधकम् । वस्तुतस्तु सर्ववाक्यस्याभ्युदयशिरस्कत्वेनाप्युपपत्तेरर्थवादस्य च साधनसमुच्चायकत्ववन्मुख्यत्वसमुच्चायकत्वस्याप्युपपत्तेरिदं मतमुपेक्षितमिति पूर्वोक्तयुक्त्यैव सर्वोत्पत्तिः । अस्तु वा 'अकाम्यमानस्यानुत्पत्तिः' । तथापि यत्र द्विरात्राणामेव फलानां कामना, तत्र तावतामुत्पत्तिः केन वार्यते । न चायमेव सिद्धान्त इति तत्रभवतोक्तं युक्तम् । भाष्यादिस्वकथनेनापसिद्धान्तात् ।

अत एव यद्यप्यनुपस्थितत्वान्न पुत्रत्वादिकमुद्देश्यतावच्छेदकम् । सर्वशब्दस्य विशेष्यसाकाङ्क्षत्वाच्च सर्वत्वमपि । अपि तु पूर्ववाक्ये कामशब्दोपादानात्तस्यैव सर्वशब्देन सर्वनाम्ना परामर्शात्कामनाविषयत्वमेवोद्देश्यतावच्छेदकं कार्यतावच्छेदकं चेत्याश्रीयते । तदापि यत्र समूहालम्बनात्मिकाऽनेकविषयिणी कामना, 'तत्र तावतामुत्पत्तिरनिवार्यैवेति प्राप्ते ।

उक्तयुक्त्या प्रवृत्तिप्रयोजककामनाविषयत्वमेवोद्देश्यतावच्छेदकम् । अनुष्ठानोत्तरकालभाविकामनाविषयत्वावच्छिन्नोत्पत्तिवारणाय प्रवृत्तिप्रयोजकतया कॢप्ताया एवोद्देश्यतावच्छेदककोटिप्रवेशार्थं प्रवृत्तिप्रयोजकेति कामनाविशेषणम् । अतश्चानुष्ठानोपक्रमे या कामना तद्विषयत्वावच्छिन्नस्यैकस्यैवोत्पत्तिर्नान्यस्य ।

न च समूहालम्बनस्थले विषयताया व्यासज्यवृत्तित्वादनेकोत्पत्तिप्रसङ्गः । समूहालम्बनज्ञान इव समूहालम्बनेच्छायामपि प्रत्येकविषयत्वस्यावश्यकत्वात् । इतरथा तादृशकारणात् समूहालम्बनात्मकयोरेव स्मृतियत्नयोरुत्पत्त्यापत्तेः । अत एककार्यताव-

तत्र सर्वं । एकस्मिन् प्रयोगे किं सर्वाणि फलान्युत्पद्यन्ते उतैकमिति चिन्तायाम् । सर्वस्यैवोद्देश्यतावच्छेदकत्वेन कार्यतावच्छेदकत्वात्कारणेन च तदवच्छिन्नोत्पत्तिनियमात्सर्वाण्युत्पद्यन्ते । अस्तु वा तच्छब्दादाविव पुत्रत्वादिनैवोद्देश्यता । सर्वत्वस्य तद्विशेषणत्वादविवक्षितम्। तथाप्येकस्मिन् प्रयोगे कारणसत्त्वात्सकलकार्योत्पत्तौ बाधकाभावः । न ह्येकं कारणं कार्यद्वयं नोत्पादयति । एकस्माद्यपि* घटाद्रसरूपक्रियाद्यनेकोत्पत्तिदर्शनात् ।

एककार्यतावच्छेदकावच्छिन्नोत्पत्तौ तदवच्छिन्नान्तरस्यानुत्पत्तिदर्शनात्तु पुत्राद्यन्तरस्योत्पद्यताम् । कार्यतावच्छेदकान्तरावच्छिन्नस्य तु पश्चाद्युगपत् क्रमेण वोत्पत्तौ बाधकाभावः। न च सर्वेषां युगपत्कामनाऽभावादनुत्पत्तिः । कामनायाः कर्माङ्गत्वे फलं प्रति जनकत्वे वा प्रमाणाभावेन तदभावेऽप्युत्पत्तौ बाधकाभावात्। प्रवृत्तिं प्रति परं फलेच्छायाः कारणत्वादन्यतरफलेच्छामात्रेण प्रवृत्तौ जातायां कारणसत्त्वेन सर्वकार्योत्पत्तौ न किञ्चिद्बाधकम्। अतएव विषयगतसमीहितसाधनत्वमप्यन्यतरसमीहितत्वबोधनेनोपपन्नम् । न च सर्वफलोत्पत्तौ तेषां भोक्तव्यत्वेन मोक्षानुपपत्तिरिति तन्त्रसारोक्तं युक्तमिति वाच्यम् । ज्ञानेन तत्पूर्वाणां नाशात् ।

यद्वा स्वर्गवाक्यवैयर्थ्यापत्तेस्तस्यैव मुख्यफलत्वम्। अन्येषां त्वेकैकस्मै कामायेत्यर्थवादादन्ये क्रतव एकैकस्मै, अयन्तु नैकैकस्मा एव, किन्तु सर्वेभ्योऽपीत्यर्थावगतेरानुषङ्गिकत्वमिति तन्त्रसारोक्तमाश्रीयते ।

---

* इत्थमेव पाठः सर्वत्र। एकस्मादपि,—इति तु भवितुमुचितम् ।

भोगप्रतिबन्धकदुरितसत्त्वे तु आमुष्मिकत्वम् । तदभावे लैहिकत्वमेव । न च कर्मणां शरीरान्तरारम्भद्वारैव फलसाधनतेत्यत्र किञ्चिन्नियामकमस्ति । येन केवलामुष्मिकत्वं भवेत् । न चैषां केवलैहिकत्वम् । इह जन्मनि पुत्रपश्वराज्यादिसत्त्वे तद्योग्यत्वे वा जन्मान्तरे तन्मे स्यादिति कामनाया दुरपह्नवत्वात् । अतो मुमुक्षुणाऽपि पश्वाद्यर्थं चित्राद्यनुष्ठेयमेव । यत्र तु वृष्ट्यादावैहिक्येव कामना, तत्र केवलैहिकत्वम् । अस्तु वा वृष्ट्यादेरपि तादृशकामनासत्त्वे उभयरूपत्वम् । केवलैहिकत्वं तु पुत्रगतपूतत्वाद्यर्थवैश्वानरीयादौ च द्रष्टव्यम् ॥४॥३॥१२॥

समवाये ॥ अग्निं चित्वा सौत्रामण्या यजेत, वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेत्यग्नि-वाजपेयप्रकरणे श्रुतम् । तत्र प्रकरणान्तरन्यायेन प्रसिद्धसौत्रामणी-बृहस्पतिसवापेक्षया कर्मान्तरमेव तत्तद्धर्मकं अग्नि-वाजपेय-पूर्वकालत्वविशिष्टं विधीयते । तस्य च फलापेक्षायां प्रकरणादिनाऽग्नि-वाजपेयाङ्गत्वमविवादमेवेति तत्तत्प्रयुक्तत्वं तत्तत्कर्मान्तरस्य । समानेऽपि बृहस्पतिसवाद्यतिरिक्ताङ्गविशिष्टवाजपेयादिप्रयोगे तदुत्तराङ्गमिदं फलानुकूलयोग्यतायाः परमापूर्वनिष्ठाया जननार्थं न विरुध्यते ।

अत्र च पूर्वपक्षो निर्वीर्योऽभिगतार्थश्चेति नातीव तत्रादरः । तत्तदधिकरणादे प्रयोजनमात्रं तु शिष्यहितार्थं कथ्यत इति द्रष्टव्यम् । एवं यत्राप्यन्यत्र पूर्वपक्षानुक्तिः, तत्रेदमेव प्रयोजनम् ॥ ॥४॥३॥१३॥

उभयार्थे ॥ दर्शपूर्णमासयोः, सत्त्वाय पौर्णमासीं वैमृधमनुवर्त्त-

च्छेदकावच्छिन्नस्यैवोत्पत्तिनियमादेकमृदादिभ्यो घटान्तरानुत्पत्तिवत्कर्मान्तरस्याप्यनुत्पत्तिरित्येकप्रयोगे एकमेव फलम् ।

निमित्तस्नाने च तस्यैव प्रवृत्तिप्रयोजकत्वात्पापक्षयकामनायास्तत्राभावेन पापक्षयप्रयोजकविधकार्यतावच्छेदकावच्छिन्नत्वाभावेन युगपन्नित्यकाम्यप्रयोगे पापक्षयेण सह स्वर्गादिफलोत्पत्तावपि न क्षतिः ।

अत एव स्वातन्त्र्येण यच विविदिषापरमेश्वरप्रीत्याद्यर्थत्वेन सत्त्वशुद्धिफलत्वेन यज्ञानुष्ठानं, तत्र कारणत्वेन स्वर्गाद्युत्पत्तौ प्रसक्तायां, त्वत्प्रीत्या कर्मफलत्यागमहमित्यादि कृत्वा फलान्तरद्वेषस्यापि तदङ्गत्वेन विधानात्स्वर्गादिफलाभावविशिष्टविविदिषादेरेव वा, अकामः सर्वकामो वेत्यादिना फलत्वाभिधानात् न तदुत्पत्तिः । सार्वकाम्यवाक्येन यथाद्यन्यतरत् स्वर्गवाक्येन स्वर्ग इति च दृष्टमेव । इदमपि च स्वर्गवाक्यस्य प्रयोजनमित्यपि ध्येयम् । प्रयोजनं, तत्स्कामोऽपि ॥४॥३॥१९॥

एवं वा—

स्वर्गस्त्वामुष्मिक एव ।

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥

इति वाक्यशेषावगतनिरतिशयप्रीतिरूपस्य तस्येह जन्मन्यसम्भवात् । तथा च जदादौ* देहविशेषभोग्यत्वमपि ध्येयम् । पशुपुत्रादीनां नैहिकामुष्मिकत्वम् । न तु केवलामुष्मिकत्वम् । तथापि

* इदमत्र बोध्यम् । तत्र जदादौ—इति तु सम्योचितं प्रतिभाति ।

कालक्रमयोराधानात्। अतोऽमावास्याविकारेष्वतिदेशः प्रयोजनम्। यदा तु पार्वणहोमवदस्यापि विकृतावतिदेशो नेष्यते, तदा षष्ठ्ये उभयोरुल्लेखः, सिद्धान्ते पौर्णमासस्यैवेति द्रष्टव्यम् ॥४॥२॥१४॥

अनुत्पत्तौ । सोमे, प्रहृत्य परिधीन् हारियोजनं जुहोति, आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीति श्रुतम्। तत्र प्रकरणात्तावद्-द्वितीयया परिधिसंस्कारकम्। परिधयश्च यद्यपि न सोमयागाङ्गं, तथापि तदङ्गभूतसवनीयाद्यङ्गत्वेन प्राप्ता एवेति तेषां फलवत्त्वम्। अतश्च हारियोजनस्यापि यद्यपि नेदमुत्पत्तिवाक्यं, तथापि तदुत्पत्तिवाक्ये फलाश्रवणात्तस्य परिधिप्रहरणाङ्गत्वम्। यद्यपि चायं सोमयागाभ्यास एव, तथाप्येतदभ्यासस्य परिधिप्रहरणाङ्गत्वम्। अभ्यासान्तराणां स्वर्गादिफलेऽपि उद्गातृपत्नीच्छेदनिमित्त-पुनःप्रयोगस्येव न विरुध्यते।

एवं द्वितीयवाक्ये अनूयाजा यद्यपि न सोमयागे प्रकृताः, तथापि तदङ्गसवनीयाद्यङ्गत्वेन सम्ब्येव फलवन्तः। आग्निमारुतश-स्त्रस्य तु यागकप्रकरणात्[1] क्रत्वङ्गत्वं कल्प्यते, तावद्वाक्येनैवानूयाजाङ्गत्वम्। न वा तत्र वैमृधवत्पदान्तरकल्पनाऽपि। अङ्गभूतकालविधेयत्वेनैवाङ्गत्वोपपत्तेः। न च वैमृधवदस्याप्युत्पत्तिवाक्यत्वादुत्पत्तिवाक्ये च फलाकाङ्क्षायां प्रकरणात् क्रत्वङ्गत्वकल्पनेति सूत्रोक्तं युक्तम्। उत्पत्तिवाक्ये तदपेक्षायामपीष्टसामान्यस्य भाव-

(१) इत्ययमेव पाठः सर्वत्र। मम तु, यावत्,प्रकरणात्,—इति पाठः प्रतिभाति।

यतीति श्रुतोवैमृधोऽपि प्रकरणादुभयोर्दर्शपूर्णमासयोरङ्गम् । न च वाक्येन पौर्णमासीमात्राङ्गत्वावगमः । वाक्यस्य पौर्णमासीपदस्य ल्यप्प्रत्ययोपात्तकालप्रतियोगिसमर्पकत्वात्समाप्तिविशेषणत्वेनाङ्गिपरत्वाभावात् । तत्त्वेऽपि वा समाप्तेरितिपदस्य साकाङ्क्षताऽऽपत्तेः । न च फलायेत्यायामङ्गार्थमप्युपात्तस्योपस्थितत्वाद्यागविप्रतिपत्तावस्तद्वाचकपदान्तरकल्पनया पौर्णमासीमात्राङ्गत्वमिति वाच्यम् । प्रयाजादिवत्प्रकरणेनोभयार्थत्वक्लृप्तौ श्रुत्याभिभूतिवदेव पदान्तरकल्पनाऽनुपपत्तेः । अत स्वतन्त्रकालविधानात् पौर्णमास्युत्तरमेव तद्दिने क्रियमाणोऽयमुभयाङ्गमुभयप्रयुक्त इति प्राप्ते ।

प्रयाजेष्वक्लृप्तश्रुत्याभिभूतौ कल्पने गौरवात् युक्त विलम्बोपस्थितस्यापि क्लृप्तकल्पकारस्यैव बाधनम् । प्रकृते पौर्णमास्युपकारस्यापि क्लृप्तलाघुक स्ववाक्योपस्थितपदकल्पनया वाक्येनैव तन्मात्रार्थत्वम् । अतश्च पौर्णमासीप्रयोगसमाप्त्युत्तरकालविशिष्टं कर्मैव पौर्णमास्युद्देशेन विधीयते । न चैव तथापि विहितत्वादनियमेन च इष्टेति प्रथमेन वा अमावास्याकालकल्पत्ति । अनुशब्देन पौर्णमास्यानन्तर्यस्यापि विधेयत्वेन तद्बाधात् । न चैवमप्यनुनिर्वाप्यदेविकाहविर्वत् प्रधानमात्रोत्तरत्वस्यैवापत्तेः प्रयोगबहिर्भावानापत्ति । सम्भाव्येत्यस्य वैयर्थ्यापत्तेः यच्चक्रुयात्तद्यादिति दक्षिणाभेदाम्नानाच्च, प्रयोगभेदस्य सद्भर्ये वक्ष्यमाणत्वात् ।

उपयोगस्तु परमापूर्वजननानुकूलायां फलानुकूलायामेव वा समुदायापूर्वनिष्ठायां योग्यतया द्रष्टव्यः । प्रयोजनं पूर्वपक्षे अमावास्याया तन्त्रमध्ये वैमृध कार्य इति तन्त्रसारः । तत्र स्वतन्त्र-

विधेयपूर्वकालविशेषणतया विधानम्। न चात्र वाक्यभेदः। परस्परान्वयस्य व्युत्पन्नत्वादिति प्राप्ते।

सर्वेभ्यो दर्शपूर्णमासावित्यादौ आख्यातसमानाधिकरणत्वेन यत्रहितपरामर्शकत्वस्य कौस्तुभादौ स्थापितत्वात्कर्मान्तरत्वानुपपत्तेः स्वफलप्रयुक्तदर्शपूर्णमासपूर्वकालत्वस्यैव सोमयागोद्देशेन विधानमिति कालार्थ एवायं संयोगः। प्रयोजनं, पूर्वपक्षे सोमारम्भात् पूर्वस्मिन् पर्वणि दर्शपूर्णमासधर्मकं कर्मान्तरं सद्यस्कालं कृत्वा स्वकाले दर्शो वा पूर्णमासो वा कार्यः, सिद्धान्ते नेति ॥४॥३॥
१६॥

फलसंयोगः॥ वैश्वानरेष्टिन्यायेन पूतत्वाद्यर्थवादिकफलार्था। सत्यपि निमित्तसंयोगेनाकरणे प्रत्यवाये भावनाभाव्यत्वेन पापक्षयापेक्षया पूतत्वादेरेव लघुभूतस्याश्रयात्।

सा च पुत्रगतपूतत्वादिफलप्रयुक्ता सा, उत कर्तृगतपूतत्वादिप्रयुक्तेति चिन्तायाम्। विधानात् कर्तृसमीहितस्यैवाक्षेपादा-धामगतात्मनेपदेन चाग्निसंयोगफलस्याधानगामित्वावगतेरिष्टिकर्तुरेव फलम्। न च यस्मिन् जाते इत्यादिना धर्मिग्राहकप्रमाणेन पूतत्वादेः पुत्रगतत्वावधारणः। तस्यापि स तेजस्वीति सर्वनाम्ना निर्वपतिकर्तुरेव समानाधिकरणविभक्तिनिर्दिष्टस्य परामर्शेनाविरोधित्वादिति प्राप्ते।

यच्छब्दसमभिव्याहारे सति तच्छब्दस्य तदर्थपरामर्शित्वनियमेन पुत्रगतपूतत्वादेरेव फलत्वावगमात्तस्यापि कर्तृसमीहितत्वेन विध्यात्मनेपदयोरविरोधात् पुत्रगतपूतत्वादिप्रयुक्तैव सा। प्रकरणे

समङ्गीकृत्य वाक्यान्तरेण विनियोगोपपत्तौ दुर्बलप्रमाणेनाङ्गत्वकल्प-नाऽनुपपत्तेरिति प्राप्ते ।

हारियोजनस्य तावज्ज्योतिष्टोमत्वेनैव स्वर्गादिरूपस्य फलस्य क्लृप्तत्वात् वैश्वदेव्यायेन पदान्तरकल्पनया प्रकरणाङ्गत्वे प्रमाणमस्ति। आग्निमारुतस्य यद्यपि विप्रिय्य वाक्येन न क्रत्वङ्गत्वम्, तथापि द्वादशस्तोत्रोऽग्निष्टोम इत्याद्यनन्यथासिद्धलिङ्गोपष्टम्भप्रकरणवशेनैव क्रत्वङ्गत्वमतावे वाक्येनाङ्गत्वकल्पनाऽयोगात् ।

वस्तुतस्तु, प्राप्तानूयाजोद्देशेनोर्ध्वत्वस्याग्निमारुतस्य च विधौ वाक्यभेदापत्तेः परस्परान्वयवादिनां प्राचामपि विशेषणविधि-कल्पनागौरवापत्तेर्नानेन वाक्येनाग्निमारुतस्यानूयाजाङ्गत्वेन विधा-नम् । अत एवाग्निमारुतादूर्ध्वमित्यत्र पदद्वयेन लक्षणया तत्प्र-तियोगिकोर्ध्वकाल एवानूयाजोद्देशेन विधीयते । दर्शपूर्णमा-साभ्यामिष्ट्वेत्यादौ तु प्रतीयान्तस्योद्देश्यत्वेनान्वयाच्च लक्षणेति ध्येयम् ।

वस्तुतस्तु, न प्रकृतेऽपि लक्षणा, तां चतुर्भिरितिवदिष्टिप्रष्ट-भावनाबोधेऽप्यूर्ध्वत्वमात्रविधिकल्पतया विधेयानेकत्वाभावात् । प्रयो-जनं, पूर्वपक्षे मत्रयोविकारे सोमयागानङ्गे हारियोजनाग्निमा-रुतयोः करणं, सिद्धान्ते नेति ॥४।३।१५॥

उत्पत्ति ॥ सोमप्रकरणे एव, दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति श्रुतम् । तत्र यद्यपि फलार्थतया सोमयागस्य क्लृप्तत्वात् प्रकृते प्रत्यभिज्ञानवत्त्वेन न कर्मान्तरत्वशङ्का, तथापि प्रकरणान्त-रन्यायेन दर्शपूर्णमासधर्मकस्यैव कर्मान्तरस्य पयस्सोमयागोद्देशेन

प्रत्यवायस्तु कर्त्तृनिष्ठ एव। प्रयोजनं, पुत्रमरणेऽपि जातेष्टिः पितरि फलिसंस्कारार्थ पूर्वपक्षे, सिद्धान्ते नेति ॥४॥३॥१७॥

एवं वा—

इयमिष्टिः पुत्रजननानन्तरमेव कार्या सप्तम्या जननस्य निमित्तत्वावगमेन निमित्तानन्तरं नैमित्तिकस्योचितत्वात्। न चात्र सप्तम्या जननोत्तरकालविधिरिति तन्त्ररत्नोक्तं युक्तम्। पुत्र इति सामानाधिकरण्यानुपपत्तेः। जातोऽभिव इतिवन्निमित्तपरैव सप्तमी। सापेक्षत्वाच्च हविरार्त्तिन्यायेनोभयविवक्षा। यद्यपि पुत्रमात्रं निमित्तं स्यात्तथापि निमित्तानन्तर्यलाभेन नैमित्तिकस्याप्यौत्सर्गिककालबाधेनाप्यनन्तरमेव करणम्।

न च स्तन्यपानाभावे पुत्रमरणेन श्रुतिविरोधापत्तिः। जातकर्माङ्गभूतस्य घृतमधुप्राशनपूर्वकस्य वैधप्राथमिकदक्षिणस्तन्यप्राशनस्यौत्तरकालिकत्वेऽपि रागतोयत्किञ्चित्प्राशनस्य सम्भवेन मरणानापत्तेः। न च जननानन्तर्यस्य जातकर्मण्यप्यावश्यकत्वादविनिगमनाविरहः। प्रत्यक्षश्रुतिविहितत्वस्यैव विनिगमकत्वादिति प्राप्ते।

जातकर्मणो नालच्छेदपूर्वभावविधानात्, अच्छिन्ननालस्य च प्राशननिषेधादिष्टेर्जननानन्तरमेव करणे मरणापत्तेः श्रुतिविरोधापत्त्योत्कर्ष एव। तच्च निमित्तश्रुत्यनुरोधेन स्मार्त्तनिषेधस्याभाहिताग्निपरत्वम्[1]। भूतनिमित्तत्वे निमित्तस्य नैमित्तिकानुष्ठाप-

---

(१) इत्थमेव पाठः सर्व्वत्र। मम तु, ततश्च निमित्तश्रुत्यनुरोधेन स्मार्त्तनिषेधस्यानाहिताग्निपरत्वम्,—इति पाठः प्रतिभाति।

अथ चतुर्थस्याध्यायस्य

चतुर्थः पादः।

प्रकरण ॥ राजसूयप्रकरणे, इष्टिपशुसोमयागा अयागाश्च होमविदेवनादयः सर्वे फलाकाङ्क्षा अपि श्रुतेन न स्वाराज्येन फलेन सम्बध्यन्ते। भावार्थाधिकरणन्यायेन यजेरेव फलभावना-करणत्वादयागानामङ्गत्वोपपत्तेः। राजसूयपदस्य यजिसामाना-धिकरण्येन तन्नामत्वाच्च। न च राजा सोमः सूयतेऽभिषूयते अस्मिन्निति व्युत्पत्त्या राजसूयशब्दस्य सोमयागमात्रवाचित्वात्तेषा-मेव फलसम्बन्धोऽस्त्विति वाच्यम्। राज्ञा क्षत्रियेण सूयते निष्पाद्यत इति व्युत्पत्त्या सर्वेष्वनुपपन्नत्वेन(१) यजिसङ्कोचे प्रमा-णाभावात्। अत एव राजा क्षत्रियः सुनोति स्नाति यत्रेति व्युत्पत्त्याऽभिषेचनीय एव तन्माहेन्द्रस्तोत्रकालाभिषेकवत्त्वसम्बन्धेन राजसूयपदप्रसिद्धेस्तस्यैव फलसम्बन्ध इत्यपास्तम्। उक्तव्युत्पत्त्या सर्व-परत्वसम्भवे यजिसङ्कोचे प्रमाणाभावात्। अतः सर्वे यागा एव फलप्रयुक्ता इति विदेवनादीनामतद्विकृतावतिदेशः ॥४॥४॥१॥

मध्यम ॥ विदेवनादीनामङ्गत्वे सिद्धे सन्निधानाद्वान्तरप्रक-

(१) असमीचीनोऽयं पाठः सर्वेष्वप्युपपन्नत्वेन,—इति तु समीचीनं प्रतिभाति।

इति तृतीयया च दृष्टस्तिमवत्य तद्बुद्धिर्भावावगतेस्तत्र प्रद्-
वित्थभावात्कालापेक्षाया नामातिदेशप्राप्तमन्त्रादिकालबाधे प्रमा-
णाभाव । एवं योजनामपि पर्वबाधे । अग्नि चिन्वेयनेन हि
चयनेन फलपूर्वसाधनीभूताग्नि सञ्जात्येत्यर्थावगतेस्त्वग्नचयनभाव-
नोत्तरकालत्वसिद्धि । न चानुपयोग । चयनप्रयोज्यफलपूर्वं एवो-
पयोगेऽपि चयनाङ्गत्वोपपत्ते । न लैतावता फलाङ्गत्वमिति तन्त्रवा-
र्त्तोक्त मन्तव्यम् । प्रमाणाभावात् । फलाङ्ग वा चित्यङ्गत्वेनोपपद्यत-
इति सङ्क्षेपस्तूत्र फलपूर्वोपयोगाभिप्राय व्याख्येयम् । अत एतेऽपि
कालप्रयोजका ॥४ ३।१८॥

इति श्रीखण्डदेवविरचिताया भाट्टदीपिकायां
चतुर्थस्य तृतीय पादः ॥

भावेऽपि सन्निधानादेव तदङ्गत्वोपपत्तेः । प्रयाजानां पुरस्तादुह्याद्बहिरात्मनः प्रजातानां दध्यादनूयाजानामुपरिष्टादुह्यात् स्वर्गलोकमपक्रामेन्मध्ये जुहोतीति प्रकृताङ्गमध्यवर्तित्वश्रवणादपि तदुपपत्तेश्च ।

वस्तुतस्त्वाकाङ्क्षाऽनुत्पत्तौ प्रमाणाभावान्नेदं प्रकरणमिति ध्येयम् । एवं प्रयोजनवत्त्वोपपत्तौ न ग्रामकामपदानुषङ्गेण स्वतन्त्रफलार्थत्वकल्पना । प्रमाणाभावात् । रथाङ्गपरिधिपरिधानाङ्गभूतत्वे वैशेषिकमन्त्रार्थवादाच्च । अतः सांग्रहणीप्रयुक्ता एव ते । न तु सौम्यवत्फलप्रयुक्ताः । अतः सर्वदैव प्रयाजानूयाजमध्ये कर्तव्या न तु ग्रामान्तरकामनायामेव ॥४॥४॥४॥

दधिग्रहः ॥ सोमे, यो वै कश्चिदध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्मा आवृश्च्यते प्राजापत्यं* दधिग्रहं गृह्णातीति दधिग्रहो नैमित्तिक एव । यद्यपि चायं यच्छब्दो न निमित्तत्वप्रतिपादकः, देवतापदसमभिव्याहृतस्य तस्यान्तरायनिष्ठनिमित्तत्वाप्रतिपादकत्वात् । देवतायाश्चान्तरायान्वितायानित्यायाः स्वरूपेण निमित्तत्वायोगाच्च । तथापि देवतान्तरायनिमित्तदोषपरिहारफलत्वावगमात्तस्य च कादाचित्कत्वान्नैमित्तिकत्वम् । अर्थवादान्यथार्थं यदा तदा पदार्थाहारस्यावश्यकत्वाद्वा नैमित्तिकत्वम् । ज्येष्ठो ह वा एष ग्रहाणां यद्दधिग्रह इति तु वैगुण्यपरिहारार्थत्वेनापि श्रेष्ठत्वादुपपन्नमिति प्राञ्चः ।

---

* तस्मा आवृश्च्यते यत्प्राजापत्यं,—इति भाष्यधृत पाठः

रणादाऽभिषेचनीयमात्राङ्गत्वस्य तृतीये एव निराकृतत्वात्सर्वराजसूयाङ्गत्वेनैव महाप्रकरणादवगतेः सर्वप्रयुक्तत्वम्। तार्त्तीयाधिकरणप्रयोजनकथनार्थमेवेदमधिकरणम् ॥४॥४॥१॥

प्रकरणविभागे॥ राजसूये एव, सौम्यश्चरुर्भवतीति विधाय, पुरस्तादुपसदां सौम्येन प्रचरतीति श्रुतम्। तत्रापि सत्युपसदां राजसूयान्तर्गतदशपेयाख्यसोमयागाङ्गतया सन्निधाने यद्वा. पुरस्ताच्छब्दवैयर्थ्यप्रसङ्गेन पञ्चम्यर्थप्रत्यये नेति सूत्रानुसारात् दिग्योगनिमित्तायाश्चाऽऽर्थपरत्वाभावात्सौम्यस्यैतदर्थत्वानुपपत्तेर्वैश्वधत्वप्रद्वान्तरकल्पनया तदर्थत्वस्य चोत्पत्तिवाक्यतयाऽनुपपत्तेरुत्पत्तिवाक्ये च फलापेक्षायां सामान्यविधिनाऽपि क्लृप्तेन स्वाराज्यफलार्थत्वस्यैवावबोधात्स्वकामार्थ एव प्रयोगः।

वस्तुतस्तु, उत्पत्तिवाक्येऽपि प्रवर्ग्यन्यायेन सन्निहितफलवत्त्वज्ञानस्य स्वाराज्यवाक्याधीनत्वात्तदर्थत्वमेव युक्तम्। अत्र सौम्य उपसत्प्रयुक्त एव पाठक्रमात् अपूर्वपठितकर्मानन्तरं कर्तव्यत्वेन प्राप्नोति देशप्राप्तोपसत्पूर्वं विधीयते। ततश्च न तद्विकृतौ कर्तव्यः। पूर्वपक्षास्यापि तद्विकृतौ कर्तव्यता प्राप्ताऽपोद्यत इति सङ्गतिः। तेन सङ्गत्यभावादिदमधिकरणं विद्वेषाधिकरणात् पूर्वं द्रष्टव्यमिति तन्त्ररत्नोक्तिः परास्ता। आचार्याभिमतमिति केचित्तत्त्वनुपलब्धिबाधितैव ॥४।४।२॥

फलवत्ता॥ वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकाम इति प्रकृत्याऽऽमनमस्याऽऽमनस्य देवा इति तिस्र आहुतीर्जुहोतीति श्रुतम्। तत्राऽऽमनहोमानां सांग्रहण्यङ्गत्वम्। तत्प्रतिनिमित्तेन प्रकरणा-

मित्तिकैव। यत्तूपसंहारे प्रष्ठीमिति षष्ठ्यां पूरणार्थेकः प्रत्ययः, सोऽभिधानापेक्षो न त्वनुष्ठानापेक्षः। षष्ठ चितयः पूर्वमभिहिता इदानीमियं षष्ठ्यभिधीयत इति। तस्मादग्निचयनोत्तरमप्रतिष्ठायां निमित्ते एकैव चितिरियमदृष्टार्था, चयनाङ्गतया प्रयोगभेदेन प्रतिष्ठाफलार्थतया वा विधीयते ॥४॥४॥७॥

पितृयज्ञः॥ अनारभ्य श्रुतममावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति। तत्रायं पिण्डपितृयज्ञः दर्शाङ्गम्। अमावास्यापदेन कर्मवाचिना तत्र कर्त्तां जुहुयादितिवदाकाङ्क्षादर्शाङ्गत्वप्रतीतेः। यद्यपि चायं कालेऽपि मुख्यस्तथापि कालकल्पनाभिया अत्र कर्मपरत्वमेव युक्तम्। यद्यपि काले एव मुख्यः कर्मणि तद्योगाल्लि-क्षणा, प्रकृते च कालपर एव अपराह्णसामानाधिकरण्यात्। तथापि तस्माप्पितृभ्यः पूर्वेद्युः करोतीति वाक्ये दर्शेष्टिपूर्वेद्युः-कालग्रहणादेकवाक्यन्यायेन दर्शेष्टेरुपस्थितत्वात्तदङ्गत्वमिति प्राप्ते।

अमावास्याशब्दस्य कर्मपरत्वं भवतैव निराकृतम्। लक्षणा तु प्रमाणाभावात्कालसामानाधिकरण्यविरोधाच्च दूरापास्तैव। पूर्वेद्यु-र्वाक्यमपीष्टेरनुपस्थितत्वाच्च तत्प्रतियोगिकं काल विधत्ते। अपि च निषिद्धे पूर्वेद्यु कालम्,

यथा ऽच्छ अविता याति पितरस्तामुपासते।

इति स्मृतिप्राशमनूद्य देवतामाचम्। केचित्तु देवे चन्द्रदर्शनात् पूर्वेद्युरिति व्याख्याय खण्डपर्वणि परेद्यु पितृयज्ञमनुतिष्ठन्ति।

सर्वथा न दर्शाङ्गं पितृयज्ञ। एवञ्च पौर्णमास्यामेव यजेत भ्रातृव्यवतामामावास्यां हत्वा भ्रातृव्यममावास्यया यजेत पिण्ड-

यूपं परिव्ययतीति श्रुतेन वचनेन पशुचषालसाधारणयूपपरिव्याणा-पेक्षया यूपपरिव्याणान्तरं मन्त्रनीयाङ्गतया प्रकरणान्तरन्यायेन दार्ढ्यप्रयोजनक[1] विधीयते । आश्विनोत्तरकालता उपनिष्क्रमणस्य पाठादर्थाच्च प्राप्तमनूद्यत इत्युक्तमेव । अतश्चाश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोतीति वाक्ये पुनः श्रुतं परिव्याणं न यूपसंस्कारार्थम् । वैयर्थ्यापत्तेः । किन्तु यूपमिति द्वितीया सप्तम्यर्थे । परिवीयेत्यस्य कर्माकाङ्क्षायां पशुमित्यस्यानु-षङ्गः । तथा च त्रिवृत्करणक-यूपाधिकरणक-पशुसंस्कारक-परि-व्याणोत्तरकालविशिष्टयागविधानात्पश्वर्थमेव परिव्याणं पश्वप-क्रमणार्थमिति प्राप्ते ।

द्वितीयया परिव्याणस्य दृष्टविधयैव यूपार्थत्वे सम्भवति लक्ष-णाऽनुषङ्गयोः प्रमाणाभावः । न च वैयर्थ्यम् । रशनाधर्माणां दर्भमयीत्वादीनां एतत्परिव्याणसाधारण्यसिद्ध्यर्थमनुवादत्वस्य तृतीये साधितत्वात् । अन्यथा रशनाधर्माणामौपवसथ्येऽहन्यनुष्ठीयमानयू-पपरिव्याणाङ्गत्वेनैवानुष्ठानमात्रादेशाद्दापत्तौ अप्राकृतकार्यतत्परिव्या-णार्थत्वासिद्धेः । सति तस्मिन् त्रिवृत्करणकयूपपरिव्याणानुवादत्वे-नैव प्रकृतयागीययूपव्यक्तिसम्बन्धिपरिव्याणमात्रस्यैवोद्देश्यत्वाऽवगमा-त्साधारण्यसिद्धिः । अस्तु वा निर्वपतिवदेव प्रकृतिलिङ्गसादृश्येन प्राकृतपरिव्याणातिदेशसिद्ध्यर्थमस्मिन् यूपपरिव्याणे त्रिवृत्त्वानुवादः । सर्वथा न परिव्याणं पशुसंस्कारार्थम् । प्रयोजनं, यूपे दैर्घ्यस्यमन्त्वेऽपि

(१) यूपस्य दृढत्वसम्पादकमित्यर्थः ।

पितृयज्ञेनैवामावास्यायां प्रीणातीति दर्शेष्ट्यभावेऽपि पिण्डपितृयज्ञदर्शनं सङ्गच्छते। एतद्बलेनैव पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानो देवेभ्यः प्रतनुत इत्यादि पिण्डपितृयज्ञार्थवादे यज्ञोपक्षितावपि न क्षतिः । यत्तु,

न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः ।

इति मनुवचनम् । तच्छ्राद्धं कृष्णपक्षश्राद्धं दर्शेनामावास्यया विनाऽऽहिताग्नेर्न भवति यथाऽनाहिताग्नेरिव तिथ्यन्तरेष्विति व्याख्येयम् । न तु दर्शेष्टिं विना श्राद्धं पितृयज्ञो न भवतीत्येवं व्याख्येयम् । दर्शपदे लक्षणायां प्रमाणाभावात् । तेनायं स्वार्थ इति सूत्रानुयायिनः ।

वस्तुतस्तत्करणे मन्त्रहोमहोमद्रव्यध्यायिरूपापस्तम्बादिभिः स्मरणात् ज्योतिष्टोमादिक्रतुभिस्तुल्यत्वश्रवणाच्च नित्य एवायम् । प्रयोजनं, दर्शाभावेऽपि करणम्, तद्विकारेषु च नातिदेशः ।

यत्तु भाष्यकारेण पौर्णमास्यामाधाने कृतेऽपिमावास्यायां दर्शेष्ट्यभावात् पूर्वपक्षे प्रकरणमित्युक्तम् । तद्वादशरात्रिषु पञ्चानेष्टिपक्षे चाधानोत्तरदिने पौर्णमासकालाभावे च बोध्यम् । यदा तदुत्तरदिने कालसत्त्वं पौर्णमासस्य, तदाऽऽधान एव चेष्टिमान्वारम्भणीयं पौर्णमास्याधानं कृत्वा श्वोभूते पौर्णमासेनेष्ट्वाऽपि सदर्शेष्ट्यङ्गतयैव पिण्डपितृयज्ञानुष्ठाने न कश्चिद्विरोधः ॥४॥४॥८॥

पञ्चमम् ॥ प्रतनीयमग्निधावाग्निं यज्ञं गृहीत्वोपनिष्क्रम्य*

* इत्यमेव पाठः सर्व्वत्र । निष्क्रम्य,—इति तु भवितुमुचितम् । भाष्ये तु प्राग्निं यज्ञं गृहीत्वा निष्क्रम्य पूर्वं परिश्रीयायेयं सव्याग्नेयं पश्चमुपाकरोति,—इति पठितम् ।

म्बन्धो न सोमयागस्यैव । अपि तु प्रायणीयादीनां सर्वेषामेव । यागत्वाविशेषेण सर्वेषामेव यजिना फलोद्देशेनोपादानात् । सर्वेषां ज्योतिष्टोमनामकत्वाविशेषाच्च ।

न च स्ववाक्यविहितस्यैव ज्योतिष्टोमसंज्ञकस्य फलोद्देशेन विधानादितरेषामतदङ्गत्वमिति वाच्यम् । अग्नीषोमीयाद्यपेक्षया कर्मान्तरे प्रमाणाभावात् । अत एवैतद्वाक्यविहितकर्मणोऽप्रसिद्धत्वादग्नीषोमीयाद्यनुवादेन च सोमविधानायोगात् सोमवाक्येऽपि सोमविशिष्टयागस्यैव विधानम् ।

न च विशिष्टविधिगौरवभिया लाघवसहकृतवाक्यान्तरोपात्तगुणादेव ज्योतिष्टोमवाक्येन कर्मविध्यङ्गीकारः । तथात्वेऽपि नित्यवाक्येऽपि कर्मान्तरस्य विनिगमनाविरहेणापत्तौ सोमवाक्ये एवोत्पत्त्यनुरोधेन विशिष्टविध्यङ्गीकारस्य न्याय्यत्वात् । अतश्च प्रकृतस्याविशेषाद्रागद्वयपक्षे सर्वेषां फलसम्बन्धः ।

न च तानि वा एतानि ज्योतींषि य एतस्य स्तोमा इति वाक्यशेषात्सोमयागस्यैव ज्योतीरूपत्रिवृदादिस्तोमसम्बन्धेन ज्योतिष्टोमनामकत्वमेव प्रसिद्धार्थकत्वाद्दर्शपूर्णमासपदवद्व्यवच्छेदकत्वोपपत्तेस्तस्यैव फलसम्बन्धोपपत्तिरिति वाच्यम् । एतस्यार्थवादत्वेन गौणतयाऽप्युपपत्तौ अर्थान्तरवाचिनो ज्योतिःशब्दस्य स्तोमवाचित्वाभावात् । ज्योतीरूपस्तोमाङ्गत्वस्य च फलसम्बन्धोत्तरकालीनत्वेनाविशेषात् ।

न च यद्वं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीत्यनेन वचनेन स्तोत्रोपाकरणस्य सोमग्रहणाद्यङ्गत्वावगमात् स्तोमा-

पशावपि दैरस्य पूर्वपक्षे प्रकृतौ विकृतौ च, सिद्धान्ते तु नेति ॥ ४॥४॥९॥

स्वरुश्च ॥ यूपस्य स्वरुङ्करोतीति षष्ठ्या स्वरोर्यूपार्थत्वावगमात् स्वरुणा पशुमनक्तीत्यञ्जने प्रतिपत्तिर्यत्किञ्चित् सोमलिप्तं तेनावभृथ यन्तीति वदन्ति प्राप्ते । स्वरोर्यूपार्थत्वेऽदृष्टार्थत्वापत्ते षष्ठ्याश्चाव-धवत्वेनाप्युपपत्ते स्वरुणेति तृतीयादिबलात्पश्वञ्जनार्थत्वमेव । सोम-लिप्ते च अवभृथपदे गौणत्वाद्यनेकदोषभिया तदङ्गीकरणमित्युक्त मेव । प्रयोजनं, पूर्वपक्षे एकयूपके पशुगणे एकस्यैव पशो अञ्जनं, सिद्धान्ते सर्वेषामिति । पार्थसारथिमते तु प्रयाजशेषाभिघारणन्या-येनाधारनियमस्य पशुसंस्कारार्थत्वोपपत्ते पूर्वपक्षेऽपि सर्वेषामञ्ज-नप्रसङ्गात् प्रयोजनानुपपत्तिरिति । भाष्यविरोधोऽपि ॥४॥४॥१०॥

दर्शपूर्णमासयो ॥ प्रयाजादिसर्वयागसाधारण्येन दर्शपूर्णमासाभ्या स्वर्गकामोयजेतेत्यनेन वचनेन राजसूयवचनेन न सम्बन्ध, किं त्वाग्नेयादीनां यागानामेव । दर्शपूर्णमासनाम्ना अग्नेयादिषडूयागेष्वेव प्रसिद्धार्थकेन यजेरवच्छेदात् । तथा च* दर्शपूर्णमासनाम्न प्रसि-द्धार्थकत्व, तथोपपादित पौर्णमास्यधिकरणे । तदधिकरणप्रयोज-नकथनार्थन्त्विदमधिकरण प्रयुक्तिसिद्ध्यर्थं न विरुध्यते । राज-सूयनाम्नश्च यथा प्रकृतसर्वयागपरत्व, तथा तदधिकरणे स्पष्टमेव । अतश्च प्रयाजादीनामङ्गत्वादिकृतावतिदेश ॥४॥४॥११॥

ज्योतिष्टोमे ॥ ज्योतिष्टोमेन स्वर्गकामोयजेतेत्यनेन स्वर्गफलप-

---

* इत्थमेव पाठ सर्वत्र । तथा च,—इति तु भवितुमुचितम् ।

श्रीगणेशाय नमः ।

# पञ्चमोऽध्यायः ।

## प्रथमः पादः ।



श्रुति ॥ तदेवमङ्गप्रधानसाधारण्येन प्रयोज्यवर्गेऽवगतेऽधुना प्रयोगाश्रितः क्रमो निरूप्यते । एकादशे त्वङ्गानां प्रधानानाञ्चैकेनैव प्रयोगविधिना विधानमिति वक्ष्यते । अतश्चैकविधिविषयत्वेन सर्वसाहित्यस्य विवक्षितत्वादेकेन कर्त्रा युगपत्सर्वकरणाशक्तेरवश्यम्भाविनि कस्मिंश्चित्क्रमे नियामकानि श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि प्रमाणानि निरूपयिष्यन्ते ।

तच्च क्रमो नामाव्यवहितोत्तरत्वरूपमानन्तर्यम् । तच्चैकप्रतियोगिकमेकत्रास्ति । यथा वेदं कृत्वा वेदिं करोतीत्यत्र वेदकरणप्रतियोगिकमानन्तर्यं वेदिकरणेऽस्ति । अत्र दर्शपूर्णमासोत्तरत्वस्यापि सोमाङ्गत्वात्तद्व्यावृत्त्यर्थमव्यवहितेति विशेषणम् । तत्र दर्शपूर्णमासपूर्वकालताकालमात्रं क्रत्वर्थः न त्वव्यवहितांशोऽपि ।

न च सोमविधेस्तदपेक्षा । येनाव्यधान एव तात्पर्यं व्यवस्येत । सोमविधेर्भिन्नप्रयोगविधिविधेयदर्शपूर्णमासप्रतियोगिकक्रमानपेक्षत्वात् । अतस्तत्रोत्तरकालत्वमेव विधेयं न क्रमः । क्रमस्य सर्वत्रोत्तरपदार्थाङ्गम् । तस्यैव, कथं कर्त्तव्य इत्यपेक्षणात् । न तु पूर्वपदार्थाङ्गम् । तदुत्तरं कः पदार्थः कर्त्तव्य इत्यपेक्षायाः कस्यचिदप्य-

नामपि स्वसाध्यस्तोत्रोपाकरणद्वारा सोमयागसम्बन्धावगतेर्विशेष-कत्वोपपत्तिरिति वाच्यम्। उपाकरणस्य दृष्टविधया स्तोत्रोपका-रकत्वेन द्वितीयया च स्तोत्राङ्गत्वावगमेनास्य कालार्थत्वात्।

न च कालद्वारैव सम्बन्धेन विशेषकत्वम्। कालस्य फलसम्बन्धो-त्तरापेक्षत्वात् तस्य च स्तोत्रगतफलवत्त्वज्ञानाधीनत्वात्तस्यापि च यागगतफलवत्त्वबोधकवाक्याधीनत्वेन तत्प्रवृत्तेः पूर्वमेतद्वाक्यप्रवृत्त्य-भावेनैतत्सम्बन्धानवगतेर्नास्तो विशेषकत्वाभावात्। यद्यपि च पदा-र्थानां प्राप्तत्वेनास्य वाक्यस्य क्रमविधायकत्वं स्यात्। तथापि वेदं कृत्वा वेदिं करोतीतिवच्छ्रौतक्रमविधायकत्वात्तस्य च प्रातिस्वि-कविधिविधेयत्वेनेतरक्रमवत्प्रयोगविधिविधेयत्वाभावेऽपि क्रमस्यानु-ष्ठानावगमोत्तरापेक्षत्वात्तस्य च फलवत्त्वज्ञानोत्तरकालीनत्वेनोक्त-विधया न विशेषकत्वमिति मन्ये।

कमादेरुत्तरकालमाकाङ्क्षायामपि निराकाङ्क्षत्वज्ञानाभावमात्रेण वाक्यस्य पूर्वमप्रत्युपपत्तेस्तेन च कालस्य क्रमस्य वा विधेयत्वेन विशिष्य तद्घटितसम्बन्धस्य सोमयागेऽवगमात्वाधः प्रसिद्धार्थकत्वेन तस्यैव फलसम्बन्धावगमेन प्राधान्यम्, अन्येषां च तदङ्गत्वमिति तदितरानतिदेशः। तदेवं प्रयोज्यवर्गो निरूपितः॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
चतुर्थाध्यायस्य चतुर्थः पादोऽध्यायश्च समाप्तः॥

---

मुख्याङ्गत्वम्। वेदं कृत्वेत्यादौ तु वेदिकरणस्य वाक्यान्तरेण प्राप्तत्वात् तदनुवादेन क्त्वाप्रत्ययोक्तक्रममात्रविधानाद्वाक्यादेव तदङ्गत्वम्।

यत्र तु पाठादिप्रमाणेन सम्भवत्प्राप्तिकता, धात्वर्थस्य सम्भवत्प्राप्तिकोऽपि भावार्थाधिकरणन्यायेन प्रयोजनार्थं विधीयते। तत्र क्रमबोधिका श्रुतिरप्यनुवाद एव। न तु क्रमे प्रमाणम्। विशिष्टविधिगौरवापत्तेः। यथैन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्। हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस इत्यादौ। अत्र हि ग्रहणावदानादेरेव फलार्थं हृदयादिमात्र-विषयसिद्ध्यर्थस्य विधिरिति वक्ष्यते।

यत्र तु धात्वर्थस्य क्रमप्रमाणेन प्राप्त्यभावेऽपि कथञ्चित् सम्भवत्प्राप्तिकस्य पुनर्विधाने न किञ्चित्प्रयोजनं विधेयान्तरञ्च नान्यत्किञ्चित्, तत्र क्रम एव मुख्यतो विधीयते। यथा सत्रात्मके द्वादशाहेऽध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं ततो होतारं ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति ब्राह्मणाच्छंसिनं ब्रह्मणः प्रस्तोतारमुद्गातुर्मैत्रावरुणं होतुः ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति आग्नीध्रं ब्रह्मणः प्रतिहर्तारमुद्गातुरच्छावाकं होतुस्ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति पोतारं ब्रह्मणः सुब्रह्मण्यमुद्गातुर्ग्रावस्तुतं होतुस्ततस्तमन्यो ब्राह्मणो दीक्षयति ब्रह्मचारी वाऽऽचार्यप्रेषित इति श्रुते वाक्ये। अत्र हि न दीक्षायाः स्वरूपेण तत्तत्संस्कारकत्वेन वा विधिरतिदेशप्राप्तत्वात्। प्रकृतौ हि यजमानसंस्कारार्थं दीक्षाऽतिदेशेनैव सत्रे प्राप्यते। सत्रे च ये यजमानास्त ऋत्विज इति वचनेन ऋत्विक्कार्योद्देशेन

दर्शनात्। पूर्वपदार्थस्तु प्रतियोगितया क्रमविशेषणं, दर्शपूर्णमासादि-रिव पूर्वकालतया। एतेनोभयपौर्वापर्यरूपक्रमः पदार्थद्वयाङ्गमिति केषाञ्चिदुक्तमपास्तम्। प्रमाणाभावात्। अस्तु वा प्रथमभक्ष इत्यादौ प्राथम्यं पूर्वपदार्थाङ्गमेव क्रमपदार्थः।

तत्तत्पदार्थानन्तरं तत्तत्पदार्था इत्येवमनेकपदार्थवृत्तिपौर्वापर्य-समुदायरूपविततिरेव क्रम इति तु सूक्ष्मं यतोऽग्न्याब्दलादिक्रतौ क्वचिदेकपदार्थलोपे तावत्पदार्थवृत्तिपौर्वापर्यसमुदायस्यासम्भवात्तत्-क्रमेणानुष्ठानेऽपि वैगुण्यानापत्तेरुपेक्षित।

अस्य च क्रमस्य प्रयोगैकनिष्ठत्वात् तन्निरूपणोत्तरमारम्भः। तन्नियमे च षट् प्रमाणानि श्रुत्यादीनि। तेषां लक्षणानि तत्त-न्निरूपणावसरे वक्ष्यन्ते। तत्र श्रौतः क्रमः प्रातिस्विकविधिना-विधीयते, आर्थादिक्रमास्तु प्रयोगविधिनैवेति सूत्रानुयायिनः। वस्तुतस्तु श्रौतक्रमस्यापि क्त्वादिनाऽवगतेरुत्पन्नस्य वाक्येन विनियोगः। क्रमान्तरे त्वर्थादिनोत्पन्नस्य प्रकरणादिकल्पितश्रुत्या विनियोगः। प्रयोगस्तु सर्वेषामङ्गान्तरवत्प्रयोगविधिनैव। इदञ्च तत्र तत्र स्फुटी करिष्यते। उच्यतेऽत्र क्रमस्यापि द्रव्यगुणादिवत्पदार्थविशेषणत्वेन विधानम्।

तदिह श्रुतिर्नाम स्वतः क्रमबोधकः क्लृप्तः शब्दः। स चाथ-शब्दादिः। तथाथशब्दस्यानन्तर्यवाचित्व प्रसिद्धमेव। क्त्वाल्यबादीनान्तु पूर्वकालवाचितासापेक्षाऽनुरोधात् क्रमपरत्वं लक्षणया। अर्थादिषु कल्प्यशब्दस्यैव क्रमबोधकत्वात् क्लृप्तेति विशेषणम्। तत्र वषट्कर्त्तुः प्रथमभक्ष इत्यादौ क्रमविशिष्टभक्षविधानात् प्रथमपदोक्तक्रमस्य वाक्या-

वाक्ये तु वैकल्पिकब्रह्मचारिविधानाद्धृदयादिन्यायेन पाठादेव क्रमसिद्धेस्तत इत्यनुवादः। निपातत्वाच्च वा-शब्दस्य ब्रह्मचारिविशेषणत्वेन न वाक्यभेदः। अभावपक्षे च ब्राह्मणानामेवार्लिज्यविधानाद्ब्राह्मण इत्याद्यनुवादः। ब्रह्मचारिणश्चाचार्याधीनत्वस्मृतेराचार्यप्रेषित इत्यपि।

यत्तु मूले विततिरूपक्रमपक्षमङ्गीकृत्य सर्वस्याप्येकवाक्यत्वमुक्तम्। तद्ब्रह्मदायाविततेर्विधेयत्वायोगादनेकदीक्षोद्देशेन विधाने वाक्यभेदापत्तेश्चेष्टदीक्षायां कर्तृविधेरावश्यकत्वाच्चोपेक्षितम्। वस्तुतस्तु आनन्तर्यरूपक्रमपक्षेऽपि तत्तत्संस्कार्यविशिष्टदीक्षोद्देशेन क्रमविधाने वाक्यभेदापत्तेः संस्कार्यमात्रोद्देशेन विधौ च दीक्षानिष्ठत्वालाभादुक्तैकवाक्य एव तदुद्देशेन कर्तृविधिः। इतरस्तु सर्वोऽपि पदसमुदाय औचित्येन तत्प्राप्त्यर्थोऽनुवादः। कर्तुर्दीक्षानिष्ठत्वलाभस्त्वनुवादत्वादिरापदस्यैव नानुपपन्नः। एवञ्च सर्वस्याप्येकवाक्यत्वलाभः। क्रमस्त्वनुवाद एव तादृग्पाठादवधेयः। निषादस्थपत्यधिकरणन्यायेन श्रूयमाणवाक्ये वाक्यभेदाभावेन पाठगम्यानेकवाक्यकल्पनस्यादोषत्वात्। अन्यथा हृदयादिवाक्येष्वपि विशिष्टविध्यापत्तेः। न च श्रौतक्रमस्य पाठक्रमस्य च कश्चिदनुष्ठाने विशेषः। अतो मूलोक्तं श्रुतिक्रमोदाहरणमनादरणीयमिति ध्येयम्॥ ५॥ १॥ १॥

अर्थाच्च॥ अर्थः प्रयोजनम्। तच्च क्वचित्क्रमेऽनुपपद्यमानत्वात्क्रमे प्रमाणम्। यथाऽग्निहोत्रं जुहोति यवागूं पचतीति यवागूपाकस्य पाठक्रमेण पश्चात्करणे पाकसंस्कृतायाः यवाग्वाः होमरूपस्य यवाग्वाऽग्निहोत्रं जुहोतीति वचनसिद्धस्य प्रयोजनस्यानिष्पत्तेः

यजमानविधानाद्ब्रह्मादीनां यजमानत्वेनैव प्रतिप्रधानावृत्तिन्यायेन तत्तत्संस्कारकत्वप्राप्तेः ।

न च ऋत्विगर्थं यजमानविधानादेव वरणादिनिवृत्त्या ब्रह्मादावप्राप्तिः । तद्विधानेन वरणादिनिवृत्तावपि ऋत्विङ्निवृत्तौ प्रमाणाभावेनाध्यवसायमात्रेणैव ब्रह्मत्वादेरुपपादितत्वात् । न च प्राप्यमानाया अपि दीक्षाया अपूर्वत्वार्थं पुनः श्रवणम् । ब्रह्मादि-प्राप्त्यर्थमतिदेशस्यावश्यकतया निवारयितुमशक्यत्वात् । न च दीक्षायामध्वर्युविधिः । अतिदेशादेव सिद्धेः । न च दीक्षान्तरे-ऽध्वर्युनिवृत्त्या प्रतिप्रस्थात्रादिविधानम् । अध्वर्युदीक्षायामध्वर्योर्थि-त्यनिल्ला पुनातिति मन्त्रवर्णविरोधादेवाप्राप्तेः । न चाध्वर्युकर्तृकत्वा-नुरोधेनोहेन मन्त्रप्रयोगः । कर्तुः शास्त्रप्रधानात्वेन चरमापेक्षितत्वेन च कर्त्रनुरोधेन स्वापदोषायोगात् । अतो मन्त्रमनूहितमेव प्रयुञ्जा-ध्वर्युकर्तृकत्वबाधावश्यम्भावे इतरमन्त्रयोर्वा बलो विशेषः स्यादिति न्यायेनाध्वर्युपुरुषाणामाद्य. प्रतिप्रस्थातैवाध्वर्युदीक्षाया प्राप्नोति ।

ब्राह्मणाच्छंस्यादिदीक्षासु तु अध्वर्योर्न पूत भावयेदिति वचनेन सवप्रकरणपठितेन दीक्षासु दीक्षाख्यसंस्काररहितपुरुष-कर्तृविधायकेन पर्युदासात्प्रतिप्रस्थात्रप्राप्तिः सुलभैव । एव प्रति-प्रस्थात्रादिदीक्षासु नेष्टुः प्रतिप्रस्थात्रनन्तरस्य, नेष्ट्रादिदीक्षासु चोन्नेतुर्नेष्टनन्तरस्य प्राप्तिर्न्यायादेवेति न विधेयान्तरापेक्षा । अतः क्रम एवानाम्नातत्वाद्दीक्षोद्देशेन विधीयते श्रौत क्रमप्रयोगः ततः-पदोपात्त । अत एवैतानि द्वादश वाक्यानि श्रौतक्रमविधाय-कानि । अधिकाद्युद्देश्यतावच्छेदकमद्यीक्षत्य पदैव वा । उन्नेतृदीक्षा-

पाकस्य च यवागूत्पादकत्वेऽपि अनुपयुक्तायास्तस्याः प्रयोजनत्वानुप-पत्तेरन्यथाऽनुपपत्त्या पूर्वं पाकः पश्चाद्धोमः। न च तृतीया च होश्छन्दसीति स्मरणाद्धोः कर्मणि तृतीया चकाराद्द्वितीया चेत्यर्थाद्यवाग्वा जुहोतीत्यत्र यवाग्वाः तृतीयया कर्मत्वावगमेन होमस्य प्रयोजनत्वासिद्धिः। तथात्वे यवाग्वा अन्यत्रोपयोगाभावेन होमवाक्य एव तदनुन्यायेन विनियोगभङ्गाङ्गीकारात्। पाकस्य तु दृष्टार्थकत्वात् संस्कारकर्मत्वमेव।

वस्तुतस्तु करणत्वे एव तृतीयायाः शक्तिः। कर्मत्वे तु आनु-शासनिकी लक्षणा। न चात्र तद्बीजमस्ति। अत एव यत्र चतुर-वत्तादौ उपयोगतृप्तिरस्त्येव चतुरवत्तेन जुहोतीत्येतादृशवाक्य-सत्त्वेऽपि कर्मत्वप्रतीतिरित्येवम्परं सारत्वम्।

अथ चार्थोपस्थितः क्रमः प्रयोगविधिनैव विधीयते। एवं पाठादिष्वपीति प्राञ्चः। अङ्गान्तरवत्तु अर्थकल्पितश्रुत्या विनियोगः, प्रयोगमात्रं प्रयोगविधिनेत्यपि शक्यं वक्तुम्। वस्तुतस्तु प्रयोजनवशेन पदार्थानुष्ठाने विहिते आनुषङ्गिकः क्रम इति न तदर्थं विधान-मिति ध्येयम्।

अर्थोऽपि क्रमनियामक इति प्राञ्चः। वस्तुतस्तु अर्थाविरोधि-पाठसत्त्वे अन्यलभ्यत्वादनुवाद एव। विरोधिसत्त्वे चापूर्वस्यैव तस्य ज्ञापक इत्यप्यनुसन्धेयम्॥ ५। १। २॥

अनियमोऽन्यत्र॥ यथोक्तवक्ष्यमाणक्रमनियामकप्रमाणाभावस्तत्रा-नियम एव। यथा प्रयाजानुमन्त्रणानां वसन्तमृतूनां प्रीणामीत्या-दीनां एको ममेत्यादीनाञ्च शाखाभेदेनाम्नातानां परस्परम्।

पेक्षा यथा आग्नेयादौ। एकप्रयोगविधिपरिग्रहेऽपि सम्प्रतिपन्न-देवताकत्वेन सहानुष्ठीयमानत्वात्। यत्र वा भिन्नप्रयोगविधिपरिग्रहः यथा तत्तत्काम्यकर्मणाम्। तत्र न पाठोऽपि नियामकः। तत्र तु न स्वाध्यायत्वसिद्ध्यर्थं एवोपयुज्यत इति द्रष्टव्यम् ॥५॥१॥४॥

प्रवृत्त्या॥ एवं सप्तदश प्राजापत्यान्पशूनालभेतेत्यादावेकैकशि-ष्टया उपाकरणादीनां पदार्थानामावर्त्तनीयानां पदार्थानुसमयस्य वक्ष्यमाणत्वादाद्य उपाकरणपदार्थो येन क्रमेण कृतस्तेनैव क्रमेण नियोजनादिद्वितीयप्रभृतिपदार्थाः कर्त्तव्याः। अन्यथा प्रकृति-प्राप्तस्योपाकरणनियोजनयोरव्यवहितानन्तर्यस्यौपदेशिकपशुमात्रवि-षयानुरोधेन षोडशक्षणव्यवधानेऽप्यधिकक्षणव्यवधानापत्तेः। अथ शुचन्तिवाक्ये वैश्वदेवीं कृत्वा प्राजापत्येश्चरन्तीति प्रयोगवाक्ये च श्रुतानां सप्तदशानां साहित्यावगमादन्यपरसाहित्यानुरोधेनैकाह्नेन सप्तदशपशूनां युगपदुपकार्यत्वावगतेरावर्त्तनीयाङ्गेषु चैकेन कर्त्रा युगपदुपकारासम्भवादवश्यं षोडशक्षणव्यवधानेऽपि तदधिक-व्यवधाने चौपदेशिकसाहित्यस्यातिदेशिकानन्तर्यस्य च बाधः स्पष्ट एव। अत एव केषु चित्पशुषु न्यूनक्षणव्यवधानमपि दोष एव।

अत एव पूर्वपदार्थक्रम एव प्रयोगविध्यवगताशुत्वाभ्यनुग्रहीतो-त्तरपदार्थक्रमनियमे प्रमाणम्। अथ पूर्वस्युपलक्षणम्। उत्तरपदार्थ-प्रवृत्तिक्रमेणापि पूर्वपदार्थक्रमनियमस्य न्यायतौल्येन वक्ष्यमाणत्वात्। यद्यपि प्रवृत्तिक्रमोऽनुष्ठानकालीनोऽपि प्रयोगविधिप्रवृत्तेः पूर्व-मपेक्षाक्रमादवगम्यमानत्वादवगतत्व-प्रवृत्त्यापत्त्यनुग्रहेण पदार्थानार-म्भं बोधयति। तथा मटिनियोजनवाक्यककल्पना सम्भाव्येत-

परिपठे पदार्थानुसमयासम्भवादेकैकस्मिन् प्रयाजे द्वयोर्द्वयोर्मन्त्रयोः पठनीयत्वाच्च प्रयाजान्तरीयमन्त्रस्य प्रयाजान्तरीयमन्त्रेण प्रवृत्तिक्रमः ।

न च नानाशाखास्थयोः कृप्तक्रमत्वाभावेऽपि एकशाखास्थानां पञ्चानामपि मन्त्राणां पाठेन कृप्तक्रमत्वाच्छाखान्तरीयेणाप्यनियतव्यवधाने प्रवृत्तिक्रमबाधापत्तिः। पञ्चानां मन्त्राणां पञ्चप्रयाजाङ्गत्वेनैकशेष्यङ्गत्वाभावाद्वान्तरप्रयोगविधिभेदेन भिन्नप्रयोगविधिपरिगृहीतानां पाठेन क्रमानियमात् । दृश्यते च पाशुकानूयाजानामैष्टिकपिष्टलेपफलीकरणहोमस्य च महाप्रयोगैकत्वेऽपि भिन्नावान्तरप्रयोगविधिपरिगृहीतत्वेनाकृप्तक्रमत्वम् । तस्मादनियमः ॥२॥१॥२॥

क्रमेण ॥ पदार्थबोधकवाक्यपाठक्रमोऽपि पदार्थक्रमनियामकः । न च विधीनां तत्पदार्थविधायकत्वात् क्रमस्य च स्वाध्यायत्वसिद्धर्थत्वेनाध्ययनविध्युपयुक्तत्वाच्च पदार्थक्रमनियामकत्वम् । पदार्थानामनुष्ठानकाले स्मारकापेक्षायां मन्त्रादीनामुपस्थितत्वेन स्मारकत्वनियमात् तत्क्रमेणैवानुष्ठानक्रमनियमोपपत्तेः । अत एव यत्र मन्त्राम्नानं, तत्र तत्क्रम एव नियामकः। यत्र तु [illegible] तत्तत्र विधायकत्वेनोपयुक्तस्यापि विधिवाक्यस्यैवोपस्थितस्य स्मारकत्वेन नियमात् तत्क्रमस्यापि पदार्थक्रमनियामकत्वम् । पाठोपस्थितस्य च क्रमस्य विनियोजकवाक्यकल्पनयाऽङ्गत्वेऽवगते प्रयोगविधिना प्रयोगविधानम् । तत्पर्णे पदार्थबोधकत्वञ्च क्वचिदनुष्ठेयपदार्थबोधकत्वं क्वचित्सम्बन्धिद्रव्यदेवतादिबोधकत्वम्। तेन च द्विविधेनापि अनुष्ठेयपदार्थक्रमनियमः । अत एव देवताबोधकयाज्यादिक्रमादपि यागक्रमः । अतः पाठोऽपि क्रमनियामकोऽपेक्षितत्वात्। अत एव यत्र न क्रमा-

प्रधानसन्निधिष्वपि प्रवृत्त्यैव क्रमसिद्धेर्न स्थानोदाहरणता । प्रधाने स्थानाभावाच्च नोपाकरणे मुख्यक्रमाशङ्का । अत स्थानादेव सवनीयस्य प्रथममुपाकरणं, तदुत्तरं दैक्षस्य, तदुत्तरमानुबन्ध्यस्य । प्रवृत्तिदृष्टपूर्वापर्यस्यैव* नियामकान्तराभावे नियामकत्वाङ्गीकारात् । अथापि स्थानावगतस्य क्रमस्य कल्पितवाक्येन विनियोगेऽवगते प्रयोगविधिना प्रयोगविधानम् ॥५॥१॥६॥

मुख्यक्रमेण ॥ मुख्यक्रमोऽप्यङ्गक्रमनियमे प्रमाणम् । मुख्यत्वञ्च प्रधानत्वम् । यत्र ह्यनेकेषां साङ्गानां प्रधानानां सहकर्त्तव्यता, तत्र प्रयोगविधिनाऽङ्गप्रधानयोः साहित्यावगतावपि प्रधानान्तरसाहित्यानुरोधेन यावदनुष्ठानव्यवधानस्वीकारेऽपि तदधिकव्यवधाने प्रमाणाभावात् प्रधानप्रत्यासत्त्यनुग्रहाय मुख्यक्रमेणैवाङ्गे क्रमनियमः । अत एव प्रवृत्तावङ्गनिरूपितप्रत्यासत्त्यनुग्रहो बीजम्, मुख्यक्रमे तु प्रधाननिरूपितप्रत्यासत्त्यनुग्रह इति तयोर्भेदो वैपरीत्येन बलाबलञ्चेति वक्ष्यते ।

मुख्यक्रमोदाहरणञ्च सारस्वतौ भवत एतद्वै दैव्यं मिथुनं यत्सरस्वती सरस्वांश्चेति वाक्यविहितप्रधानद्वयक्रमात् तन्निर्वापक्रमः । अत्र हि द्रव्यसामान्याधिकरण्याभावेऽपि सम्बन्धसामान्यवाचिनस्तद्धितस्य दैव्यमिति वाक्यशेषाद्देवतापरत्वोपपत्तेर्द्विवचनेन देवता कल्पितयागद्वयं विधीयते । अत एव न यागद्वयेऽपि सरस्वानेव देवता । अर्थवादस्य विरूपैकशेषतात्पर्यग्राहकत्वेन सरस्वतीसरस्वद्देवत्यत्वावगमात् ।

* इत्थमेव सर्वत्र पाठः । पौर्वापर्यस्यैव—इति तु भवितुमुचितम् ।

धारिते प्रयोगविधिना प्रयोगविधानम् । तदुत्तरञ्च प्रयोगविधे पर्यवसानमिति ध्येयम् ।

न चैवं सर्वथाऽहित्यानुरोधेन स्यात् तथैव प्रमाणाभावो बोधक-शब्दाभावादिति वाच्यम् । एकेन पदेनानेकोपस्थितौ क्रियान्वये एककालावच्छिन्नत्वरूपसाहित्यस्यानुभूयमानस्य शाब्दत्वसिद्ध्यर्थं लक्षणाऽङ्गीकारात् । प्रतीयते हि समावधानवाक्येन पृथिव्यां राजानो बहव इत्यादौ एककालावच्छिन्नानामवधानादीनां चैकाद्य न्वयोऽस्ति साधके एककालावच्छिन्ने । अत प्राजापत्यपदादौ लक्षणेत्यपि ध्येयम् ॥५।१।५॥

स्थानाच्च ॥ स्थानं च क्रमनियमे प्रमाणम् । तच्च कृप्तक्रमकपूर्व-पदार्थोपस्थितिः । सा चैकसन्निधिदर्शनेनापरसन्निधिस्मरणमिति न्यायेनोत्तरपदार्थस्य झटित्युपस्थापिका । अतस्तत्स्थानस्थितत्वेन विहि-तानामन्येषां पदार्थानां तदनन्तरानुष्ठानसिद्धिः । यथा प्रकृताग्नी-षोमप्रणयनानन्तरमौपवसथ्याहे दैव पशु , आश्विनग्रहोत्तरकालञ्च सौत्याहे सवनीय , उदयनीयानन्तरं सद्योत्तरमनुबन्ध्य , साद्यस्के च सर्वमग्नीषोमप्रणयनादि सौत्ये ऽहन्येव क्रियते ।

तदापनिकातिदेशाभावेऽपि तत्र सह पशूनालभत इति श्रुतम् । तत्र प्रधानेनात्यन्तप्रत्यासत्त्यभावादाश्विनोत्तरमेवेति स्थितं तृतीये । अतस्तत्राश्विनस्योपस्थापकस्य सत्त्वात्सवनीयस्यैव स्थानात्प्रथमत-उपाकरणम् । न तु दैवस्य । तदुपस्थापकस्य भ्रष्टत्वेन स्थाना-भावात् । प्राकृतपाठस्य च व्यवधायकपदार्थान्तरसत्त्वेन नियाम-कत्वाभावात् । अत एवोपाकरणोत्तरभाविनियोजनादिपदार्थेषु

क्रमः । तत्र पाठस्य स्मारकवाक्यवृत्तित्वेन प्रत्यक्षत्वाच्छीघ्रोपस्थितेश्च बलवत्त्वम् । मुख्यक्रमस्तु मुख्ययोरेव प्रथमं केनापि प्रमाणेनावगम्य तदपेक्षया तत्साहित्यसम्पत्तये कल्प्यमानो विलम्बित इति दुर्बलः ॥ ५॥१॥८॥

मन्त्रतस्तु ॥ पाठयोस्तु मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान्न तु ब्राह्मणपाठः । तस्योत्पत्तिविनियोगविधिगतत्वेन प्रथमोपस्थितत्वेऽपि पाठस्य स्मारकक्रमविषयैव क्रमनियामकत्वोक्तेः मन्त्रगतत्वे च तस्यैव स्मारकतया विधानोपयुक्तस्यासमर्पकस्य च विधेः स्मारकत्वाभावान्मन्त्रपाठक्रम एव बलीयान् । तेन याज्यानुवाक्यादिमन्त्रपाठक्रमादाग्नेयस्य प्रथमानुष्ठानं पश्चादुपांशुयाजोत्तरमग्नीषोमीयस्य । न तु ब्राह्मणपाठक्रमादग्नीषोमीयस्य प्रथमं पश्चादुपांशुयाजोत्तरमाग्नेयस्य । अत एव तत्र पाठक्रमः स्वाध्यायादावुपयुज्यते । ५॥१।९॥

तद्वचनात्तु ॥ इदानीमातिदेशिकपाठक्रमापेक्षया विकृतौ मुख्यक्रमस्य बलाबलं चिन्त्यते । अध्वरकल्पायामाग्नावैष्णवमेकादशकपालं निर्वपेत्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुरिति श्रुतम् । अत्र यद्यपि वाक्यत्रयेण यागत्रयविधाने, एतयैव यजेताभिचर्यमाण इति वाक्यान्तरेणाभिचाराख्यफलोद्देशेन वधितानां विधानात्त्रयाणाम् एकप्रयोगविधिपरिग्रहः ।

अत्राद्यस्य यागस्य द्विदेवत्यत्वौषधद्रव्यकत्वादैन्द्राग्नाग्नीषोमीयान्यतरविधत्वम् । केचित्समानाक्षरतद्धितान्तपदकत्वसादृश्यादग्नीषोमीयस्यैवेति वदन्ति । द्वितीयस्याज्यद्रव्यकत्वादुपांशुयाजविधत्वम् । तृतीये एकदेवताकत्वौषधद्रव्यकत्वादाग्नेयविधत्वम् । तत्राज्यद्रव्यक-

न चैवमपि सरस्वती सरस्वांश्च सरस्वन्तौ, सरस्वन्तौ देवते ययोस्तौ इति व्युत्पत्त्या एकैकस्य द्विदेवत्यत्वं किं न स्यादिति वाच्यम्। एकैकदेवत्ययाज्यानुवाक्यापाठेनैकैकदेवत्यत्वावगतेः। अत एव प्राजापत्यवत्प्रतिपन्नदेवताकत्वाभावेन मन्त्रपाठक्रमात्प्रधानक्रमे सति मुख्यक्रमेणैव तन्निर्वापयोः क्रमः।

वस्तुतस्तु तुल्यन्यायतया पूर्वपदार्थप्रवृत्तेरिवोत्तरपदार्थप्रवृत्तेरपि पूर्वपदार्थक्रमनियामकत्वस्योक्तत्वात् प्रकृते च याज्यानुवाक्यादिरूपोत्तरपदार्थप्रवृत्त्यैव निर्वापक्रमोपपत्तेर्यद्यपि नेदं मुख्यक्रमसाधकीयमुदाहरणम्। तथापि दर्शे पूर्वं शाखाहरणाद्यो धर्मा पठिता पश्चादाग्नेयस्य निर्वापादय, याज्यानुवाक्ययोस्तु विपरीत पाठ, ततश्च पूर्वोत्तरभाविप्रवृत्तिद्वयसत्त्वात् प्रयाजशेषाभिघारणेऽनियमप्रसक्तौ मुख्यक्रमेणाग्नेयस्य प्रथममभिघारणं पश्चादन्य इत्युदाहरणं वक्ष्यमाणं द्रष्टव्यम् ॥५॥१॥७॥

प्रवृत्तौ॥ तदेवं षट् प्रमाणानि निरूपितानि। तेषां श्रुत्याद्यधिकरणोक्तक्रमेण पारदौर्बल्यं द्रष्टव्यम्। न तु सूत्रक्रमेण। तत्र श्रुतिविरोधेऽर्थस्यैवान्यथाकल्पनाद्दौर्बल्यम्। अर्थविरोधे पाठस्य वक्ष्यते। एवं वैकृतपाठविरोधे प्राकृतस्थानबाधोऽपि। प्राकृतक्रमस्थानविरोधे प्रधानप्रयोगविध्याश्रितमुख्यक्रमस्य दौर्बल्यं वक्ष्यत एव। मुख्यक्रमविरोधे प्रवृत्तिक्रमस्यापि दौर्बल्यं तथैव।

तदिह पाठक्रममुख्यक्रमयोर्बलाबलं चिन्त्यते। दर्शपूर्णमासयोराग्नेयोपांशुयाजाग्नीषोमीयरूपमुख्यक्रमादाग्नेयस्योपांशुयाजीयस्य प्रथमं निर्वापः पश्चादग्नीषोमीयद्रव्यस्य। पाठक्रमात्तु विपरीत

धर्मानुष्ठानोत्तरमेव द्वितीयप्रधानधर्मानुष्ठानमित्याश्रावैष्णवस्य प्रथमं निर्वापः पश्चादाग्नेयस्य। एवं साद्यस्के स्थानमध्यकृतसवनीयोपाकरणस्य व्याघर्मिकातिदेशवशात् कस्यांचिद्विकृतौ व्याघर्मिकोपाकरणद्वयमध्ये व्यत्यस्तोपाकरणप्रवृत्त्यैव नियोजनादिक्रमः। एवं च केषाञ्चिदेतादृशविषयद्वयेऽपि याज्ञिकाचारे मूलं चिन्त्यमिति प्रकृतिक्रमकस्यैव सिद्धान्तकारणं मुख्यक्रमत्वादुपेक्ष्यम्। अत आतिदेशिकपाठविरोध एव मुख्यक्रमाद्दौर्बल्यमिति स्थितम् ॥ ५ ॥ १ ॥ १० ॥

विकृतिः ॥ चातुर्मास्येषु साकमेधस्तृतीयं पर्व। तत्र कार्त्तिक्यां पौर्णमास्यां काश्चिदिष्टयो विहितास्तास्तु वक्ष्यमाणेनैव न्यायेन पर्वणीति वाक्यशेषान्यथोपपत्त्यास्तृतीया एवेत्यविवादम्। यानि तु द्व्यहं साकमेधेन यजेतेति वचनेन तत्पूर्वदिनकर्त्तव्यानि कर्माणि— अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेन्मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनमित्येवं-विधवाक्यत्रयविहितानि, तानि किं द्व्यहकालान्युत पर्वकालानीति क्रमविशेषोपदेशकतया सन्देहे, प्रकृतिप्राप्तत्वात् द्व्यहकालत्वम्। न चावान्तरविकृतीष्टिन्यायः। तत्र हि पर्वणीत्यादिवाक्येन चातुर्मास्योगस्य पौर्णमास्यादिकालविधानादातिदेशिकद्व्यहकालत्वानुपपत्तेः च तद्बाधप्रसङ्गाद्युक्तं पर्वकालत्वम्। प्रकृते प्रातरादिकालकलस्य दिनद्वयेऽपि सम्भवात् द्व्यहकालत्वमेव।

अतश्च त्रयोदश्यां प्रातरादिकालेषु त्रयाणामप्यन्वाधानं कृत्वा चतुर्दश्यां प्रातरादिकालेषु याग इति द्रष्टव्यम्। कर्ममध्ये कर्मा-

यागधर्मापेक्षया आग्नावैष्णवस्य धर्माः आतिदेशिकपाठमुख्यक्रमयोरविरोधादेव प्रथमतः कार्याः । बार्हस्पत्यस्य तु मुख्यक्रमात्पश्चात्कार्या उतातिदेशिकपाठक्रमात्पूर्वमिति चिन्तायाम् ।

मुख्यक्रमस्यौपदेशिकप्रयोगविध्युपजीवित्वेनौपदेशिकत्वात्तस्यातिदेशोत्तरकालकत्वे प्रत्यादिवद्बाधोपपत्तेर्मुख्यक्रमस्य बलवत्त्वमिति प्राप्ते ।

प्रयोगविधेरौपदेशिकत्वेऽपि स्वरूपेण मुख्यक्रमस्य कल्प्यत्वात्कॢप्तन्यायानुपपत्तेः कल्पनायाश्चापेक्षामूलत्वेन प्रयोगविध्युपजीव्यप्राथमिकातिदेशप्रापितपाठक्रमेणैवाकाङ्क्षाया उच्छेदात् येनाद्यातिदेशिकत्वाल्लिङ्गादिवदेवातिदेशिकपाठक्रमप्रापितक्रमस्यैव बलीयस्त्वम् । तदेतत्सिद्धमपि चोदकस्य प्रयोगविध्यपेक्षया प्रबलत्वस्पष्टीकरणार्थं क्रमलक्षणे पुनरुच्यते इति मन्तव्यम् ।

न चैवमाग्नावैष्णवबार्हस्पत्यधर्माणामपि प्राकृतक्रमेणैवाद्याभापत्तेर्याज्ञिकानां वैकृतमुख्यक्रमानुरोधेनाग्नावैष्णवस्य प्रथमं निर्वापाद्यनुष्ठानं विरुध्येतेति वाच्यम् । प्रकृतौ हि यत्र पाठादिप्रमाणकक्रमस्तत्र तत्पदार्थानन्तरं तत्पदार्थं कार्यं इति विशिष्यैव वाक्यकल्पनम् । मुख्यक्रमे तु लाघवाद्धर्मिग्राहकप्रमाणबलाद्याद्यप्रधानधर्मानन्तरमुत्तरप्रधानधर्मा अनुष्ठेया इत्येव कल्पनम् । न तु विशिष्य, न वा आग्नेयत्वादिप्रवेशः ।

अत एव विकृतावपूर्वांशप्रवेशेऽपि न वाक्यान्तरकल्पनमित्यपि बोध्यम् । एवं प्रकृतिमात्रेऽपि क्रमप्रमाणात्प्रकृतिमात्रेणैतावत्पदार्थाः कर्तव्या इत्येव वाक्यकल्पनम् । अतश्च विकृतावपि आद्यप्रधान-

प्रकृतौ पाठादिक्रमेण पदार्थानां कृप्तक्रमत्वात्पूर्वपदार्थोपस्थापितस्यैवोत्तरपदार्थस्यानुष्ठेयत्वावगतेः श्रुतवचनयोस्तन्मात्रविषयत्वेऽप्यनूयाजोत्तरपदार्थस्य सूक्तवाकादेरनूयाजानन्तर्यानूयाजोपस्थापितत्वादिधर्मानुग्रहलोभेनोत्कर्षः। न च प्रधानप्रत्यासत्त्यनुरोधेन तदभावः। तस्याः प्रयोगविधिना कृप्तप्रमाणगम्यक्रमानुरोधेनैव प्रकृताविव विकृतावपि कल्पनीयत्वात्। एवमपकर्षेऽपि प्रयाजानामाघारादिरूपपूर्वपदार्थानन्तर्यस्य तदुपस्थापितत्वस्य च बाधे प्रमाणाभावेन पूर्वपदार्थभाविनामपि तदुपपत्तेः। न चापकर्षे पूर्वभाविनां काचित् क्षतिः। प्रधानप्रत्यासत्तेः प्रकृताविवाकिंचित्करत्वात्। न चापकर्षे हविरासादनोत्तरक्रियमाणपदार्थस्य सामिधेन्यादेस्तदानन्तर्यतदुपस्थापितत्वादिरूपधर्मबाधापत्तेरपकर्षानुपपत्तिः। तद्बाधस्योत्तरकालिकत्वेनाविरोधात्। सामिधेनीनां च प्रयाजाङ्गत्वादपि हविरासादनानन्तर्यादिबाधेऽप्यदोषः ॥ ५ ॥ १ ॥ १२ ॥

प्रकृत्या ॥ सोमे सुत्यायां प्रातरनुवाकप्रैषं प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहीत्येवंविधं होत्रे दत्त्वा प्रतिप्रस्थातः सवनीयान् निर्वपस्वेति प्रेष्यतीति प्रैषं विधाय होता प्रातरनुवाके उच्यमानेऽध्वर्योरुपास्तिर्विहिता आप्रातरनुवाकसमाप्तेः। सा च वचनादेव वैकल्पिकी। ततो यत्र होतुरभिजानादृदुपाख्यन्यऽरिति तदपरस्यां स्रुचि चतुर्गृहीतेन जुहोतीत्यादिना प्रचरणीहोमादिकान् पदार्थान्विधाय सवनीयहविर्विधिः। ततो बहिष्पवमानादन्ते आग्नीदग्नीन्विहर बर्हिः स्तृणाहि पुरोडाशानलंकुर्विति प्रैष. समाम्नातः। तत्र सवनीयहविष्षु धानादिषु दार्शिकविध्यन्ते निर्वापप्रोक्षणादिरूपे.प्राप्ते

न्तरारम्भस्तु द्व्यहं साकमेधेन यजेतेति वचनादेव दुष्यति । यदि तु प्रसङ्गसिद्धिराश्रयेत, तदाऽस्तु* चयोदश्यां प्रातः सकृदेवान्वाधाय चतुर्दश्यां प्रातरादिकालेषु यागाः । अङ्गानुष्ठानं तु पूर्वाङ्गानामनैकवत्या प्रधानोत्तराङ्गाणां शान्तपनीयया । गृहमेधीयस्य त्वपूर्वत्वादेव नाङ्गापेक्षा । अन्वाधानं त्वाद्यभागार्थमिति द्रष्टव्यम् । केचित्तु एकादशीप्रभृतिद्व्यहकालं पृथक्प्रयोगमिष्टिचयं पूर्वपक्षे कर्त्तव्यमिति वदन्ति । तेषां द्व्यहं साकमेधेनेति वचनानुपपत्तिरिति प्राप्ते ।

एकस्मिन् प्रातरादिकाले विशिष्य साङ्गतत्प्रयोगस्य द्व्यहकालत्वपक्षे औपदेशिककालैकत्वबाधापत्तेः सद्यस्कालत्वम् । न च सायंप्रातःशब्दयोरव्ययत्वेनैकवचनान्तत्वे प्रमाणाभावः । एकवचनान्तमाध्यन्दिनपदसमभिव्याहारादेकवचनान्तत्वनिर्णयोपपत्तेः । द्व्यह साकमेधेनेति साङ्गस्यैव द्व्यहकालत्वश्रुतेश्च । अतश्च विशेषणस्यैकत्वस्य विवक्षितत्वात् सद्यस्काला एवैता इष्टयः ॥ ५ ॥ १ ॥ ११ ॥

साङ्गानां ॥ दैक्षपशौ प्रकृतितोहविरासादनोत्तरभाविनां प्रयाजानां अपकर्षमिच्छन्त पशुं प्रयजन्तीति वचनेन श्रुतः । तथा सवनीये हविरासादनोत्तरभाविनामनूयाजानामुत्कर्षं आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीति श्रुतः । तौ किमुत्कर्षापकर्षौ तन्मात्रविषयावुत तदन्तस्यापकर्षस्तदादेरुत्कर्ष इति चिन्तायां, प्रयाजादिस्वरूपोपलक्षणे प्रमाणाभावात् पूर्वोत्तरपदार्थानां च प्रयाजाद्यनन्तरत्वेन तदुत्कर्षापकर्षयोरुत्कर्षापकर्षाभावेऽनुपपत्तेस्तत्पदार्थानां प्रधानप्रत्यासत्तिबाधापत्तेश्च तन्मात्रस्यैवोत्कर्षापकर्षाविति प्राप्ते ।

* इत्थमेव पाठः सर्वत्र । तदा अस्तु,—इति तु भवितुमुचितम् ।

माङ्गतया क्रमबाधे प्रमाणाभावात् प्रोक्षणादीनां सौमिकपदार्थो-त्तरत्वस्य प्रतिप्रसवात्मकत्वकल्पनैव वाऽऽपत्तेरपेक्षितम्। इतरथो-पास्तिपक्षेऽपि तस्या एव प्रतिप्रसवात्मकत्वकल्पनापत्त्या प्रोक्षणादौ तद-नापत्तेश्च।

यत्तु ऐष्टिकानां बहुत्वादप्रवृत्तेरनन्तरमपि तदापत्तेः प्रचरणी-होमकालबाधकस्य सत्त्वेन इत्युक्तम्। तदस्तु नाम तथा। तथापि यावन्त ऐष्टिकास्तत्कालावधि कर्तुं शक्यास्तावतां पूर्वं करणापत्ते-रन्येषां च तदुत्तरं प्रतिप्रसवेन वा करणापकर्षाक्रमभङ्गेऽपि प्रमाणा-भावः। वस्तुतस्तु सर्वं पूर्वं कर्तुं शक्या एवेत्युक्तम्॥ ५॥ १॥ १३॥

असंयोगात्तु॥ सौमिकाग्नीषोमप्रणयनानन्तरं पशुङ्गतया यूपच्छेद-नमस्ति इत्युत्पन्नं यूपच्छेदनं दीक्षासु यूपच्छिन्नशील्यनेनापकृष्ट प्रया-जन्यायेन प्राप्तोऽपि पदार्थानग्नीषोमप्रणयनादीनपकर्षतीति प्राप्ते।

भिन्नप्रयोगविधिपरिगृहीतत्वेनाप पाठस्य क्रमाभिधायकत्वा-भावात्प्रयोगविधेक्येऽपि वा उत्पत्तिविधिषेष्वायां प्रयोक्तृत्वानवगमेन क्रमाकाङ्क्षत्वात् पाठस्य क्रमाकल्पकत्वेन बहुक्रमत्वाभावाद्दीक्षा-कालविधिवाक्ये च प्रयोज्यत्वावगमेन तत्रैव क्रमापेक्षतया भिन्न-प्रयोगपरिगृहीतैरपि सोमाङ्गदीक्षाकालीनपदार्थैः पाठेन क्रम-कल्पनात्तत्रैव अग्नीषोमहोमानन्तरं यूपच्छेदनमात्रं यूपोत्पादकधर्म-मात्रं वाऽपकृष्य कार्यं, न तु तदन्तापकर्षः। एतेन यूपच्छेदनस्य दीक्षान्ते करणमिति केषाञ्चिदुक्तमपास्तम्। दीक्षासु यूपं छिनत्ती-त्यस्य अग्नीषोमहोमानन्तरं पठितत्वात्॥ ५॥ १॥ १४॥

प्रासङ्गिकञ्च॥ सवनीयपशुतन्त्रं सवनीयहविष्षु प्रसज्यते, ऐन्द्र-

निर्वापान्तस्य प्रैषविधानादपकर्षोऽलङ्करणादेश्चोत्कर्षोऽविवाद एव । मध्यतनानां प्रोक्षणादीनां त्वलङ्करणात्प्रागेव करणं न तु निर्वापोत्तरं, प्रधानाङ्गानां प्रचरणीहोमादीनां क्लृप्तकालत्वेन तैर्व्यवधानादिति प्राप्ते ।

प्रोक्षणादीनां निर्वापरूपपूर्वपदार्थोपस्थितानामतिक्रमे प्रमाणाभावान्निर्वापोत्तरमेव करणम् । न च सौमिकैर्व्यवधानम् । उपाख्यिपक्षे तावत्प्रधानाङ्गभूतायामुपाकृतावध्वर्युकर्तृकत्वस्यावश्यकत्वादतिदेशप्राप्तनिर्वापसमानकर्तृकत्वानुरोधाच्च प्रोक्षणादावितरमन्य इति न्यायेन प्रतिप्रस्थातृकर्तृकत्वावगतेः सौमिकस्य व्यवधायकत्वानुपपत्तेः ।

न चैवं सति निर्वपणेति प्रैषे प्रोक्षणादिलक्षणापत्तिरित्यादितन्त्ररत्नोक्तदूषणावकाशः । न्यायेनैव तत्प्राप्त्यङ्गीकारेण लक्षणाद्यापादकाभावात् । उपाख्यभावपक्षे तु यद्यप्यध्वर्युरेवातिदेशप्राप्त प्रोक्षणादौ कर्तेति निर्वापेण भिन्नकर्तृकत्वेन न प्राप्यते प्रोक्षणादिकमुपस्थापयितुं, तथापि अध्वर्योरपि निर्वापे प्रैषद्वारा प्रयोजककर्तृत्वेन समानकर्तृकत्वोपपत्तेर्युक्तमेव निर्वापोपस्थापितत्वं प्रोक्षणादौ । न चास्मिन् पक्षे प्रधानाङ्गप्रचरणीहोमादिभिर्व्यवधानम् । तस्याभ्युदयेष्ट्यादिप्रातरनुवाकपरिधानीयाकालकत्वेन प्रोक्षणाद्युत्तरत्वात् । प्रातरनुवाकस्यापि बहुत्वेन तस्याश्च स्वैष्टिकपदार्थसमाप्त्युपपत्तेश्च ।

यत्तु तन्त्ररत्नस्वरसादन्यैरपि बहूनामैष्टिकपदार्थानां बहुत्वात् प्रचरणीहोमकालविधिरुपाख्यिपक्षाभिप्रायेणैवेत्युक्तम् । तत् प्रचरणीहोमस्य उपाख्यभावपक्षे कालविध्यभावे प्रतिप्रस्थातरित्यादिप्रैषोत्तरभाविपाठक्रमेण क्लृप्तक्रमकाणां प्रचरणीहोमादीनां प्रधा-

कृतत्वाभावेन समानतया आक्षेपप्रतिबन्धायोगात्। इतरथा दधिग्रहपयोग्रहयोरपि पाठेन क्रमापत्तेः। अतश्च सत्यप्यनूयाजोत्तरत्वप्राप्तेः पुरोडाशप्रचरणोत्तरमेव पिष्टलेपफलीकरणहोमौ ॥ ५ ॥ १ ॥ १५ ॥

तथाऽपूर्वम् ॥ दर्शपूर्णमासयोर्हविरभिवासनोत्तरं वेदिकरणमाम्नातम्। तच्च पूर्वेद्युरमावास्यायां वेदिं करोतीति वचनेनापकर्षं श्रुतः पूर्वभाविनोऽपि हविरभिवासनादीनपकर्षेत्। एकप्रयोगविधिपरिगृहीतत्वेन पाठस्य क्रमकल्पकत्वात्। अमावास्यापदस्य कर्मपरत्वे लक्षणाप्रसङ्गेन कालपरत्वावश्यम्भावाद्धविरभिवासनोत्तरभाविवेदिकरणविधेरेव पौर्णमास्याङ्गताबोधकत्ववद्दर्शाङ्गताबोधकत्वाच्च। न च कालद्वयविधाने वाक्यभेदः। सामर्थ्यादिदं कृत्वा वेदिं करोतीति श्रुतवेदकरणानन्तर्यवत्त्वेनैव च पूर्वेद्युरस्य प्राप्तत्वेनानुवादात्। प्रधानप्रत्यासत्त्यभावात् पौर्णमास्यङ्गीतत्वाच्च दार्शिकवेदिकरण एवायं विधिः। अतश्च पौर्णमासाधारत्वेन पाठस्य क्रमकल्पकत्वावश्यम्भावात्। अत एव च यूपच्छेदनवैलक्षण्यात्तदन्तापकर्षे प्राप्ते।

कालपरत्वेऽपि कालविधेः प्रयोगविधित्वेन दार्शिकवेदिकरणस्य तत्रैव प्रयोज्यत्वावगमात्तदवगमोत्तरस्य क्रमापेक्षायां पाठस्य नियामकत्वासम्भवाच्छ्रौतक्रमान्तरसत्त्वाच्च न हविरभिवासनेन सहक्रमत्वम्। अतश्च पाठोऽपि परिशेषात् पौर्णमासविषय एव। यदि तु खण्डपर्वणि चतुर्दश्यां प्रातरग्न्याधानदिने वेदिकरणसिद्ध्यर्थं लक्षणामङ्गीकृत्यामावास्यापदेन कर्मैवोच्येत, तदा दार्शिकवेदिकरणस्याप-

पश्वङ्गस्य पशुपुरोडाशस्य इति वक्ष्यते। सवनीये च ये उपकाराः प्रयाजानूयाजादिजन्यास्तन्त्रिणो लब्धास्तज्जनकीभूतपदार्थांशे नाति-देशापेक्षा। ये तु न लब्धा आज्यभागपिष्टलेपफलीकरणहोमादि-जन्यास्तत्पदार्थांशेऽस्त्येवातिदेश इत्यपि वक्ष्यते। तदिह पाशुकानू-याजानां दैक्षे वपायागोत्तरत्वात् सवनीये चाग्निमारुतशस्त्रो-त्तरत्वात्पूर्वभाविसवनीयहविःपशुपुरोडाशादीनामङ्गभूताः पिष्ट-लेपफलीकरणादिहोमाः किमनूयाजोत्तरं उत्कर्षव्या उत नेति चिन्तयाम। प्रकृतौ दर्शपूर्णमासयोः पिष्टलेपफलीकरणहोमानां परप्रयुक्तानूयाजैरेव सहक्रमत्वादिहापि सत्यपि भिन्नप्रयोगविधि-परिग्रहे अङ्गभूतस्यान्याङ्गभूतानूयाजोत्तरत्वस्यापि सम्भवेनोत्कर्षे प्राप्ते।

न तावदिहतावेव क्रमक्लृप्तिः। भिन्नप्रयोगविधिपरिग्रहात्। पुरोडाशादिप्रयोगविधिना विहितानां पिष्टलेपफलीकरणहोमेडा-भक्षणानां स्वप्रधानाभावविशिष्टप्रकृतिदृष्टपौर्वापर्यस्य क्रमक्लृप्-कस्याभावेनोत्कर्षे तत्क्रमबाधप्रसङ्गाच्च। पाशुकप्रयोगविधिविहितानां समिष्टयजुःपत्नीसंयाजानामनुक्रमपाठेनैव क्रमक्लृप्तेस्तद्बाधस्यापि प्रस-ङ्गाच्च। नापि प्रकृतितोऽनूयाजोत्तरत्वक्लृप्तिः। प्रकृतौ हि पाठ-कल्पितवाक्येन क्रमनियम एव विधीयते, न [illegible] क्रमोऽपि। तस्य प्रयोगविध्याक्षेपादेव प्राप्तेः। अतश्च प्रकृते भिन्नप्रयोगविधिपरि-गृहीतानां सामान्यतः क्रमस्याप्राप्तौ तदाश्रितस्य नियमस्याप्राप्तिः। न चाक्षेपात्पूर्वमेवावघातविधिवत्प्रत्यक्षीकारेण कल्पितवाक्यस्य क्रमविधायकत्वमेवेति शक्यं वक्तुम्। तदिह पाठकल्पस्य विधेः

सान्तपनीया कर्त्तव्येति सान्तपनीयाङ्गानां नैव क्रम आदरणीयः। अत्र च सान्तपनीयेत्युपलक्षणं प्रारब्धकर्ममात्रस्य, अग्निहोत्रेत्यपि आवश्यकमात्रस्य। अनावश्यकविषये अपवाद* एतद्यज्ञस्य क्रियते यद्न्यस्य तन्त्रे विततेऽन्यस्य तन्त्रं प्रतायत इति निषेधात्। न चैवमनीकवत्युत्कर्षेऽपि मध्यन्दिने सान्तपनीयाऽऽपत्तिः। तथात्वे सान्तपनीयायाअनीकवत्युत्तरकालत्वैकप्रयोगविध्यवगतस्य प्रणयनस्य च बाधेन वरमेकस्यैव मध्यन्दिनकालस्य बाधात्।

केचित्तु निमित्तविशेषणीभूतकालस्यैवानुपादेयत्वं न तु काममात्रस्येत्यङ्गीकृत्य सान्तपनीयायाः काम्यत्वपक्षेऽनावश्यकत्वादुत्कर्षमिति वदन्ति। तन्न चातुर्मास्यानामपि नित्यत्वान्मध्यन्दिनस्यापि निमित्तविशेषणत्वापत्तेरुपेक्षितम्॥ ५॥ १॥ १०॥

षोडशी॥ दैवान्मानुषाद्वाऽपराधादेवोक्थ्येषूक्थेषु षोडशग्रहः कृष्यते न वेति चिन्तायां, समयाध्युषिते सूर्ये षोडशिनस्तोत्रमुपाकरोतीति वचनविहितसमयाध्युषितकालबाधे प्रमाणाभावादुत्कर्षः। न च तं पराचस्तुक्थ्येभ्यो गृह्णाति षोडशिनमिति वचनेन ग्रहणे उक्थ्यपरभावस्य विहितत्वात् स्तोत्रस्य च ग्रहं वा गृहीत्वेति वचनेन ग्रहग्रहणोत्तरकालत्वात्तदनुरोधेन समयाध्युषितकालबाधः। तं पराञ्चमित्यनेन षोडशिग्रहयागाभ्यासस्यैवोक्थ्यपरभावविधानेन ग्रहग्रहणस्य स्तोत्रपूर्वकालत्वेऽपि बाधकाभावात्। अतएवात्र गृह्णाति

---

* इत्यमेव पाठः सर्वत्र। मम तु अथ वा,—इति पाठः प्रतिभाति। वै,—इति प्रसिद्धपाठकोऽनिपातः। अपच्छिद्यते इति यत्रच्छिन्नेन संबन्ध।

मेव विनियोगविधिरिति हविरभिवासनेन दार्शिकवेदिकरणस्य सुतरां न बहूकमता। न चैवं पूर्वेद्युःकालविशिष्टवेदिकरणस्य दर्शाङ्गतया वाक्येन विनियोगात् प्रकरणेन पौर्णमासाङ्गत्वायोगः। वेदेः सर्वसाधारण्येन तत्करणस्याप्यङ्गतयाऽपेक्षासद्भावात्तत्पौर्णमासप्रकरणेन गर्दभाभिधान्यां आदानस्येवाक्षेपोपपत्तेः। अत एव वाक्येन श्रुत्या वोभयत्र न प्रकरणस्यार्थाक्षेपस्य वा बाधः। तयोः पूर्वेद्युःकालमन्त्ररूपगुणमात्रविधिफलकतया क्रियाविधिफलकताभावात्। अतो न प्रकृते तदन्तापकर्षः ॥ ५ ॥ १ ॥ १६ ॥

प्राणप्रणीता ॥ दैवान्मानुषादा प्रतिबन्धान्माध्यन्दिने क्रियमाणप्राणप्रणीताया उत्कर्षे स्वकालेऽग्निहोत्रहोमः कर्त्तव्यो न वेति चिन्तायां, स्वकालकरणे प्राणप्रणीतायां प्रणीतस्याग्नेः* पुनः प्रणयनासम्भवात्प्रणयनलोपेन वैगुण्यापत्तेः कालस्य च पदार्थगुणत्वेन प्रयोगविधिविशेषणत्वोत्कर्षात्काम्यतीतिकत्वेन च लोपेऽपि वैगुण्याभावादुत्कर्ष इति प्राप्ते।

अनुपादेयत्वात्कालस्य सिद्धे यथाशक्ति उपादेयाङ्गत्यागस्यैव तदनुरोधेन पक्षे तत्प्रसञ्जनात् प्रणयनलोपेनापि कालानुरोध एव न्याय्यः। कालस्य निमित्तविशेषणत्वेन सुतरामनुपादेयत्वाच्च। वस्तुतस्तु अग्निहोत्रस्य प्रणयनजन्योपकारलाभे तदभावेऽपेक्षकत्वस्य दर्शादौ प्रणयनाभावेऽपि वैगुण्यम्। अतः स्वकाल एवाग्निहोत्र इत्या

* प्रतिपन्नाग्नि,—इत्यस्यार्थस्तत्केऽम्मुद्र पाठो लिपिकरप्रमादेन इत्यनुमीयते।

## अथ पञ्चमोऽध्यायः।

### द्वितीयः पादः।

---

सन्निपाते ॥ यत्रानेकेषां प्रधानानामङ्गानां वा एकेन प्रयोगविधिनोपसङ्ग्रहात् साङ्गानां साहित्यावगमः, तत्र दर्शपूर्णमासप्राजापत्यादौ किं एकस्य प्रधानस्य सन्निपत्योपकारकाङ्गकाण्डं कृत्वेतरस्य कर्तव्यमित्येवं काण्डानुसमयोऽथ वा एकैकमङ्गं एकैकस्य कृत्वेतरस्य कर्तव्यमित्येवं पदार्थानुसमय इति चिन्तायां, प्रधानप्रत्यासत्त्यनुग्रहात् प्रकृतितः परस्परसंश्लिष्टानामेवोपाकरणनियोजनादीनामेकैकस्मिन् पशौ प्राप्तत्वाच्च काण्डानुसमयः। एकप्रयोगत्वञ्च आरादुपकारकाङ्गाभिप्रायेणेति न कश्चिद्विरोध इति प्राप्ते।

प्रत्यक्षवचनेनैकस्मिन् काले साङ्गानां सर्वेषां प्रयोगविधानात् प्रधानसाहित्यवदङ्गेष्वपि साहित्यावगमादेकैकाङ्गेन सर्वप्रधानानां युगपदुपकर्तव्यमित्यर्थावगमेनैकमुपाकरणाख्यमङ्गं सर्वपशूनां कृत्वा नियोजनं कार्यम्। प्रधानप्रत्यासत्तिस्तु प्रत्यक्षवचनावगतोभयसाहित्यानुरोधेनैव कल्पनीया। उपाकरणानन्तरमेव च नियोजनमिति यथाप्रकृत्येवानुष्ठानम्। आरादुपकारकत्वं तु प्रधानसाहित्यानुरोधेनेति न कश्चिद्विरोधः। अतः पदार्थानुसमयः। प्रवृत्तिक्रमविचारस्त्वेतदधिकरणोत्तरं द्रष्टव्यः ॥ ५ ॥ २ ॥ १ ॥

कारणात् ॥ यत्र तु प्रधानविरोधो यथाऽश्वप्रतिग्रहेष्ट्यां गते सहस्रे वाऽश्वदाने तावत्सु पुरोडाशेषु श्रूयमाणेषु यदि सर्वेषा-

निर्वपतिवद्यागपर एव*। अस्तु वा ग्रहणपरस्तथापि तैत्तिरीयशाखायां योऽग्निः सवनत्रयेऽपि आधानात्मनान्तरविषयकं तं पराञ्चमिति वाक्यम्। अस्तु वैतदपि सर्वविषयं, तथापि ग्रहं चेत्यस्य सामान्यविषयत्वादुक्थ्योत्तरकालं ग्रहणेऽपि समयाध्युषिते स्तोत्रकरणे न कश्चिद्विरोधः।

यदि तु सामान्यविशेषरूपबाधस्य यथावस्थितशास्त्रार्थविषयत्वेन दैवादपराधे अप्रवृत्तेः सर्वपदार्थानां तुल्यमनत्वमुच्यते। तथाप्युक्थ्यपरभावस्य क्रमत्वेनोपादेयत्वात् पूर्वाधिकरणन्यायेन बाधोपपत्तेः समयाध्युषितकालानुपपत्तौ न्याय्य एव। न च कालस्याङ्गत्वेन प्रधानाङ्गक्रमापेक्षया दौर्बल्यम्। उभयोरप्यङ्गत्वात्। न च ग्रहणस्याधानवद्दानवत् प्रदानोपकारकता। तद्वदिहैकपदार्थत्वाभावादिति प्राप्ते।

ग्रहणस्य योऽग्निरित्यागाभ्यामकल्पकत्वेनान्तरङ्गत्वात्तत्क्रमस्य प्राबल्यम्। वस्तुतस्तु न पराञ्चमित्यस्यापि कालपरत्वमपेक्ष्यान्तरङ्गतदाधीन्याय्य एव। न च ग्रहणस्योत्तरकाले करणेऽपि स्तोत्रस्यैव कालानुग्रहः स्फुटः। तथात्वे स्तोत्रग्रहणोत्तरकालत्वस्य प्रधानप्रत्यासत्तेर्य बाधप्रसङ्गेनैकस्यैव समयाध्युषितकालबाधस्य न्याय्यत्वात्। अतस्तस्याप्युत्कर्षे इति सिद्धम्। ५।१।१८॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

पञ्चमस्य प्रथमपादः॥

---

* इत्यमेव पाठः सर्वत्र। अत्र तु, ग्रहणनिर्वपतिवद्यागपर एव — इति पाठः प्रतिभाति।

मधिश्रयणं स्थालीपाकं क्रियेत, ततो दद्युरन्। अतश्च काण्डानुसमय एव कतिपयाङ्गानाम्।

यत्तु वार्त्तिके निमित्तगतस्य यावत्त्वस्याविवक्षितत्वान्नैमित्तिकगतस्य च तावत्त्वबहुत्वादेः पृष्ठशमनीयन्यायेनानुवादगतत्वेनाविवक्षितत्वात्साहित्यबोधकवचनाभावेनानेकेष्वपि प्रसङ्गेषु प्रत्येकप्रयोगेनैव वारुणेष्टिकर्त्तव्यतावगतेर्भाष्यकारेणैतदुदाहरणं साहित्यबोधकवचनान्तराभावपरतयेत्युक्तम्।

तन्न। यथादुदवसाय पृष्ठशमनीयेन यजेरन्नित्यत्र हि उदवसानस्याङ्गत्वकल्पनेनैव पृष्ठशमनीये बहुत्वादेः प्रत्यक्षात्युक्ता साहित्याविवक्षा। प्रकृते तु निमित्तसमभिव्याहृतस्यैव तावच्छब्दार्थस्य नैमित्तिकविशेषणतया प्राप्तस्य विधेयत्वात्तुल्यत्वेनैवानेकनिमित्तसन्निपाते नैमित्तिकसाहित्यम्। तावच्छब्दाभावे हि युगपदनेकनिमित्तसन्निपाते तन्त्रेण नैमित्तिकेष्टिरेकैव प्रसज्येतेति युक्त एव तावच्छब्दार्थविधिः।

यद्यपि हि पुरुषार्थतया न कालान्तःपातित्वं यथा युगपदनेकश्राद्धान्नादिप्रयोगादावनेकश्रद्धाहादौ च, तथापि नैमित्तिकस्य सहानुष्ठानं। किमुत क्रतुप्रयोगमध्यवर्त्तितद्वारुणेष्टेः। अतएवाग्नेयादिभेदेऽपि प्रयाजाद्यङ्गतन्त्रत्ववद्युगपदनेककपालभेदेऽपि होमतन्त्रत्ववद्वारुणेष्टेस्तन्त्रत्वप्रसक्तौ निमित्तसमभिव्याहृतत्वविधानेन तावत्प्रतीतावपि एकप्रयोगविधिपरिगृहीतत्वेन साहित्यप्रतीतेर्युक्तमेवोदाहरणत्वम्।

तत्र चारादुपकारकेषु सर्वथा प्रसङ्ग एव। सन्निपातेषु सर्वथा

चतुरवत्तं जुहोतीत्यनेनावत्तोद्देशेन होमाख्यसंस्कारविधानादर्थादेवावदाने प्राप्ते द्विर्हविषोऽवद्यतीत्यनेन द्वित्वमात्रविधानादुक्तविधचतुरवत्तहोमस्यैवैकपदार्थत्वेनावदानादिप्रदानान्तेनानुसमयः। वस्तुतस्तु अवत्तस्योद्देश्यत्वेन ततः पूर्वमवदानप्राप्तेर्दुरुपपादत्वाद् ह्यवदानवाक्ये चावदानमात्रे द्वित्वविधानेऽवद्धरणाद्यर्थाज्यावदानेऽपि स्रुववद्द्वित्वप्राप्त्यापत्तेर्हविरुद्देशेनैव द्वित्वविधाने होमादावपि तदापत्तेर्हविर्विशिष्टोद्देशेन तद्विधाने च वाक्यभेदापत्तेरवश्यं द्वित्वविशिष्टावदानविधिस्वीकारेऽपि उपस्तरणादिविधिन्यायेन दृष्टार्थत्वलाभाय चतुरवत्तहोमविध्युपपादकत्वस्याङ्गीकारादवदानादिप्रदानान्तस्यैवैकपदार्थत्वावगमेन तेनैवानुसमयः॥ ५॥ २॥ ३॥

वचनात्तु॥ यूपधर्माञ्जनोच्छ्रयणसञ्ज्ञानपरिव्याणादयो यूपगणेऽतिदेशप्राप्ताः पृथक्पदार्था अपि न प्रत्येकमनुष्ठेयाः। अञ्जनादिपरिव्याणान्तं यजमानो यूपं नावसृजेदिति प्रकृतावनवसर्गस्य विहितस्यैवाप्यतिदेशात्। न चानेन रागप्राप्ते कादाचित्कयूपसंयोगे सति त्यागनिषेधविधिः। पाक्षिकत्वापत्तेः। अपि तु संयोगाभावाभावरूपसंयोगात्मकस्यानवसर्गस्यैव आहारार्थं नियमविधिः। अतश्च तदनुरोधेन सत्यातिरिक्ते यूपगणे तावत्काण्डस्यानुसमयः। सत्ये तु येन केनापि यजमानेन धारणसम्भवात् पदार्थानुसमय एव। अन्यत्रापि तावदतिरिक्तपदार्थानां प्रत्येकमेवानुसमयः॥ ५॥ २॥ ४॥

पशुगणे॥ प्रकृतौ सान्नाय्येऽवदानादिप्रदानान्तस्यैकपदार्थत्वादतिदेशेन दैक्षेऽपि तथैव प्राप्तौ, दैवतान्यवदाय न तावत्येव होतव्यं, सौविष्टकृतान्यवदाति, सौविष्टकृतान्यवदाय न तावत्येव होतव्यं,

वक्ष्यमाणकल्पान्तरन्यायेनैकपदार्थत्वं सर्वोपधानस्य द्रष्टव्यम् । अतः आग्नेयस्य सर्वाण्युपधायाग्नीषोमीयस्योपधेयानि ।

एवं द्विर्हविषोऽवद्यतीत्यत्रापि द्वित्वविशिष्टावदानविधानाद्द्विरवदानेनानुसमयो न त्वेकैकावदानेन । न च मध्याद्वद्यति पूर्वार्धाद्वद्यतीति वाक्याभ्यामेव द्विरवदानसिद्धेर्द्विर्विधिवैयर्थ्यम् । एतद्विध्यभावे चतुरवत्तवाक्यस्य चतुःसंख्या मध्याद्द्विः पूर्वार्धाद्द्विरित्येवं द्विविध एव सम्पाद्येत । एतत्सत्त्वे तु तद्विरोधादुपस्तरणाभिघारणाभ्यामिति तद्वाक्यस्था चतुःसंख्याऽनुवाद एव ।

इदञ्च सान्नाय्यविषयं द्विरवदानानुसमयकथनम् । आग्नेयादाववदानादिभेदानान्तेनानुसमयस्य वक्ष्यमाणत्वात् । सान्नाय्ये तूपस्तरणाभिघारणयोस्तन्त्रत्वाद्दध्नोऽद्ध्यवदानं गृहीत्वा पयसोपाञ्चम् । कल्पसूत्रेषु तु पयसोऽद्ध्यवदानं गृहीत्वा दध्नश्च इत्युक्तम् । तैत्तिरीयश्रुतौ तादृशक्रमस्य वाचनिकत्वात् । सोमरूपेणैव सम्प्रतिपन्नदेवताकत्वात् ।

एवमञ्जनाभ्यञ्जनपवनपावनेष्वपि तत्तद्विधिसत्त्वादेकैकेन सैवेन शरीरावयवेन वाऽनुसमयोऽपि तु अनेकयजमानकेऽहीने एकपगैकदेयोऽप्यञ्जन कृत्वा यजमानान्तरे तत्कार्यम् । सर्वावृत्त्योपेताभ्यञ्जनादिना च सर्वैकमनुसमय । सत्रे अध्वर्युर्गृहपतिं दीक्षयित्वेत्यादिना तत्तत्संस्कारकर्तृभेदकालनियमात् काण्डानुसमय एव ॥ १ ॥ ९ ॥ ३ ॥

सम्पृक्ते ॥ सान्नाय्यवदाग्नेयाग्नीषोमीयादौ भिन्नदेवत्येऽपि द्विरवदानेनानुसमय इति प्राप्ते ।

ऐडान्यवद्यतीति* वचनेन क्रमान्तरविधायिना पदार्थभेदावगतिः । न ह्यसन्निधिपदार्थान्तरव्यवधाने प्राकृतैकपदार्थता सम्पद्यते । अतस्त्वैकदेवत्ये पशुगणे प्राजापत्यन्यायेन दैवतावदानादिना प्रत्येकमनुसमयः । अन्ते च तन्त्रेण दैवतहोमः ।

न च प्रकृतावेकस्य पशोर्दैवताद्यवदानत्रयमानन्तर्येण हुतमितीहापि तथैव कार्यमिति युक्तम् । प्राजापत्यन्यायेनैव पश्वेकत्वस्य प्रकृतावार्थिकत्वेन चोदकविरोधाभावात् । अत एव यत्र विभिन्नदेवताके पशुगणे चोदकविरोधस्तत्रावदानत्रयं होमस्त्वेकस्य हुत्वाऽपरस्याप्यवदानत्रयपूर्वकमदानान्तं कार्यम् । स्विष्टकृदिडाभक्षणे तु तन्त्रेणैव । तथापि पदार्थानुसमये द्वितीयहोमस्यातिदेशप्राप्तैडावदानानन्तर्यबाधापत्तेः ।

वस्तुतस्तु असन्निधिपदार्थान्तरव्यवधानेऽपि पदार्थस्य होमसम्पादकत्वेन दैवतावदानस्यात्रापि प्रदानावयवत्वोपपत्तेर्विभिन्नदेवताकपश्वेऽपि दैवतावदानादिप्रदानान्तेनानुसमयः । एकदेवताके तु पदार्थावयवानामेवानुसमय इति न कोऽपि विरोधः ॥१॥२॥६॥

नानाबीजेषु ॥ राजसूये, अग्नये गृहपतयेऽष्टाकपालं कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुमिति नानाबीजेष्टिराम्नाता । तत्रातिदेशप्राप्तानि कृष्णाजिनास्तरणोलूखलाधिवर्तनबीजावापावघातपरावपनविवेचनफलीकरणाद्यधिकरणकतण्डु-

* इत्यमेव पाठः सर्वत्र । भाष्ये तु, देवतान्यवदाय न तावन्येव होतव्यं सौविष्टकृतान्यवदेयानि सौविष्टकृतान्यवदाय न तावन्येव होतव्यं ऐडान्यवदेयानि,—इति प्रकृती श्रूयते, इत्युक्तम् ।

विकारे॥ दैवे पशावनूयाजानां पृषदाज्येनानूयाजान्यजतीति पृषदाज्यं श्रुतम्। प्रयाजानां शुद्धमेवाज्यं प्रकृतिप्राप्तम्। प्रकृतौ चोपभृत्येकस्मिन्नेव पात्रे प्रयाजाद्यर्थं चतुर्गृहीतं गृहीत्वा तस्मिन्नेव कालेऽनूयाजार्थे चतुर्गृहीतं गृहीतमासीत्। अत्रापि तथैव ग्रहणे प्रयाजाज्यस्य दधिसंसर्गेणोत्पवनावेक्षणयोरदृष्टार्थत्वप्रसङ्गेनाप्राकृतकार्यकारित्वाऽऽपत्तेः। समानयनवेलायां प्रयाजाज्यस्य न्यूनत्वापत्तेश्च। अतोऽवश्यं पात्रैकत्वमनुरुध्य क्रमो बाध्यताम्, विपरीतं वेति चिन्तायाम्।

पात्रैकत्वस्य मुख्यत्वात् पदार्थत्वाच्च बाधानुपपत्तेः क्रमस्यैव मन्त्रपाठकल्प्यत्वेन पदार्थगुणत्वेन च दौर्बल्याच्चित्रिण्युपाधिकरणन्यायेन बाधः। एवमष्टावुपभृतीत्येतद्वाक्यावगतचतुष्कद्वयमात्रविधायकस्यैककालत्वमपि। न च प्रकृतौ तयोः क्रमसम्भवादिना ग्रहणद्वयेऽपि विकृतावतिदेशेन प्राप्तयोरनयोः समत्वान्न बलाबलमिति शङ्क्यम्। मुख्यक्रमस्याऽऽदिकपदमात्रकल्प्य विहितत्वाभावेऽपि पदार्थत्वगुणत्वादिप्रत्यक्षत्वस्य विकृतावपि नियामकत्वोपपत्तेः। भवति च विकृतौ नियामकान्तराभावे प्राकृतस्यापि बलाबलस्य बलवत्प्रकारान्तरे तत्प्रत्याम्नातसिद्धमात्रप्रयोजकत्वेन नियामकता। अतस्त्वेकस्मिन्नेव पात्रे अनूयाजग्रहणवेलायां पृषदाज्यग्रहणमिति सिद्धम्।

पात्रैकत्वस्य पदार्थत्वेऽपि चतुर्थपदार्थमात्रप्रतिबद्धस्य तद्धर्मत्वाभावात् प्रकृत बाधाद्यदर्शनाद्भवत्सम्बन्धमात्रापेक्षया पदार्थाङ्गत्वात्पात्रैकत्वाद्गुणविरोधन्यायेन दौर्बल्यात्कैवल्यादृष्ट्या बाधाच उद्धर्थं दधि पृषदाज्यं चतुर्गृहीतस्य बाधः॥ ३ ॥ ५ ॥ ८ ॥

तदङ्गजपादिमन्त्राणामदृष्टविधयोपकारकत्वेनावयवत्वानापत्तेश्च । किं च सत्यप्यवयवत्वे कृष्णाजिनास्तरणोपस्तरणादीनां विहितत्वेनाङ्गत्वात् प्रयोगविध्युपसङ्ग्रहेण साहित्यावगतेः प्रत्येकानुसमयः किं न स्यात् । एवं स्रुवदानस्यापि होमसहविःसंस्कारकत्वात्पेषणावघातन्यायेन प्रत्येकानुसमयः किं न स्यादिति चेत् ।

न । यद्यपि कृष्णाजिनास्तरणादीनां स्वतन्त्रविधिविधेयत्वेऽप्यङ्गत्वेन प्रयोगविधिप्रयोज्यत्वे वा अवघाताद्यङ्गत्वेन तद्द्वारैव प्रयोज्यत्वावगमात्तदनुसमयेनैवानुसमय इति न प्रत्येकमनुसमयः प्रत्येकं साहित्यानवगतेः । एवं पत्रावपनादिप्रक्षालननिनयनान्तानामपि तण्डुलरूपावघातफलोपयोगितयाऽवघातार्थत्वाच्च पृथक्पदार्थता । अत एवादृष्टार्थमपि तदङ्गं न पृथक्पदार्थः । एवमुपस्तरणादेरपि स्रुचसंघर्षणद्वारा होमार्थत्वाच्च स्वातन्त्र्येण प्रयोज्यतेति न पृथगनुसमयः । स्रुवदानस्य तु हविःसंस्कारकत्वाप्यवत्तोद्देशेन होमविधानात्साधनेनावत्तहोमस्यैव प्रयोज्यत्वप्रदानार्थेऽपि पृथक्प्रयोज्यत्वाकल्पनाच्च पृथक्पदार्थत्वम् । अत एव पदार्थत्वं नाम स्वातन्त्र्येण प्रयोगविधिविधेयत्वम् । पदार्थावयवत्वेन सम्मतानां हि कृष्णाजिनास्तरणादीनां नावधानादिनिष्ठप्रयुक्तिविषयत्वज्ञानं विना प्रयुक्तिविषयत्वं ज्ञायते । अवघातादीनां तु नान्यनिष्ठप्रयुक्तिविषयत्वज्ञानोत्तरकालत्वनियतत्वज्ञानम् । प्रयोगविधिनाऽङ्गप्रधानोभयविशिष्टभावनाप्रयुक्तिज्ञापनेनाङ्गप्रयुक्तेरपि प्रधानप्रयुक्त्यन्यथानुपपत्तिप्रसूतत्वाभावात् । अतश्च यत्प्रयुक्त्यन्यथानुपपत्तिं विनैव यत्प्रयुक्तिविषयत्वज्ञानं, स ततः पदार्थान्तरमिति सिद्धम् ॥ ५ ॥ २ ॥ ७ ॥

क्रमत्वाभावात् । अभिषेचनीयोत्तरमपि पाठस्य सत्त्वेन पूर्व्ववत् प्राकृताङ्गोत्तरमेव करणमिति प्राप्ते ।

पूर्व्वं प्रयाजादिवदङ्गक्रमत्वाक्लृप्तावपि इदानीमेव प्रत्यक्षेण पाठेन एकराजसूयप्रयोगविधिपरिगृहीतानां विदेवनाद्यभिषेकान्तानां सहक्रमत्वोपपत्तौ अभिषेचनीयपाठेन प्राकृताङ्गानामानुमानिकत्वेन तैः सह विदेवनादीनां भिन्नप्रयोगविधिपरिगृहीतानां क्रमकल्पनानुपपत्तेरभिषेकापकर्षेणापकर्ष एव विदेवनादीनाम् ॥ ५ ॥ २ ॥ १० ॥

प्राकृताच ॥ दीक्षणीया ज्योतिष्टोमप्रकरणे समाम्नाता, चयनञ्चामारभ्याधीतं, वैकल्पिकं सोमयागाङ्गम् । तत्प्रकरणे च सावित्रहोमाख्याभरणादयश्चयनाङ्गभूता धर्माः श्रुताः । पश्चाच सचयनज्योतिष्टोमाङ्गदीक्षणीयाप्रयोगोद्देशेन केचिद्गुणाः श्रुताः । तदत्र दीक्षणीयायाः सामान्यतः सोमप्रकरणाम्नातदीक्षणीयाऽपूर्व्वपदार्थैः सह पाठेन सहक्रमत्वागमात् चयनप्रकरणे दीक्षणीयाया गुणमात्रश्रवणेन पाठाभावाच सावित्रहोमानामनुक्तानां दीक्षणीयादिमध्यान्ते निवेश इति प्राप्ते ।

गुणेनापि गुणिन उपस्थितेस्तदाक्षेपे गुणिन उद्देश्यतया सङ्कीर्त्तनाच गुणगुणिनोरेकस्थानावगतेः प्रत्यक्षेण विधेयरूपेण च पाठेन सामान्यरूपस्य पाठस्य बाधात् पूर्व्वं सावित्रादयः पश्चाद्दीक्षणीयेति सिद्धम् ॥ ५ ॥ २ ॥ ११ ॥

सन्निपात. ॥ चयनप्रकरण एव सर्व्वेव दीक्षणीयागुणश्रवणानन्तरं रुक्मप्रतिमोचनादि चयनाङ्गं श्रुतम् । ज्योतिष्टोमप्रकरणे च सामान्यतो दीक्षणीयोत्तर दीक्षितसंस्कारादण्डदानादय । तदत्रापि

प्रकृतेः ॥ अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदिति नक्षत्रेष्टिं विधाय मोऽग्ने जुहोतीत्युपहोमा विहिताः। प्रकृतौ च प्रधानस्विष्टकृतोर्मध्ये वाचनिका नारिष्ठहोमाः* समाम्नाताः। तद्-चोपहोमानां नारिष्ठेभ्यः पूर्वमनुष्ठानम्। औपदेशिकप्रधानपाठ-क्रमेण प्रधानानन्तर्यस्य विहितत्वात्। उपहोमानामौपदेशिकत्वेन नारिष्ठेभ्यः प्रथमसन्निहितत्वाच्चेति प्राप्ते।

उपकारस्याकाङ्क्षया विकृतिभावनया कॢप्तोपकाराणामातिदेशि-कानामङ्गानां प्रथमं गृहीतत्वेनोपहोमानामन्यतराकाङ्क्षया पश्चादन्व-यादतिदेशस्य च प्रधानवाक्यशेषत्वस्यैव लाघवादभ्युपगमेनोपहोमा-नामातिदेशिकाङ्गयुक्तप्रधानोत्तरमेव पाठेन क्रमावगतेः पश्चादेव करणम्। तथापि ब्राह्मणतर्पणान्ते कर्त्तव्यत्वे प्राप्ते मध्ये जुहोतीति वचनेनोपहोमसमाख्यया चाधेति स्थाननिर्देशात् नारिष्ठेभ्योऽनन्तर कार्या ॥ ५ ॥ २ ॥ ८ ॥

कृतदेशात्तु ॥ राजसूये अभिषेचनीयसोमयागानन्तरं वागद्-गपेयादिदेवनाद्योऽभिषेकान्ता राजसूयधर्मा अक्षैर्दीव्यति राजा-नक्षिनाति शौनःशेपमाख्यापयति अभिषिञ्चति इत्यादिभिर्विहिताः। तत्राभिषेकस्यावदानादेव माहेन्द्रस्य स्तोत्रं प्रत्यभिषिञ्चत इत्यभि-षेचनीयमाहेन्द्रकालेऽपकृष्टः। तदपकर्षेऽपि च तत्पूर्व्वपठितानाम-पि विदेवनादीनामपकर्षः। वेदिकरणन्यायेनापूर्व्वाणामेषां बहु-

---

* [illegible] च नारिष्ठहोमा इति पाठः। दश वै तनवो यज्ञस्य श्रिया इत्यादिमन्त्रैराम्नाता आज्याहुतयो नारिष्ठहोमा इति माधवाचार्य्याः।

# अथ पञ्चमोऽध्यायः।

## तृतीय पादः।

---

विवृद्धिः ॥ विकृतावेकादश प्रयाजान्यजति षडुपसद इत्यादि-विकृतौ अनेकव्यक्तित्वाधिकसंख्या श्रुता। सा प्रतिप्रधानं गुणावृत्ति-न्यायेन पृषदाज्यादिद्रव्ये एकैकस्मिन् प्रयाजादौ प्रत्येकमभिसम्बध्यत इति एकैक एकादशवारमावर्त्तनीय इति प्राप्ते।

द्वित्वादिसंख्यायाः पृथक्त्वनिवेशित्वादेकैकस्मिन् पञ्चस्वपि वा पृषदाज्यवदावृत्तिं विना एकादशत्वानुपपत्तेरुपस्थवाक्यगतत्वेन च कर्मभेदकत्वायोगादावश्यके अधन्ये प्रयाजपदे प्रयोगलक्षणया संख्या-विधौ वरं सहितैरेव प्रयाजैस्तल्लक्षणाश्रितप्रयाजप्रयोगाणां संहि-तानामेवोद्देश्यत्वसंपाद्या संख्येति प्राप्ते।

वस्तुतस्तु प्रयोगो नाम न पदार्थान्तरं येन लक्षणा स्यात् अपि तु प्रयाजानामेव यत्नान्तरम्। अतश्च यथैव प्रकृतौ पञ्च प्रयाजा इत्यादौ तत्तद्व्यक्तिजात्यवच्छिन्ना एव व्यक्तय प्रयाजत्वरूप-व्यापकजात्यवच्छेदेनोच्यन्ते। तथाऽत्रापि एकादशत्वसंख्यासम्बन्धार्थं तावद्व्यक्तीनामुक्तौ न लक्षणा। असमुदायभावेऽपि व्यापकधर्मा-वच्छिन्नोद्देशेन विहितैकादशत्वादिसंख्या अनेकत्र व्यासज्यवृत्तित्व-स्वाभाव्यात् व्यक्त्यन्तराण्याक्षिपन्ती लाघवात् प्रकृतिप्रत्यधिक-व्यक्तीः षडेवाक्षिपति नाधिका इति सर्वसम्प्रदायसिद्धिः। न चैवं प्रयोगलक्षणाभावे तिस्र आहुतीरित्यादावपि व्यक्तिभेदापत्तिः। तत्र

विधेयतावच्छेदकविजातीयहोमत्वस्यैकस्य पूर्वमक्लृप्तत्वेन भेदप्रतियोगितावच्छेदकतया त्रयाणामेव तेषां कल्पनयोपपत्तौ तत्तद्व्यक्तित्वस्य प्रतियोगितावच्छेदकीभूतस्य विधेयतावच्छेदकत्वकल्पने गौरवात्। प्रकृते तु क्लृप्तप्रयाजत्वस्योद्देश्यतावच्छेदकत्वात् संख्यायाश्च विधेयत्वाच्च काचित्कल्पनेति विषमम् ॥ ५ ॥ २ ॥ १ ॥

सम्यानात्तु ॥ तत्र प्रयाजैकादशत्वादिसंख्या स्वसम्पत्त्यर्थं व्यत्यन्तराण्याक्षिपन्ती चतुर्थोत्तमप्रयाजजातीयान्येवाक्षिपति। तदङ्गभूतयो प्राकृतनदङ्गदेवताप्रकाशकयोरपूर्वयो प्रैषयोर्मध्ये तयोरन्येषाम् प्राकृतदेवत्यमन्त्राणां पञ्चानामाम्नानाम्। तद्यथाऽऽप्ता त्रयाणामभ्यास स्यादितरे मन्त्राणामपकर्षापत्ति। समिदादिगतत्वस्यानुपस्थितेश्च। अतः सन्निधानाविशेषाच्चतुर्थोत्तमप्रयाजयोरेव चतुश्चतुरावृत्तिः। उभयत्राभ्यासपक्षे च प्राकृतदेवताबाधो लक्षणया वा तद्देवताप्रकाशनमित्यन्यदेतत्।

एवमनूयाजेष्वपि मन्त्रलिङ्गवशादेव प्रथमानुयाजस्याद्यावृत्त्यारोहणस्य द्वितीयस्याष्टमपर्यन्त पञ्चमप्रभृत्यभ्यासे नवमैकादशौ तृतीयस्येति। यत्र तु न किञ्चिद्गमकं, तत्र विषमसंख्याकस्थले त्ववश्यकल्प्याया अधिकाया आवृत्तेरनियमविषयत्वात् सर्वेषामनियमविषयकत्वमेवेत्यपि वक्ष्यते।

यत्र तु समसंख्याकैवावृत्तिर्यथा निरूढपशुषु षट्त्वश्रवणे, तत्रैकैकस्य द्विरावृत्त्याऽपि षट्त्वसम्पत्तौ नानियमाया एव चतुरावृत्तिः। समुदाये विहितस्यार्थान्यथानुपपत्त्या कल्प्यमानाया आवृत्तेः सर्वविषयत्वौचित्यात्। तत्र च त्रिरनूवाक्यं पठतामित्यादौ धर्म्यणानु-

धारादिभ्यः पूर्वमेव । यत्र त्वनारभ्याधीतमेव तेषां यागाङ्गतयाऽपि विनियोजकं वाक्यं, तत्र ग्रहणस्य यागाभ्यासोपकारकस्य सामर्थ्याद्भ्याससमुदायात्मकप्रवलदारकतयैव यागाङ्गत्वाद्दारीभूतप्रवलभेदेन प्रतिप्रवलं ग्रहणानुष्ठानं निर्वापाङ्गस्य मन्त्रस्येव मुष्टिरूपद्वारभेदेन। एवमनारभ्याधीतानां चित्रिणीरुपदधातीत्यादीनामपि प्रतिचितिं भेदेनानुष्ठानम्। चित्रिण्यादीष्टकानां हि यवनारभ्याधीतानामपि उपधानप्रकृतानामुपयोगापेक्षायां तस्मादग्निचित्सर्वमायुरेतीत्याद्यर्थवादप्राप्तद्ग्न्यङ्गत्वप्रतीतावपि अग्निपदाभिधेयप्रतिकारकचितिद्वारकतयैव तदङ्गत्वावगतेः प्रतिचित्यावृत्तिः। यां काञ्चिदिति वचनन्तु प्राकरणिकेष्टकाभिप्रायमिति प्राप्ते।

ऐन्द्रवायवादिग्रहणवदेवाभ्याससंपादनद्वारा यागोपकारकत्वस्यैव सिद्धेः प्रवलारम्भ्यात्मनुपत्निकत्वेऽपि द्वारत्वे प्रमाणाभावाच प्रतिप्रवलमावृत्तिरपि सकृत् एवानुष्ठानम्। एवं चित्रिण्यादेरपि न प्रतिचित्यनुष्ठानम् ॥ ५ ॥ ३ ॥ ६ ॥

अस्ति ॥ चित्रिण्यादीनान्तु यां काञ्चन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यादिति वचनेन मध्यमचितावुपधानम्। अत एवाभिपूर्वस्य जानाते: प्रत्यक्षज्ञानवाचित्वादाकार्यवत्त्वात् प्रत्यक्षब्राह्मणविहितेष्टकोद्देशेन मध्यमचितिरूपदेशविधानम्। उपधानन्तु प्रकरणप्राप्तमाश्रयः। प्रत्यक्षब्राह्मणवत्त्वञ्च इष्टकावाचिपदत्वस्य विनियुक्तमर्थोपधेयत्वमित्युक्तमेव भूमाधिकरणे। न च शिरोब्राह्मणवत्त्वस्योद्देश्यविशेषणता। मध्यमेन विशिष्टपरा-

ह्यागमो वक्ष्यते । तत्रागम्यमानानामेषां प्राक् पर्यासात् निवेशः ।
पर्यासशब्दस्य नदीपर्यासः क्षेत्रपर्यास इत्यादावन्तवचनत्वेन प्रसिद्धेः
समाख्ययैवान्तिमस्थानत्वावगतेस्तद्बाधार्थं प्राक् पर्यासादागन्तूनां
निवेशकल्पना । अत एव द्वादशाहे पार्ष्टिके द्वितीयेऽहनि पञ्च-
दशस्तोमके स्तोत्रीयानुरूपौ पठित्वा तृचपक्षौ तृचौ समाम्नाय
पश्चात्पर्यासः पठित इति भाष्ये ।

प्रकृतिकृप्तस्यानुरूपान्तत्वस्य पर्यासे बाधे प्रमाणाभावात्
समाख्यायाश्च प्रकृतौ पाठप्राप्तान्तिमस्थानगतत्वानुवादकत्वेन स्थान-
विधिकल्पकत्वाभावादन्त एवागन्तूनां निवेशः । द्वादशाहे पार्ष्टिके
द्वितीयेऽहनि तु वाचनिकं तृचपक्षोक्तृचयोः प्राक् पर्यासादनुष्ठानं,
तदपि तयोरेव । तद्विकारेष्वन्येषामागमस्त्वन्त एव ॥ ५ ॥ २ ॥ ४ ॥

अन्ते तूत्तरयोः ॥ यत्र तु विहृतस्तोमकेष्वेव क्रतुषु उत्तरयो-
र्माध्यन्दिनार्भवपवमानयोर्वक्ष्यमाणः सामागमस्तत्र स नान्ते । अना-
रभ्याधीतेन चौक्षि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्च
अत्रावपन्त्यत एवोद्वपन्तीति वचनेनाप्राप्तिमत्त्वलब्धविधिप्रापकेन
गायत्र्यादिष्वेव सामावापविधानात् । अतो नान्त इति प्रत्युदा-
हरणमात्रमिदम् ॥ ५ ॥ २ ॥ ५ ॥

प्रदेशवत् ॥ यानि प्राकरणिकानि ग्रहणान्यैन्द्रवायवादीनि,
तानि यथापाठमेव व्यवस्थितानीति न तेषु चिन्ता । यानि
त्वनारभ्याधीतानि तेष्वपि यथांश्वदाभ्यादौ प्राकरणिको विनि-
योगस्तत्र विनियोगविधिपाठबलादेवानुष्ठानसिद्धेर्न चिन्ताविष-
यत्वम् । अत एव न तयोरन्ते करणम् । अपि तु प्रातर्वचन एव

गमादाधानमात्रेणैवाग्निनिष्पत्तिरिति सिद्धत्वादग्नीनामाधानमात्रानन्तरमेवोत्तरक्रतूनां प्रवृत्तिः। पवमानेष्टयस्तु यदि भाष्यकारमतादन्यङ्गं, तदा स च सिद्धेष्वेवाग्निषु स्वोत्तरभाविक्रतूपयोगितया संसर्गेणसंस्कारविशेषाधायकाः। यदि तु वार्तिककारमतादाधानाङ्गं, तदा बृहस्पतिसववदेवैता अग्नीनां स्थापका इति न केषाञ्चित्क्रतूनामाधानानन्तरमेव करणेऽपि पवमानेष्टीनां वैयर्थ्यापत्तिः। अग्निं वै सृष्टमग्निहोत्रेणानुद्रवतीति पवमानेष्टिभ्यः प्रागेवाग्निहोत्रप्रवृत्तिं दर्शयति। अतश्चाहिताग्निर्न क्रिमन्दार्वेभ्यादध्यादित्यादावाहिताग्नित्वदेवाधानोत्तरमेव क्रतुप्रवृत्तिरिति प्राप्ते।

भाष्यकारमते तावत्तत्पदार्थे नैरपेक्ष्यसत्त्वेऽपि एकस्योत्पादकत्वमितरस्य संस्कारकत्वमित्यत्र प्रमाणाभावः। प्रत्युत पवमानेष्टीनामेव स्वविनियोजकवाक्ये आहवनीयोत्पादकत्वावगतेराधानस्य गुणवाक्यावगताहवनीयोत्पादकत्वं विलम्बोपस्थितिकम्। न चैवमस्तूभयोरुत्पादकयोर्विकल्पः। यथा निर्वपेद्द्वादशरात्रिषु निर्वपेदित्यादिकालविधिवशादेव समुच्चयसिद्धेः। वार्तिककारमते साङ्गस्यैवाधानस्याग्न्युत्पादकत्वात्र तदभावेऽग्निसिद्धिः। न च स्थापकत्वं बृहस्पतिसववत्। पवमानेष्टीनामाधानप्रयोगवहिर्भावेऽपि तदर्दधानकरणभावनावहिर्भावस्याश्रुतत्वेन स्थापकत्वकल्पनानुपपत्तेः। अतः पवमानेष्टिव्यतिरेकेणाहवनीयनिष्पत्तेरभावात्तदुत्तरमेवाग्निहोत्रादीनि। आहिताग्निमत्त्वेषु तु आधानोत्तरमेव पुरुषस्याहिताग्निपदवाच्यत्वोपपत्तेस्तदनन्तरं करणम्।

य[illegible]निदर्शनमुक्तं, तत्तूष्णीं होमस्याधानाङ्गभूतस्य स्तुत्यर्थं

मर्थकेन विशिष्टोद्देशोपपत्तेः । अतो मध्यमचितावेवोपधानम् । न चेद् प्राकरणिकविषयम् । अविशेषात् ॥ ५ ॥ ३ ॥ ७ ॥

प्राक् लोकम्पृणाया ॥ मध्यमायामपि प्राकरणिकेष्टकोपधानानन्तरमेवोपधानं चित्रिण्यादीनाम् । न तु प्राक् लोकम्पृणायाः । आगन्तुकत्वात् । न च यदेवास्या ऊनं यच्छिद्रं तदेतया पूरयति लोकं पृण छिद्रं पृणेति वचनेन लोकम्पृणायाः पूरणार्थत्वात्तस्यास्तदन्ते निवेशावगतेः तत्र प्राङ्निवेशश्चित्रिण्यादीनाम् । लिङ्गादेव मन्त्रस्य छिद्रपूरणार्थत्वे अस्य वचनस्य तदर्थताविधायकत्वाभावात् । कथञ्चिन्मन्त्रस्य तद्विधायकत्वेऽपीष्टकायास्तदर्थत्वे प्रमाणाभावाच्च ।

अस्तु वा मन्त्रे छिद्रपूरकत्वस्येष्टकायास्तत्पूरकत्वं विनाऽनुपपत्तेस्तस्या अपि तत् । तथापि तस्य चित्यन्तरे सावकाशत्वाच्च चित्रिण्यादीनामन्ते निवेशन्यायस्य निरवकाशस्य बाधः । न च लोकम्पृणाया अपि मन्त्रसमाम्नानबलात् मध्यमचितिमात्रविषयत्वम् । इति करणविनियुक्तत्वेनास्य मन्त्रस्येष्टकाया विश्रुतपदविनियुक्तत्वाभावात् । न च तथापि मन्त्रचित्यवान्तरप्रकरणपठितत्वेन तत्रैव निवेशापत्तेश्चयनमहाप्रकरणपठितत्वे चान्तिमचितावेव निवेशापत्तेः कथं सावकाशत्वमिति वाच्यम् । पूरणार्थत्वलिङ्गादेव द्वारभेदेन भेदोपपत्तेः सर्वविषयत्वादिति भाति ।

चित्रिण्यादीनामन्ते निवेशे लोकम्पृणायाः छिद्रपूरणरूपफलस्यैव बाधापत्तेर्वरं पूर्वपठितेष्टकोपधानोत्तरत्वरूपक्रमबाधेन चित्रिण्यादीनां प्राक् लोकम्पृणाया अनिवेशः ॥ ५ ॥ ३ ॥ ८ ॥

सन्तते ॥ आधानस्य नैरपेक्ष्येणोत्पत्तिवाक्येऽग्निनिष्पादकत्वाव-

नाग्निहोत्रस्य पूर्वप्रवृत्तिसूचकम्। तूष्णीं होमो हि नाग्निहोत्रहोमः। प्रमाणाभावात्। नाप्यग्निहोत्रधर्मकः। अर्थवादगतस्य नाम्नोऽनतिदेशकत्वात्। एतद्धोमस्याप्याधानद्वाराऽग्निप्रयोजकस्याग्निसम्बन्धित्वाविशेषादाग्रयणीयादिपदवदनतिदेशकत्वाच्च। अतोऽपूर्वस्यैव होमस्यैवं स्तुतिरिति नाग्निहोत्रस्य पूर्वप्रवृत्तौ लिङ्गम्। भिन्नप्रयोगपरिगृहीतानामपि च पौर्वापर्यमात्रं प्रसङ्गान्निरूपितम्। व्यवहिताव्यवहितसाधारण्येन पौर्वापर्येणैवाध्याहार्यं इत्यपि ध्येयम्॥ ५॥ २॥ ८॥

वर्षिते॥ वर्षति न धावेदित्यादीन्यग्निचिद्व्रतान्यामरणं वर्षमात्रं वा चयने निमित्ते पुरुषार्थतया, आधाने निमित्ते आहिताग्नित्ववदेव विहितानि। अत्र व्रतपदश्रवणादेवोभयथापि संकल्प*लक्षणा। पुरुषार्थत्वञ्च वाचनिकफलश्रवणाद्द्रष्टव्यम्। तदिदमग्निचित्त्वं भूतचयनमात्रस्यैव भूताधानवन्निमित्तत्वाच्चयनमात्रे कृते कर्त्तव्यमाहिताग्नित्ववदिति प्राप्ते।

कर्मणि, भूत इति चानुवर्त्तमानेऽग्नौ चेरिति सूत्रेण कर्त्तरि चिनोतेः क्विप्प्रत्ययविधानात्कर्मत्वाद्यन्यथानुपपत्त्या च भावनाक्षेपादग्निकर्मकचयनकरणकभावनाया एव भूताया निमित्तत्वावगतेरग्निशब्दवाच्यस्य च ज्वलनाख्यस्याग्नेः स्वरूपेण चयनकर्मत्वाभावाच्चयननिष्पादितस्थण्डिलाधारत्वद्वारा कर्मत्वावगतेराधारतायाश्च साङ्गयागसमाप्तिं यावदनिष्पत्तेः कृत्स्न एवाग्निकर्मकचयनकरणक-

* संकल्प,—इत्यशुद्धः पाठ आदर्शपुस्तकेषु।

पङ्क्तिकम् । अत एव दण्डादीनां दीक्षाऽभिव्यक्तौ समुच्चयः । अतः दृष्टान्त एव दीक्षितधर्मादीक्षितो न जुहोति न दीक्षितस्याव-मश्नीयादित्यादयः । न चैवमावेदनवैयर्थ्यमभिव्यक्तिवैयर्थ्यञ्चेति वाच्यम् । तद्विध्याधानबलेन तत्रैवपठितधर्माणामेव तदुत्तरत्र-प्रतीतेः ॥ ५ ॥ ३ ॥ ११ ॥

अङ्गवत् ॥ काम्यानामुद्भित्सौर्यादीनां नैमित्तिकानाञ्च भेदन-होमादीनां समिदादिवदेव पाठक्रमात्क्रमे प्राप्ते ।

उपायप्रवृत्तित्वावच्छिन्नं प्रति फलेच्छायाः कारणत्वान्नैमित्ति-कानुष्ठानस्य च निमित्ताधीनत्वात्तदनुरोधेनैव क्रमावगतेर्न पाठस्य नियामकता । वस्तुतस्तु यत्रैकप्रयोगविधिपरिग्रहोऽनेकेषां, तत्रैव क्रमापेक्षायां पाठादीनां क्रमनियामकता । न [illegible] यत्र भिन्नप्रयोग-विधिपरिग्रहः । अत एव तादृगध्ययने पाठः पारायणादावुप-युज्यते ॥ ५ ॥ ३ ॥ १२ ॥

य एतेन ॥ स्थिते भिन्नप्रयोगविधिपरिगृहीतानां क्रमानियमे कश्चिद्वचनात्पौर्वापर्यम् । यथा एष वाव प्रथमो यज्ञो यज्ञानां य-ज्ज्योतिष्टोमः य एतेनानिष्ट्वाऽन्येन यजते गर्त्तपत्यमेव तज्जव-तीति । तत्रैतच्छब्दो यद्यपि ज्योतिष्टोममात्रपरामर्शी, तथापि न सर्वसंस्थस्य ग्रहणम् । अपि त्वग्निष्टोमसंस्थस्यैव । संस्थान्तराणामन्य-शब्देनाभिधानस्याग्रिमाधिकरणे वक्ष्यमाणत्वेन तास्वपि ज्योति-ष्टोमोत्तरत्वस्यावश्यकत्वात्परिशेषादेवाग्निष्टोमसंस्थस्य पूर्वकरणसिद्धेः । अत एवातिरात्रमप्याकस्मादतिरात्रमेकं प्रथममाहरन्तीति वचनादेव प्रथमं करणम् ।

दीक्षाया अदृष्टरूपत्वाभिधानाच्च । अतो दण्डादीनामपि दीक्षार्थत्वात्सर्वान्ते सा । न चैवं नैरपेक्ष्यश्रवणादिकत्वापत्तिः । अदृष्टार्थतथैकप्रयोगविधिपरिग्रहेण समुच्चयावगतौ सन्नान्तरकार्ये नैरपेक्ष्योपपत्तेरिति भाष्ये ।

दीक्षणीयावाक्ये दीक्षिष्यमाण इति सन्प्रत्ययेन तस्या दीक्षार्थत्वं तावदवगन्तव्यम् । दण्डादीनां तु दीक्षयति पदश्रवणान्न दीक्षार्थत्वमवगम्यते । अपि तु तदनुकूलव्यापारार्थत्वमेव प्रथममवगम्यते । पश्चात्तु तत्सम्बन्धात्प्रयोज्यव्यापाररूपदीक्षार्थत्वं दण्डेन घटं कारयतीत्यादिवत्कथञ्चित्कल्प्येत । न च गौणावगतदीक्षणीययैव क्रत्वर्थत्वाद्दीक्षाया दण्डादिजन्यत्वकल्पनाऽवसरः । विरुद्धरूपत्वाच्च दण्डादीनां न क्रियाव्याप्यत्वज्ञानमन्तरेण दीक्षार्थत्वसम्भवः ।

न च प्रथमावगतप्रयोजकव्यापारार्थत्वमेव यथैव कारयतीत्यादिवत्तदर्थत्वमिति वाच्यम् । तथात्वे साक्षाद्दीक्षणीयार्थत्वाङ्गीकारेऽदृष्टार्थत्वापत्तेः । तदत्र दीक्षापदाभिधेयनियमपरिग्रहोपयोगि दीक्षावत्त्वज्ञानजनकतयैव दीक्षणीयार्थत्वम्, दीक्षार्थत्वमेव वाऽङ्गीकर्तुमुचितम् । आग्नेयेति मन्त्रस्य यागपात्रप्रकाशकतया यागाङ्गत्वमिव । अत एव परम्परासम्बन्धस्य सम्बन्धविधयैव बोधोपपत्तेर्न लक्षणाऽपि । ज्ञानजनकत्वस्य स्मारकविधया । सम्बन्धस्य च मानान्तरादनवगमेऽपि विध्यन्यथानुपपत्त्यैवावगमात् स्मारकत्वोपपत्तिः । तत्तद्विध्यन्तरैरेव च दण्डादीनां धारणकण्डूयनादिरूपक्रियाविधानाच्चाक्रियाविष्टानां स्मारकत्वसम्भव इति मननीयम् ।

अत एव तत्तत्क्रियार्थानामप्येषां दीक्षाऽभिव्यञ्जकत्वमप्यानु-

नार्थवादेनोद्भिदादीनां यज्ञान्तराणां सन्निधितत्वात् । न च तत्रैव कर्मान्तरत्वशङ्का । तस्योत्तरकालत्वादिविशिष्टधर्मस्य प्रापकत्वेनोपादेयत्व-सामानाधिकरण्येन विधेयत्वानाक्षेपकतया कर्मान्तरानापेक्षकत्वात् । अतः सिद्धमग्निष्टोमसंस्थाकज्योतिष्टोमान्यतद्विकारमात्रे तदुत्तर-कालत्वविधिरिति ॥ १ ॥ ३ ॥ १४ ॥

एकस्तोमो वा* ॥ ननु यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदशः स तं यः सप्तदशः स तं य एकविंशः स तमिति वाक्यशेषे एकस्तोमकानामेव संकीर्त्तनात्तेषामेवान्यशब्देन ग्रहणात्तत्रैवोत्तरकालत्वविधिरेकाधिकरण्यन्यायेनेति चेन्न । वाक्य-शेषस्यान्यथाऽप्युपपत्तेः। यो हि त्रिवृत्स्तोमः प्रकृतावनुष्ठितः चोदके-नान्यं क्रतुमापद्यते प्राप्नोति स स्तोमस्तं यज्ञक्रतुमभ्यस्तत्वाद्दीपय-तीति तस्यार्थः । सम्भवति च स्तोमान्तरसत्त्वेऽपि त्रिवृदादेरपि तस्मादनेकस्तोमकक्रतुदीपकत्वम् । पुत्रान्तरसत्त्वेऽप्येकस्य गुणवत्त्वविव-क्षया पितृदीपकत्ववत् ।

वस्तुतस्तु गुणविशेषस्य प्रकृते ऽविधानात्त्रिवृदादिमात्रस्तोम-प्राप्तौ च त्रिवृदादेरभावेन दीपकत्वानुपपत्तेर्वाक्यशेषस्य क्रतु-विशेषोपस्थापकत्वेऽपि विधौ प्रतिप्रधानावृत्तिन्यायेन सर्वार्थत्वप्रतीतेः सन्देहाभावेनैकाधिकरण्यन्यायाभावाच्च वाक्यशेषस्य विधिसङ्कोच-कत्वकल्पनाऽवसरः । अतस्त्रिवृदादिग्रहणं ज्योतिष्टोमीयाङ्गमात्रोप-लक्षणम् । तदङ्गमात्रस्य तद्विकृतावभ्यस्तत्वेन तद्विकृतिदीपकत्वा-

* एकस्तोमे वा,—इति भाष्यपुस्तके पाठः ।

अस्तु वाऽग्निष्टोमसंस्थाकज्योतिष्टोमपरामर्शकत्वमेवैतच्छब्दस्य । अग्निष्टोमसंस्थामभिप्रेत्यैव ज्योतिष्टोमे सकलधर्मविधानात् । अत एव तस्य भवतिशतं स्तोत्रिया इत्युपपद्यते । अग्निष्टोमसंस्थाकज्योतिष्टोम एव हि तावत्यः स्तोत्रिया न संस्थान्तरयुक्ते । एवञ्चातिरात्रप्रथमाहारोत्तरमपि(१) अग्निष्टोमसंस्थां कृत्वा एवोद्भिदादय कार्या इति द्रष्टव्यम् ॥ ५ ॥ ६ ॥ १६ ॥

अथान्येनेति ॥ एतच्छब्दार्थं निरूपितेऽन्यपदार्थो निरूप्यते । अन्यशब्दस्य पूर्वप्रकृतादितरवाचित्वं तदाक्षिप्तासंस्थानाञ्च सन्निहितत्वेन तासामेवाऽग्निष्टोमोत्तरत्वस्य विधिरिति प्राप्ते ।

न तावत्संस्थानां प्रकरणेन सन्निधानं विहितत्वात् । अधिकारोऽपि ज्योतिष्टोमस्यैव । एष वावेत्यादिवाक्यशेषे तस्यैव संकीर्तनाच्च । यज्ञानां ज्योतिष्टोमोद्भिदादीनां मध्येऽग्निष्टोमसंस्थाक एव प्रथममित्युक्तेऽन्येषामप्युद्भिदादीनां यज्ञपदेनोपादानाच्च ।

न चैवं संस्थानामयज्ञत्वादग्रहणम् । तासामप्यवयवस्य यज्ञत्वात् । अतस्याग्निष्टोमसंस्थाकज्योतिष्टोमान्य-तद्विकारमात्रे तदुत्तरकालत्वविधिः । न च ज्योतिष्टोमे यज्ञान्तरापेक्षया प्राथम्यमेव प्रकरणानुग्रहाय विधीयतामिति वाच्यम् । एष वावेत्यस्यार्थवादत्वेनाविधायकत्वात् । अथान्येनेत्यनेन तृतीयविधिप्रकारविषयया यागान्तरेष्वेवाग्निष्टोमपूर्वकालकत्वस्य तदुत्तरत्वमनियतस्य विधानसम्भवे प्रकरणबाधस्यादोषत्वाच्च ।

न च प्रकरणान्तरन्यायेनास्य कर्मान्तरत्वशङ्का । एष वावेत्यने-

(१) अतिरात्रस्य प्रथमं च आहार आहरणं तदुत्तरमपीत्यर्थः ।

# पञ्चमोऽध्यायः।

## चतुर्थः पादः।



क्रमकोप ॥ तदेव निरूपितेषु क्रमप्रमाणेषूक्तरीत्तरस्य दौर्बल्यं प्रागेवाचार्यैर्निरूपितम्। सुबोधत्वात्तु न सूत्रकारेणोच्यते। मिथ्यानुग्रहार्थन्तु क्वचिदुच्यते। श्रुतिविरोधे पाठस्य दौर्बल्यम्। यथाऽऽश्विनो दशमो गृह्यते तं तृतीय जुहोतीत्यत्र। पाठादैन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाति आश्विनं गृह्णातीत्येवंविधादाश्विनग्रहणस्य तृतीयस्थाने प्राप्तस्य श्रुत्या दशमस्थानेऽनुष्ठानम्। न तृतीयमिति तु पाठप्राप्तानुवाद एव। प्रवृत्तेः पाठेन बाधात्। एवमर्थेनापि पाठस्य बाधः। यथाऽग्निहोत्रं जुहोति यवागूं पचतीति। व्याख्यातं पूर्वमिदम् ॥ ५ ॥ ४ ॥ १ ॥

अवदान ॥ एवं मुख्यक्रमेण प्रवृत्तिक्रमस्य बाधः। यथा दर्श पाठाद्यांथ पूर्वं धर्मादोहनादयः, पश्चादाग्नेयस्य निर्वापादयः। तत्प्रवृत्तिक्रमेणैव हविरासादनप्रयाजशेषाभिधारणस्विष्टकृदवदानान्यपि कर्त्तव्यत्वेन प्राप्तानि मुख्यक्रमात्प्रथममाग्नेयस्य कार्याणि पश्चादन्यः। प्रधानानां हि पाठादेव प्रथममाग्नेयस्य पश्चात्साम्नाय्यस्यानुष्ठानम्।

यद्यपि आसादनादीनां याज्यापुरोऽनुवाक्याप्रवृत्तिक्रमात्ताद्-प्रागनुष्ठानमपि प्रसज्यत इति भूतभाविप्रवृत्तिक्रमाभ्यामनियमप्रसक्तौ मुख्यक्रमस्य नियामकत्वमात्रमिति भेद विरोधोदाहरणं सम्भवति,

स्यदुत्तरकालत्वस्युपपत्ते । अत एवान्यपदेन न सौर्यादिग्रहणम् । तत्र सौमिकाङ्गाभ्यासाभावात् । अतस्तद्विकृतिमात्रस्योत्तरकालतेति सिद्धम् ॥ ५ । ३ ॥ १५ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

पञ्चमस्य तृतीय पाद ।

यच्छब्देन निमित्तत्वावगतेः सकलकारकाणामन्वयस्य युगपत्त्वाच्च न विशिष्टोद्देशे वाक्यभेदः। अतश्च सिद्धवन्निर्देशान्यथानुपपत्त्या कल्पितेन विध्यन्तरेणोपरि हि देवेभ्यो धारयतीति वत्सोमाङ्गतया आधानानन्तर्यं विधीयते।

अथवा अहतपाप्मानो वा एतव एतौ खलु वाव आदित्य-उदयेवो पाप्मानमपघ्नन्ति तस्मादहरेवैनमुपनमेद्यादधीताथ यजेतेति वचनेनाथ यजेतेत्यनेनाधानानन्तर्यं सोमे विधीयते। यजेतेत्यनेन सोमस्यैव परामर्शात्। अत एवाथाद्धीतेत्यनेनाधान-एव कालबाध इति वक्ष्यते। अतश्च निमित्तश्रुत्यन्यथानुपपत्त्याऽपि न विध्यन्तरकल्पनम्।

अत एवेष्टिपूर्वत्व एव यदेष्ट्युत्तरमग्निविनाशादिनिमित्ताधाना-व्यवहितोत्तर सोमकरणं, तदा सोमे कालान्तरविधानोपपत्तेर्न विध्यन्तरकल्पनया विकल्पाङ्गीकरणं युक्तमित्यप्यपास्तम्। प्रत्यक्ष-विधिनैवापूर्वाधानानन्तर्यस्य विहितत्वात्। न ह्यथाद्धीतेत्यत्र पुनराधानप्रसङ्गोऽस्ति। तस्य निमित्तवत्त्ववर्त्तित्वेन तत्र कालान्तर-विधिवैयर्थ्यात्। अतश्चापूर्वाधानानन्तर्य एव कालान्तरविधा-नादिष्टिपूर्वत्वस्य सोमपूर्वत्वेन युक्त एव विकल्पः।

केचित्तु सोमेन यक्ष्यमाण इति भिन्नं वाक्यम्। नर्तु पृष्ठेदिति भिन्नम्। तथाहि प्रकरणान्तृतीयविधिप्रकारे लाघवादाधानोद्देशेन सोमाव्यवहितपूर्वकालता विधीयते। सोमपूर्वकालमात्रविधाने वाक्यवैयर्थ्यात्। अतश्च वाचनिकेन सोमपूर्वत्वेनेष्टिपूर्वत्वस्य विकल्प इत्याहुः।

तथाप्यन्यदेतादृशमुदाहरणं मृग्यम् । दूषकताबीजन्तु मुख्यक्रमे प्रधानप्रत्यासत्त्यनुग्रहः । प्रवृत्तिक्रमे त्वङ्गानां परस्परप्रत्यासत्तिः । अतस्तस्य बाधः । अथ च न प्रधानावदानमुदाहरणम् । तस्य प्रधानेनैकपदार्थत्वस्य स्थापितत्वात् ॥ ५ ॥ ४ ॥ ९ ॥

वचनात् ॥ आधानप्रकरणे यः सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तुं प्रतीक्षेत न नक्षत्रमिति श्रुतम् । न च तेन सोमस्याधानानन्तर्यं विधातुं शक्यम् । आनन्तर्यस्याश्रवणात् । आधानानन्तर्य-कालानादरोभयविधाने वाक्यभेदप्रसङ्गाच्च । अतो विहितकालानादरमात्र-माधानोद्देशेन विधीयते । सोमेन यक्ष्यमाण इति त्वनुवादः । तेन दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्येतद्वाक्यविहितदर्शपूर्णमासो-त्तरकालत्वस्येव सोमस्येति प्राप्ते ।

आधानमात्रोद्देशेन विहितकालानादरविधाने सोमेन यक्ष्यमाण-इत्यस्य वैयर्थ्यापत्तेः, आधानकर्तुः सर्वस्यापि सोमाधिकारित्वादि-शेषणस्य व्यावर्त्याभावेन वैयर्थ्यापत्तेः, सोमेनाधानान्तरं यक्ष्यमाणो-ऽग्निमित्यर्थावगतिः । न च रथकाराधानव्यावृत्त्यर्थं विशेषणोपपत्ते-र्नानन्तर्यकल्पना युक्तेति वाच्यम् । यक्ष्यमाण इत्यत्र भविष्यत्प्रत्यय-श्रवणेनानन्तर्यस्यावकल्पनीयत्वात् । रथकाराधानस्यादृष्टार्थत्वेनाग्नि-मिति द्वितीयाऽनुपपत्तेश्च । रथकाराधाने कालानादरस्य यदह-रेवैनमिति वचनेनैव सिद्धतया तस्य प्रसक्त्यभावेन निवारणीयत्वा-नुपपत्तेश्च ।

अतोऽत्र सोमाव्यवहितपूर्वकालीनाधाने निमित्ते विहितकाला-नादरो विधीयते । कर्तृसमानाधिकरणेन भाष्यकारोदाहृतेन

च सोमेनेष्ट्वाऽग्नीषोमीयो भवति यदेवादः पौर्णमासं हविस्तदनु* निर्वपेदिति वचनेन ब्राह्मणकर्तृकत्वे निमित्ते एकदेशोत्कर्षेण समस्तदर्शपूर्णमासोत्कर्षप्रतीतेर्ब्राह्मणस्य सोमपूर्वत्वमेव। न हि सहितयागसाधनेन श्रुतं फलं एकदेशाद्भवितुमर्हति। न च सोमोत्तरं क्रियमाणोत्कृष्टहविःसाध्यसहितपूर्वयागेभ्य फलसिद्धिः। दर्शपूर्णमासाभ्यामिष्ट्वा सोमेनेत्यनेन दर्शपूर्णमासपदवाच्यसर्वयागोत्तरत्वस्यैव सोमे विहितत्वेन तथा कल्पनाऽनुपपत्तेः। दर्शपूर्णमासाभ्यामिति तृतीयाबलेन परमापूर्वोत्पत्तेरप्यवगतत्वाच्च। अत इतरयोः क्षत्रिय-वैश्ययोः कल्पद्वयमिष्टिपूर्वत्वमेवेति प्रथमः पक्षः।

द्वितीयस्तु नैकदेशोत्कर्षेण सर्वदर्शपूर्णमासोत्कर्षः। प्रमाणाभावात्। साकम्प्रस्थाय्याधिकरणे ऐन्द्राग्नविध्यनुपपत्त्या फलवत्त्वाक्षेपे सर्वसाहित्यस्याविवक्षितत्वाच्च। अतो यस्य यावत्स्वधिकारस्तस्य तावद्भ्य एव फलसिद्धिः। अतश्च ब्राह्मणस्याप्युत्कृष्टहविर्भिन्नयागकरणोपपत्तेः कल्पद्वयम्। उत्कर्षः परमपौर्णमासीहविर्मात्रस्य। विधावविशेषश्रुतस्योद्देश्यपरस्य पौर्णमासपदस्यार्थवादेन सङ्कोचानुपपत्तेः। यदेवेत्यनेन साकल्यप्रतीतेश्चेति भाष्ये।

पौर्णमासीमात्रस्यैव च पौर्णमासपदव्यपदेशादाग्नेयस्योभयत्र विद्यमानत्वेन विशिष्य तात्पर्यग्राहकाभावे व्यपदेशानुपपत्तेः, प्रत्युतोपक्रमस्थार्थवादस्यैवाग्नीषोमीयहविर्मात्रतात्पर्यग्राहकस्य सत्त्वेन तस्यैवोत्कर्षः। यदेवेत्यनेकापेक्षन्तु वचनमुपांशुयाजस्याप्यग्नीषोमीयदेवताकत्वात्तदभिप्रायेण न विरुध्यते।

* तदनु,—इति भाष्ये पाठः

तन्न । वाक्यभेदे प्रमाणाभावात् । आधानाङ्गभूतसोमपूर्वत्वेन सोमाङ्गभूतेष्टिपूर्वत्वस्य विकल्पापादनायोगाच्च । किञ्चैवमस्मिन्नेव वाक्ये विशिष्टाधानविधिराधानमात्रविधिर्वाऽस्तु । सोमेन यक्ष्यमाण इत्यस्यैन्द्रवायवाग्रानित्यवदनुवादोपपत्तेः । न चेष्टापत्तिः । वसन्तादिवाक्यानां निमित्तार्थत्वापत्तेः । न च यच्छब्दस्य धात्वर्थाश्र- एव विधिप्रतिबन्धकत्वं न विशेषणांश इत्यत्र प्रमाणमस्ति । प्राप्तमात्र एव तस्य विधिप्रतिबन्धकत्वात् ।

न चाग्न्याधानोत्पत्तिविधित्वे अग्नीनित्येकवचनादाधानस्यैकाग्न्युत्पादकत्वापत्तिः । अग्निगतस्यैकत्वस्य ग्रहत्वस्येवोद्देश्यगतत्वेन प्रमाणान्तरसिद्धसंख्योपलक्षणार्थत्वात् । अनेकाग्न्युत्पादकत्वन्तु आयतनेषु सम्भारान्निदधातीत्यायतनबहुत्वविधानसामर्थ्यादित्युक्तं ग्रहैकत्वाधिकरणे कौस्तुभे ।

किञ्चैवं विहितकालानादरे शुद्धाधानेऽपि स्यात् सोमाव्यवहितपूर्वाधान एव । उत्तराधिकरणवक्ष्यमाणरीत्या कालानादरस्य सोमाङ्गत्वेऽपि चेष्टिपूर्वत्वपक्षेऽपि स्यात् सोमपूर्वत्वपक्ष एव । अतश्चास्मदुक्तप्रकार एव श्रेयान् । आधानानन्तर्येऽपि न पवमानेष्टिभिर्वा अधिकारपशुना व्यवधानम् । तेषां सोमोपकारकत्वात् । अत एव सोमाधानपक्षे पवमानेष्टीनां सद्य एव करणम् । सोमेनायक्ष्यमाणस्यैव संवत्सरादिकालाम्नानात् ॥ ५ ॥ ४ ॥ २ ॥

उत्कर्षात् ॥ एवं स्थिते कल्पद्वये आग्नेयो वै ब्राह्मणो देवतया

अत्र चानुपादेयगुणयोगेऽपि न कर्मान्तरत्वाशङ्का। दर्शपूर्णमासप्रकरणपठितत्वात् ॥५॥४॥६*॥

स्वकाले॥ एवं, य सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तुं† प्रतीक्षेतानृतंचमित्यनेन विधीयमानः कालानादरोऽपि प्रकरणादाधानोद्देशेनैव विधीयते। न तु सोमोद्देशेन। अङ्गगुणविरोधन्यायेनोपकारके आधान एव कालबाधस्य न्याय्यत्वात्। तेन स्वकाले सोमं कुर्वता अव्यवहितपूर्वमाधाने क्रियमाणे नाधानकालप्रतीक्षा कार्येति प्राप्ते।

अस्यामेव शाखायां पदद्वयेनैव यज्ञोपनमेदथादधीतेति वचनान्तरेणाधानमात्रे कालानादरस्य विहितत्वात्तत एव सोमाव्यवहितपूर्वाधानेऽपि कालानादरप्राप्तेरनेकवाक्येन स्ववाक्योपस्थितस्य सोमस्यैवोद्देश्यवाचकपदकल्पनयोद्देश्यत्वमिति तस्यैव कालानादर।

यत्तु शतपथे अपहतपाप्मानो वेत्यादिवचनेनोभयोरपि कालानादरविधानम्। तच्छाखान्तरत्वादाधानकालबाध इव न दोष। वस्तुतस्तु तत्राप यजेतेति वचनेनाधानानन्तर्यमेव सोमस्य विधीयते। अथादधीतेति पूर्ववचनेन त्वाधान एव कालबाध इत्युक्तमेव। अत्र चार्थमन्त्रवर्णेदीतिवल्लक्षणया विहितकालमात्रस्यानादरविधा-

---

* आज्यस्य चतुष्कर्णाधिकरणं षष्ठ भाष्ये शुल्वादिवम। अनेन तु चाने वाधिकरणे तद्विचारितमित्यनुसन्धेयम्।

† नर्तुं न प्रतीक्षेत,—इति भाष्ये पाठ। नर्तुं सचोत,—इति जैमिनीय न्यायमालाविस्तरे पाठ सृष्टविधानुदर्शनार्थं वर्तते इति तत्रैव व्याख्यानम्।

अत्र च सोमोत्तरकालत्वविधावुद्देश्यसमर्पकं पदं समभिव्याहृतसर्ववाचि-तच्छब्द एव । न त्वग्नीषोमपदं हविःपदं वा । तस्यार्थवादस्थत्वेन पौर्णमासपदवत्तच्छब्दार्थतात्पर्यग्राहकत्वात् । विशिष्टोद्देशे वाक्यभेदप्रसङ्गाच्च । उद्देश्यतावच्छेदकमपि च नाग्नीषोमदेवताकत्वमिष्टम् । तथात्वे यागे उत्तरकालतायाः अङ्गत्वानापत्तेः । नापि तद्देवताकयागत्वं तद्देवताकप्रकृतयागत्वं वा । तद्देवताकत्वस्य विशेषणत्वे तद्विकृतौ देवतान्तरयुक्तायां सोमोत्तरत्वस्यातिदेशानापत्तेः । उपलक्षणत्वे च विष्णुप्रजापतिदेवत्यस्याप्युपांशुयाजस्य सोमोत्तरत्वापत्तेः । किन्त्वग्नीषोमदेवतानिष्ठकारणतानिरूपितकार्यतावच्छेदकीभूतो यस्तत्तदपूर्वसाधनतावच्छेदकव्याप्यो धर्मस्तद्वत्त्वम् । अस्ति हि व्रीहियवादिवैकल्पिकसाधनस्थले व्यभिचारपरिहारायाग्नेयत्वोपांशुयाजत्वादिव्याप्योधर्म इत्युक्तं तेषामर्थाधिकरणे कौस्तुभे ।

नच यद्यपि आज्यभागयागादिसंस्कारविधावुद्देश्यतावच्छेदककोटिप्रविष्टत्वं गौरवात्तथाप्यत्रार्थवादवशात्तस्योद्देश्यतावच्छेदकत्वाविघात. । अतश्च विष्णुप्रजापतिजन्यतावच्छेदकव्याप्यधर्मयोर्व्यापकधर्मोपांशुत्वस्य च तथात्वेऽप्यग्नीषोमजन्यतावच्छेदकत्वाभावान्नोद्देश्यतावच्छेदकत्वम् ।

अग्नीषोमीयपुरोडाशे तु अपूर्वसाधनतावच्छेदकीभूतस्याग्नीषोमीययागत्वस्यैवाग्नीषोमजन्यतावच्छेदकत्वात्तस्याप्रत्वाच्च नोद्देश्यतावच्छेदकत्वविघातः । तत्तद्विकृतौ देवतान्तरयुक्तायां तत्तद्विकृतित्वस्यैव तत्तद्देवताजन्यतावच्छेदकस्य तत्तद्व्याप्यधर्मस्यानापन्नतयोक्तविधयाप्यत्वसत्त्वाच्चोद्देश्यतावच्छेदकत्वविघात इति ध्येयम् ।

तत्र पूर्णपर्वस्यपराह्णसन्धौ या विकृतिं कृत्वा प्रकृतेरन्वाधानं निर्विवादमेव। अन्वाधाने प्रातःकालस्तु उपदिष्टोऽपि अङ्गगुणत्वा-द्दातिदेशिकेनापि विकृतिप्रधानाङ्गप्रात.कालेन बाध्यते। पूर्वाह्ण-सन्धावपि औदयिकपर्वणः प्रकृत्यङ्गत्वात्पूर्वपर्वण्येवोपदिष्टपर्व-कालत्वानुरोधेनातिदेशप्राप्तप्रातःकालं द्व्यहकालत्वं बाधित्वा विकृ-त्यनुष्ठान तत प्रकृत्यन्वाधानमिति बोध्यम्। एवं सोमेऽपि। पूर्व-द्युरेवाधिककालव्याप्तिलाभात्।

यत्तु धूर्त्तस्वाम्यादिभिर्वैदिकैरावर्त्तन-तत्पूर्वसन्ध्योः प्रकृत्यनुष्ठा-नानन्तरं सन्निहित एव विकृत्यनुष्ठानम्। पौर्णमास्यादिशब्दानां पर्वान्यवचनत्वात्। यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी, यः परमः सन्निकर्षः साऽमावास्येति गोभिलसूत्रात्। अतश्च सन्निकर्षविप्रकर्षक्षणावच्छिन्नाहोरात्रस्यैव पौर्णमास्यमावास्या-पदवाच्यत्वात्तस्य च पूर्वाह्णसन्धौ द्वितीयदिन एव सत्त्वात्तत्रैव विकृत्यनुष्ठानम्। तदपि न प्रकृतेः पूर्वस्मात् द्व्यहकालेन विकृतौ प्रयङ्गविप्लवापत्तेः। अतोऽन्यथा प्रातःकालबाध एवेत्युक्तम्।

तत्र। सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्न्य आसन्नमा-मावास्याश्च पौर्णमासीश्च सोपैदित्यादिवर्णनादापामरप्रसिद्धे-श्चेति.प्राच्यादिवच्च पौर्णमास्यादिशब्दानां तिथिवचनत्वात्। न हि सूर्याचन्द्रमसोः परमसन्निकर्षविप्रकर्षक्षणावच्छिन्नाहोरात्रवाचित्वे पौर्णमास्यादिशब्दानां,

पर्वणो यस्तुरीयोऽश आद्या प्रतिपदस्त्रयः।

इत्यादिर्व्यवहारस्य, दैवे पूर्वविद्धायाम्ग्राह्यत्वात्याज्यत्वादिव्यवहारस्य

नात्पौर्णमास्यादिपर्वणोऽप्यनादर इति केचित् । नन्वेवमावान-वैयर्थ्यात्तु वाक्यभेदमप्यङ्गीकृत्य तच्चतुर्दशमात्रानादर एव । अन्यथा पद्माहनादेरपि बाधापत्तेरिति तन्न ॥ ५ ॥ ४ ॥ ५ ॥

विकृतेः ॥ च इत्येति वचनेन न तावत्प्रकृतौ पौर्णमास्यादि-कालविधिः । पञ्चान्ता उपवसथाः पञ्चाद्योऽभियज्या इत्यादि-वचनैस्तस्याः प्रतिपत्कालत्वविधानात् । अत एव पौर्णमास्यां पौर्ण-मास्या यजेतेत्यादिवचनेषु पौर्णमास्यादिशब्दावपि आरम्भदारकौ, पर्वप्रतिपत्समुदायवाचकौ वा । अत एव प्रकृतौ शुक्लकालत्वं प्राकर-णिकम् । अतश्चेदमनारभ्याधीतं वचनं विकृतौ धिविशेषपरं विहृति-पशुपरञ्च । अग्नीषोमीयस्यौपवसथ्येऽहनि विहितत्वात् ।

अतिदेशप्राप्तोऽपि च विकृतौ पौर्णमास्यादिकालोयथा पौर्णमासीविकाराणां पौर्णमास्यां करणं अमावास्याविकाराणाममा-मावास्यायां करणमित्येव व्यवस्थया प्राप्तानां व्यवस्थार्थं, तथा प्राकृतकालानां पौर्णमास्यादिकालविधानादातिदेशिकशुक्लकाल-बाधार्थमपि ।

न च तत्तद्विकृतीनां तद्विधावेव प्रयोगस्य प्राप्तत्वाच्च प्रयोग-विध्यभावेन प्रधानमात्र एव पौर्णमास्यादिकालविधानोऽपत्ते प्रतिपत्कालत्वादिबाधेऽपि चतुर्दश्यामप्याधानकरणेन प्राकृतशुक्ल-कालत्वबाधे प्रमाणाभाव इति वाच्यम् । कालस्य प्रयोगान्वयितया प्रयोगसमन्वयित्वेन विधानादप्याधानेऽपि पौर्णमास्यादिकालस्यौप-देशिकत्वात् । अतः साङ्गमपि विकृतिप्रधानं पौर्णमास्यादियागे कर्तव्यम् ।

सान्नाय्य ॥ नासोमयाजी संनयेदिति असोमयाजिनः सान्नाय्य-पर्युदासः । तेन तस्याग्नीषोमीयवत्सोमोत्तरत्वमेव । अतस्तदुभय-विकारेष्वपि सोमोत्तरत्वमेव । न ह्यत्रासोमयाजिनोऽधिकारपर्युदासो-ऽनेन विवक्षितो नातिदिश्येत । कर्तृसामानाधिकरण्यात्तु यागकर्तृत्व-पर्युदास एव । अतश्च युक्तोऽतिदेशः ।

अत्र च दैक्षस्य नोदाहरणत्वम् । औपदेशिकसोमप्राक्कालत्व-विधानात् । तद्विकाराणाञ्च प्रकृतावनङ्गत्वात् सोमोत्तरत्वनियमः । न चान्वारार्थस्येव प्रकृतावभावेऽपि प्रकृति-प्रकृतितो ग्रहणमिति वाच्यम् । अपेक्षितविषय एव तथा ग्रहणेन सोमोत्तरत्वस्यानपेक्षि-तत्वात् । वस्तुतस्तु अपेक्षाया उपायान्तरेणापि निवृत्त्युपपत्तेर्नान्वा-रार्थेऽपि ग्रहणम् । अन्यथा पितृमेधविकारे चोदकस्याप्यति-देशापत्तेः । न चैवं दैक्षविकाराणामनिर्दिष्टकालविशेषाणामौ[illegible]-ध्यकालकत्वापत्तिः । तस्याङ्गत्वनिबन्धनतया तदभावे अप्राप्तेः । अतस्तद्विकारविकाराणां सोमोत्तरत्वमेव ।

यत्तु याज्ञिकानां प्रागप्यनुष्ठानं, तच्छाखान्तरे सान्नाय्याग्नी-षोमीययोः प्रागपि विधानादवगन्तव्यम् । एवमैन्द्राग्नविकाराणामपि सोमप्राक्कालकत्वमेवेति सूत्र तस्याप्युपलक्षणमिति केचित् । वस्तुतस्तु अश्रवणात् इत्यस्य पक्षेऽनुक्त्या कर्तृसामानाधिकरण्याभावादधिकारि-विशेषणत्वस्यैव प्राधान्यादवगतेस्तस्य चानतिदेशाद्युक्तं तद्विकाराणा-मनियतकालत्वम् ॥ ५ । ४ । ८ ॥

तथा सोमे* ॥ सोमे दृष्टिपूर्वत्वमाधानाव्यवहितोत्तरत्वञ्च

* तथा सोमविकारा दर्शपूर्णमासाभ्याम् — इति भाष्यधृते सूत्रपाठः ।

च कथमप्युपपत्तिं सम्भवति। दैधस्यैवाप्रसक्तेः। अतस्तिथिपरा एवैते शब्दाः। तिथिनामासञ्ज्ञकचन्द्रकलाव्यतिरिक्तचन्द्रकलानां मध्ये एकैकस्याः कलायाः सूर्यमण्डलेन आद्यावयवविप्रकर्षादारभ्यान्त्यावयव-विप्रकर्षे आद्यावयवसन्निकर्षादारभ्यान्त्यावयवसन्निकर्षे वा[1] यावता कालेन जायते, तावान्कालो यथाक्रमं शुक्लकृष्णपक्षगतः प्रतिपद्द्वितीयादिशब्दप्रतिपाद्यः ।

अमा षोडशभागेन देवि, प्रोक्ता महाकला ।
संस्थिता परमा माया देहिनां देहधारिणी ॥
अमादिपौर्णमास्यन्ता या एव शशिनः कलाः ।
तिथयस्ताः समाख्याताः षोडशैव वरानने ॥
तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि ।
चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥
पक्षत्याद्यास्तु तिथयः क्रमात्पञ्चदशैव ताः ।
दर्शान्ताः कृष्णपक्षे तु पौर्णिमान्ताश्च शुक्लके ॥

इत्यादि वचनात् । अत एव तिथिशब्दः प्रतिपदादिशब्दाश्च कलास्वेव शक्ताः काले तु निरूढलक्षणयेति ध्येयम् ।

एवञ्च पौर्णमास्यमावास्याशब्दावपि न योगेनान्तिमपक्षपर्वणी तदवच्छिन्नाहोरात्रविषयौ वा । गोभिलसूत्रमपि उक्तविधसन्नि-कर्षविप्रकर्षकालोपलक्षणमेव व्याख्येयम् । तस्मिंश्च न विहृतीनां शुद्धकालत्वमिति ॥ ५ ॥ ४ ॥ ७ ॥

---

(१) अत्र विप्रकर्षसन्निकर्षौ शुक्लकृष्णपक्षीयतिथ्यभिप्रायेण द्रष्टव्यौ ।

श्रीगणेशाय नमः ।

# षष्ठोऽध्यायः ।

## प्रथमः पादः ।

---

द्रव्याणाम् । एवं पञ्चमके प्रयोज्यधर्मे निरूपितेऽधुना तदधिकारी निरूप्यते ।

तदाधिकारो नाम फलभोक्तृत्वसमानाधिकरणकर्तृत्वम् । श्राद्धादौ पित्रादेर्ऋत्विजाञ्चाधिकारव्यावृत्त्यर्थं विशेषणद्वयम् । न चैवं जातेष्टौ पितुः फलभोगाभावादधिकारानापत्तिः । सन्ध्याद्यकरणे प्रत्यवाये करणस्य प्रत्यवायादिफलकत्वेन पापक्षयफलकत्वाभावादिति वाच्यम् । प्रवृत्तिप्रयोजकफलेच्छासमानाधिकरणकर्तृत्वस्यैव विवक्षितत्वात् । जातेष्टिश्राद्धादावपि फलस्यान्यनिष्ठत्वेऽपि तदिच्छाया यजमाननिष्ठत्वादधिकाराविघातः । ऋत्विजामपि यजमानस्य फलं भूयादितीच्छया स्वनिष्ठकर्तृत्वसमानाधिकरणत्वात् अधिकारापत्तिरतः प्रवृत्तीत्युक्तम् । दक्षिणाप्राप्तिर्मे भूयादितीच्छाया एव ऋत्विक्प्रवृत्तिजनकत्वेन यजमानेच्छाया प्रवृत्तिप्रयोजकत्वाभावात् ।

अयञ्चाधिकारो विध्यादिसिद्धेष्टसाधनत्वसमानाधिकरणस्वकृतिसाध्यत्वज्ञानादिविधिप्रमाणकः । अयमेव चाधिकारविधिरित्युच्यते । तच्चाधिकारस्येष्टरूपप्रवृत्तिफलघटितत्वात्तद्वेष्टरूपं फलं भावनायामस्ति न वेति प्रथमं विचार्यते ।

वैकल्पिकमङ्गम्। अतस्तद्विकारेषु तथैवातिदेशप्राप्तावपीष्टिपूर्वत्वमेव। एष वाव प्रथम इति वाक्यविहितज्योतिष्टोमोत्तरत्वबलेनाधाना-नन्तर्यविहितोत्तरत्वस्य तेषु कर्तुमशक्यत्वात्। अतश्चाधानानन्तर्यस्य प्रकृत्य-र्थत्वेनानतिदेशादिष्टिपूर्वकत्वमेवातिदेशिकं तेष्विति सिद्धं क्रमस्य पदप्रमाणकत्वम् ॥५॥४॥८॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां पञ्चमस्य
चतुर्थः पादोऽध्यायश्च समाप्तः।

च पुरुषप्रवृत्तिसिद्धेर्न विधेर्वैयर्थ्यमपि । सर्वथा यागस्यैव भाव्यत्वेनेष्टसाधनत्वाभावाच्च प्रवृत्तिप्रयोजकप्रवृत्तिविषयजन्यफलेच्छासमानाधिकरणकर्तृत्वरूपाधिकारसिद्धिरिति प्राप्ते ।

न प्रवृत्तिरूपफलयोग्यत्वमात्रं विध्यर्थः । वैयर्थ्यापत्तेः । नापीष्टसाधनत्वानुमितेर्भ्रमत्वम् । ज्ञानानां स्वतः प्रमाणत्वेन बाधकं विना भ्रमत्वानुपपत्तेः । अतश्चोक्तसिद्धप्रमात्वनिर्वाहार्थं यागे इष्टसाधनत्वविषयोऽपि वाच्य एवेति भावनायामिष्टभाव्यकत्वमप्रत्यूहमेव ।

यदपि कामनाया निमित्तत्वमङ्गीकृत्य विधेरकरणजन्यप्रत्यवायाक्षेपकत्वेन प्रवर्तकत्वमित्युक्तम् । तन्न । कामनाया प्रवृत्तिजनकत्वेऽपि निमित्तत्वे प्रमाणाभावात् । स्त्रीकाम इत्यादावपि न तस्या निमित्तत्वम् । प्रायश्चित्ताकरणे प्रत्यवायान्तरप्रसङ्गात् । अपि तु प्रमाणान्तरसिद्धकामनाजनितप्रत्यवायनाश्यत्वमेवेति तत्रापीष्टसाधनत्वाक्षेपकत्वमेव विधेः ।

अतश्च सर्वत्रानैमित्तिकस्थले अकरणे प्रत्यवायाक्षेपकत्वापेक्षया लाघवादिष्टसाधनत्वमेव विधिना आक्षिप्यत इति तद्बलाद्भावनाया इष्टभाव्यकत्वसिद्धिः । यथा चैव सति नैमित्तिकस्थले पापक्षयभाव्यकत्वं तथा यावज्जीवाधिकरणे निरूपितम् ।

तच्चेह स्वर्गपुत्रादि स्वर्गकामादिपदैः समर्प्यते । योग्यत्वात् । कामशब्दयोगाच्च । कामना हि स्वरसतः फले, द्रव्ये चौपचारिकी । अत एव स्वर्गशब्दोऽपि श्रुतिस्मृतिपुराणादिवशाद्दुःखासम्भिन्नसुखयोग्यदेशविशेषवाची । आकृत्यधिकरणन्यायेन वा तादृशसुखमात्रवाची । न तु चन्दनादिवाची । तत्रत्याधुनिकप्रयोगस्त्वौपचारि-

तत्र भावनायाभाव्यापेक्षायां पदश्रुत्या धात्वर्थस्यैव सर्वत्र भाव्यत्वं न स्वर्गादेः । अपि तु तस्य साधनत्वेनैव योग्यत्वात् । पश्वादिपदादेरिव स्वर्गशब्दस्यापि चन्दनं स्वर्गं इत्यादिप्रयोगात् द्रव्यवाचित्वमेव । सुखविशेषदेशविशेषवाचित्वपक्षेऽपि तत्रैकवाक्यतापरत्वाच्च । कामशब्दस्तत्र स्वर्गसकामनानुवादः । अथवा स्वर्गकामशब्दः कर्तृविशेषमेव यागाङ्गत्वेन विदधद्विशेषणीभूतं कामनामपि तदङ्गत्वेन विधत्त इति न कश्चिद्विरोधः । न च विधिश्रुतिविरोधादिष्टभाव्यकत्वावगमः । विधेः प्रवृत्तिजननस्वरूपयोग्यतयैव वाच्यत्वेन फलोपधानस्याव्यत्याभावात्* इष्टविरहेऽपि भरण्यस्वदस्वर्विधेः प्रवृत्तिजनकत्वोपपत्तेः । न हि फलोपहितप्रवृत्तिजनकत्वं विध्यर्थं । विधिश्रवणेऽपि केषाञ्चित्प्रवृत्त्यदर्शनात् । अत एव प्रवृत्तिविषयस्येष्टसाधनत्वाक्षेपकत्वमपि विधेर्न प्रामाणिकम् । यदि तु प्रवृत्तिस्वरूपयोग्यत्वमात्रोक्तौ वाक्यस्य वैयर्थ्यापत्तिः शङ्क्येत, ततो यागस्य समानपदश्रुत्या भाव्यत्वावगमेऽपि यागे भ्रमप्रमासाधारणप्रवृत्तिकारणेष्टसाधनत्वज्ञानस्यैवाक्षेपात् । भ्रमात्मकेष्टसाधनताज्ञानादेव प्रवृत्तिसिद्धेर्नेष्टसाधनताऽऽक्षेपकत्वम् ।

अथ वा, अस्तु स्त्रीकामः प्रायश्चित्तं कुर्यादिति वत्स्वर्गकामनाया अपि निमित्तत्वम् । ततश्च निमित्ते[१] नैमित्तिकाकरणे प्रत्यवायमात्रं, न तु करणे किञ्चिदिष्टम् । अकरणे प्रत्यवायभियैव

* इत्यमेव पाठः सर्वत्र । न च लोकप्रमाणम् । फलोपधानस्याव्यत्याभावात्,—इति तु प्रतिभाति ।

(१) निमित्ते सत्यपीत्यर्थः ।

फलात् । अत एव स्वर्गकामादिपदमपि लक्षणया स्वर्गपरं, प्रथमा च कर्मत्वपरेति भावनान्वयोपपत्तेर्नान्योपसर्जनत्वेन स्वर्गस्य तदन्वयाशङ्का[1] ।

स्वर्गकामोऽधिकारित्वेनान्वीयेत* इति स्वर्गादिवाचकद्वितीयान्तपदाध्याहारेण तदन्वय इति केचित् । तन्न । फलापेक्षायाः प्राथमिकत्वात् । लक्षणाया अध्याहारापेक्षया लघुत्वाच्च । एवञ्च बलवत्तरविधिश्रुत्याद्यनुरोधेन स्वर्गादेरेव भाव्यत्वावगतेः सामान्यप्रवृत्ता पदश्रुतिरपि यागादेः करणत्वमेव लक्षणया प्रतिपादयतीति सिद्धं उक्तरूपाधिकारः । अत्र चोक्तविधेयकाफलान्यतरमात्राधिकरणं कर्तृत्वं अधिकार इति बोध्यम् । तेन नित्यस्थले वाक्यद्वयेच्छायाः प्रवृत्तिप्रयोजकत्वाभावेऽपि नाधिकारविघातः ॥ ६ ॥ १ ॥ १ ॥

फलार्थत्वात् ॥ स्त्रिङ्ऽधिकारे न वेषामिति चिन्त्यते । तत्र

* इत्यमेव ग ड. सर्व्वत्र । नान्वीयते इति तु समीचीनं प्रतिभाति ।

(१) इदमत्र बोध्यम् । विधिवाक्येषु भावनैव विधिप्रत्ययार्थः । भावना चोत्पादना भावयितुर्व्यापारः । भावना च किं, केन, कथमित्यंशत्रयमपेक्षते । तत्र किमिति फलाकाङ्क्षा । सैव भाव्याकाङ्क्षेत्युच्यते । फलस्य भाव्यत्वात् । केनेति करणाकाङ्क्षा । करणस्योपकारकं इतिकर्तव्यतापदवाभिधेयं यत्, कथमिति तस्याकाङ्क्षा । तत्र स्वर्गकामपदेन लक्षणयाऽवगतः स्वर्गः भाव्यत्वेनान्वेति । स्वर्गकामपदोत्तरवर्तिनी प्रथमा कर्मत्वमवगमयति । सुपां सुलुगित्यादिना द्वितीयैकवचनस्य स्वादेशसम्भवात् । धात्वर्थः यागादिः करणत्वेनान्वेति । प्रयाजाद्यङ्गकलापश्चेतिकर्तव्यतात्वेन । तथा च प्रयाजादिभिरुपकारं सम्पाद्य यागेन स्वर्गं भावयेदित्यर्थः पर्यवस्यति । इत्यमर्थभावनाबोधः । शब्दभावनाबोधस्तु प्रकृतानुपयोगादिह न प्रदर्शितः ।

गतसोमावयवनियमफलकपूतीकत्वनियमकरणेऽपि न पूतीकानां मुख्यसदृशाभावे उपादानम् । किं तु सोमाभाव एव । वचनस्यैव सोमप्रवृत्तिकतया नियामकत्वात् । 'यदि सोम' मित्यनुवादसामर्थ्याच्च । एवं च पूतीकापचारे सोमपूतीकोभयसदृशं ग्राह्यम् । पूतीकात्वस्यापि कारणकोटौ प्रवेशात् ।

यत्तु शास्त्रदीपिकायामेतादृशविषये सोमसदृशमेव ग्राह्यमित्युक्तम् । तत्तन्त्ररत्नविरोधादुपेक्षितम् । तदभावे तु सोमसामान्यसदृशं पूतीकात्वावच्छिन्नसंसर्गस्य सोमावयवाङ्गत्वेन गुणलोपे चेति न्यायेन बहुतरसोमावयवानामेवानुग्राह्यत्वात् । अभावे विधिपक्षे तु सोमाभावे निमित्ते पूतीकानामेवाङ्गत्वात्तत्सदृशमेवेति विशेषः । अतएव यच्च व्रीह्यादौ तदवयवत्वेनैव नीवारप्रतिनिधिः, तच्च नीवारत्वस्यानङ्गत्वात्तदपचारे व्रीहिसदृशमेवोपादेयं, न तूभयसदृशमित्यपि सुगमम् । अतएव मूले उभयविधप्रतिनिध्यपचारे अधिकरणद्वयं कृतम् । तन्त्रबाधकत्वादुपेक्षितम्* । यदा मुख्यमलभ्यं मत्वा प्रतिनिधिमुपादातुं प्रवृत्तः, उपादाय वा विवाद्यः सर्वे वा संस्काराः कृताः, कार्यं न कृतं, तत्र कार्यकरणात्पूर्वं मुख्यलाभे तमेवोपादाय पुनः संस्कारान्कृत्वा तेनैव प्रधानं कार्यम् । मुख्याभावे विकल्पोपादानस्य वाचनिकस्याप्यन्याय्यत्वात् ।

न च प्रतिनिधित्यागे सङ्कल्पबाधः । द्रव्यांशे पृथक्सङ्कल्पे प्रमाणाभावात् । सत्त्वेऽपि वा यथाशक्ति शास्त्रार्थं सम्पादयिष्य इत्येव सङ्कल्पात् । प्रधानानुरोधेन पुनः संस्कारकरणस्य न्याय्यत्वाच्च । यदा

* अप्रकृतोऽयं पाठः मूले स्थितत्वान्निवेशितः ।

न च सर्वमते हविष्ट्वावच्छिन्ननाशादिना हविरयोग्यत्वस्य निमित्तत्वे द्व्यवयवनाशेऽपि आज्येन यागापत्तिः। निमित्तज्ञानस्यैव नैमित्तिकानुष्ठापकतया तादृशनाशस्य नित्यतया च निमित्तत्वानुपपत्तेः। अङ्गुष्ठपर्वन्यूनावशेषणीयातिरिक्तावयवनाशे [illegible] भवत्येवाज्येन यागः।

तदेवं मीमांसकमर्यादा। याज्ञिकास्तु तां न मन्यन्ते। तेषामयमाशयः। एकदेशनाशवदेवैकदेशनाशस्य न निमित्तम्। एकदेशनाशेऽपि पुरोडाशाज्यपयोदधित्वादेः प्रत्यभिज्ञायमानत्वात्। तस्यैव हविष्ट्वावच्छेदकत्वेन यावत्तिसृमौष्टिपरिमितत्वादेस्तदनवच्छेदकत्वात्। तस्याशक्यावशेषणीयत्वाच्च। अत एकदेशनाशेऽप्यवशिष्टेनैव यागः। होमः परं अध्यापादानकत्वाभावे द्व्यवदानासम्भवात् लुप्यताम्। वस्तुतस्तु यावदवशिष्टं तथापि हविष्ट्वात्तदध्यापादानकत्वं सम्भवत्येवेति होमोऽपि कार्य एव। अत एवाश्वलायनः। द्व्यवदाननाशे पुनराप्यायनादवदानमिति। अतश्च यद्यपि मीमांसकमतं न्यायसिद्धं भवेत्तथापि सत्यनुमितवचनेन तद्बाधः। अग्निष्टुति समस्तयोरेवम्। कृत्स्नहविर्नाशे तु अनेकहविष्कयागविशिष्टे कतिपयहविर्नाशे हविरन्तरोत्पत्तिरेव। सर्वहविर्नाश एवाज्येन पुनरुत्पादितेन* यागः। अतएवापस्तम्बः। यद्यमुक्तदेवतं हविर्व्यापद्येतान्यद्धविस्तद्दैवतं निर्वपेत्, यस्य सर्वाणि हवींषि आज्येनैतदेवताः परिसङ्ख्याय यजेतेति। यद्यपि चोत्तरवाक्ये श्रुतौ च सर्वत्वमवि-

---

* पुनरुत्पादितेन वा,—इति भवितुं युक्तम्।

# अथ षष्ठोऽध्यायः।

## चतुर्थः पादः।

शेषात् ॥ दर्शादौ यदा सकलस्य पुरोडाशस्य दधिपयसोरन्यस्य वा हविषः सम्पूर्णस्य नाशस्तदा प्रधानानुरोधेन हविरन्तरोत्पत्तौ प्रसक्तायां यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येनैता देवताः परिसङ्ख्याय यजेतेति श्रुतेनाज्येनैव याग इत्यविवादम्। अत्र हि नाशादीनां प्रत्येकं निमित्तत्वे वाक्यभेदापत्तेस्तत्प्रकृतहविरयोग्यत्वमेवार्थसमवेतदोषीभवतया निमित्तम्। न तु हविरलाभः। नाशानुलेखवैयर्थ्यापत्तेः। अतएवानुत्पन्नपुरोडाशाद्यभावे नाज्यनियमः, किन्तु यत्किञ्चिदनियतप्रतिनिध्युपादानमेव।

एकदेशनाशादौ च यदि ध्रुवदानग्रहणोत्तरं पात्रीस्थस्य कुम्भीस्थस्य वा नाशस्तदा भाष्यकारमते तावद्ध्रुवदानस्यैव हविर्द्रा-क्षेपकार्याभावेऽपि तेनैव यागः। वार्त्तिककारमते तु यावन्निरुप्तव्रीहिपरिमितपुरोडाशस्य, यावद्दुग्ध सान्नाय्यस्य च हविष्ट्वाद्धविर्नाशत्वेन पात्रीस्थनाशेऽपि आज्येनैव यागः। एवं तन्मते ध्रुवदाननाशेऽपि हविर्नाशाविशेषाद्धविरन्तरोत्पत्तिप्रसक्तौ वचनादाज्येन यागः। भाष्यकारमतेऽपि तादृशविषये आज्येनैव यागो न पुनः पात्रीस्थादवदानम्। मध्यात् पूर्वार्धाच्चावद्यतीत्यनेन शेषस्य यावदुपात्तस्य प्रकृतस्य पुरोडाशादेर्मध्यादिदेशः तदुपादानतया तदुपरितनभागस्यैवावदेयत्वात्। तस्य च नष्टत्वेन पुनरवदाने मध्यादेरेवावदेयत्वप्रसङ्गात्। अतस्तत्रापि हविरन्तरोत्पत्तिप्रसक्तावाज्येन यागः।

अत्र हि दृष्टोद्देशेन कर्त्तृविशिष्टभक्षान्तरविधानेऽपि विशेषण-विधिवेलायां प्राप्ताप्राप्तविवेकेन भक्षो यजमानप्राधित्यश्च विधीयते। ऋत्विजां तु भक्षस्य प्रयाजशेषाभिधारणन्यायेन कर्त्तृसंस्कारकत्वस्यापि वक्ष्यमाणत्वेनानन्यार्थत्वात् प्राप्तिसम्भवेन न विधानम्। अत एवा-नन्तत्वाद्यप्राप्तं यजमानप्राधित्यं तु विधीयते।

यदि तु क्रियमाणकर्मणि बलाधानार्थत्वमपि भक्षस्येति विभाव्यते, तदाऽस्तु यजमानपदस्य मत्वग्रहणं पत्नीपरिसङ्ख्यार्थम्। सर्वथा भक्षान्तरे कर्त्तृपरिसङ्ख्याऽभावाच्छंयुवाककालेऽपि भक्षे ऋत्विज एव कर्त्तारः। अस्मिंश्च पक्षे तस्मिन् पत्नीयजमानयोर्निवृत्तिरन्ते-वर्त्तिनो हविःशेषान् भक्षयन्तीति बहवचनपरवचनादवगन्तव्या॥ ६॥ ४॥ ३॥

अर्थसमवायात्॥ दर्शपूर्णमासयोः प्रायश्चित्ताधिकारे भिन्ने जुहोति स्कन्ने जुहोतीति श्रुतम्। तत्र कृत्स्नभेद एवेदश्रुतैकदेशभेद-एव उतोभयथापीति चिन्तायाम्। द्वयोः सद्भावे सति एकदेशभेद-स्यावर्जनीयत्वेन नियतत्वात् निमित्तत्वानुपपत्तेः सर्वभेद एवेदं चूर्णताद्यायां प्रायश्चित्तमिति प्रथमः पक्षः।

सद्भावेऽपि कतिपयावयवानां चूर्णीभावेऽपि भिन्नमितिप्रतीत्य-भावात्कपालिकादिस्थूलावयवविभाग एव भेदनपदोक्तेत्यस्य चानि-यतत्वेन सर्वभेदवदेकदेशभेदनस्यापि निमित्तत्वोपपत्तेस्तत्रैवायं होमः। अयं हि भेदनस्य निमित्तत्वेऽपि होमस्य प्रयोजनापेक्षायां सन्निपत्योपकारकत्वलाभाय भिन्नकपालसंस्कारार्थः। कपाले हि भेदनेनोक्तपरिमाणबाधादिगुणप्रसक्तौ तत्परिहाररूपः होमेन

वर्धिते, तथापि पूर्ववाक्यवैयर्थ्यापत्तेर्द्विवचनत्ववद्विरुद्धा सर्व-नाम्नश्च निमित्तता ॥ ६ ॥ ४ ॥ १ ॥

अपि वा ॥ यत्र तु त्यागांशयुक्तानि शेषकार्याणि, यथा स्विष्ट-कृदादौ । तत्रोत्तरार्धादिनाशे उत्तरार्धान्तराभावादवशिष्टस्य प्रति-पत्त्यन्तरगृहीतत्वाच्च न तावच्छेषेण करणम् । नापि हविरन्तरो-त्पत्तिः । अप्रयोजकत्वात् । किं तावतैव समापनम् । एकवचनस्य श्रुतद्रव्यनाशे द्रव्यापेक्षाभावेनैव प्रवृत्तेः । याज्ञिकमते तु यदि प्रत्यन्तदैवतमाज्येन शेषं सम्पादयेदित्यापस्तम्बवचनादवधेयम् । अवि-शेषप्रवृत्तमपि इदमपेक्षानुरोधात् स्विष्टकृत्परमेव । अतस्त्यागांशा-भावादिडादेर्लोप एव । इदं चोत्तरार्धनाशादिनाऽनेकप्रतिपत्तिविधाने । शेषत्वेनानेकप्रतिपत्तिविधाने तु शेषैकदेशविनाशेऽपि अवशिष्टेनैवा-वयवशः सर्वप्रतिपत्तिकरणमिति ध्येयम् ॥ ६ ॥ ४ ॥ २ ॥

निर्देशात् ॥ शेषभक्षादिदम् । दर्शपूर्णमासयोः शेषभक्षाः श्रुताः । तत्रेडाभक्षे यजमानपञ्चमा इडां भक्षयन्तीति श्रुताः कर्तारः । तथा, प्राशित्रभक्षे प्राशित्रं ब्रह्मणे परिहरन्तीति श्रुतः । चतुर्धाकरणभक्षे-ऽपि यादेशाभावादृत्विजः । यजमानभागब्रह्मभागयोस्त्वेवम् । शंयुवाककालभक्षे तु हविःशेषान् भक्षयन्तीत्यत्रापि तेन यज्ञवचने-नाध्वर्यवसमाख्याबाधेऽपि कर्मकरत्वात् सर्वर्त्विजो भवन्ति ।

न चेडाभक्षे न्यायप्राप्तर्त्विक्पुनःश्रवणस्य परिसंख्यार्थत्वाच्छंयुवाक-कालभक्षे *तदन्य एव भक्षयेयुरिति वाच्यम्* । ऋत्विजां प्राप्तेऽपि अप्राप्तयजमानमात्रविध्यर्थत्वेन तत्र विधेयत्वेन तत्र भक्षान्तरे ऋत्विक्-परिसंख्यार्थत्वाभावात् ।

सर्वत्र दर्शनेन प्रयोगसमाप्तेरेव लक्षणया प्रकृतेऽपि प्रतिपादनात् । अतः सर्वनाश एवेदं पुनः प्रयोगरूपं प्रायश्चित्तम् । सर्वदाहे प्रायश्चित्तं यदि वा ऽवदानेभ्यो न प्रभवेदित्यापस्तम्बेन सर्वदाहे ऽवदानापर्याप्तैकदेशदाहे वा पुनः प्रयोगविधानेन तद्भिन्नैकदेशदाहे प्रायश्चित्तानुपपत्तेः । अत एवैकदेशदाहस्य परिच्छेत्तुं शक्यत्वेऽपि एतन्मूलभूतश्रुत्यैव तत्र प्रायश्चित्तासम्भवः । तादृशैकदेशनाशे तु भाग्राधिकरणन्यायेनाज्येन दध्नाऽवशिष्टेन वा प्रयोगसमाप्तिमात्रम् । एवं सर्वनाशेऽपि प्रयोगसमाप्तिराज्येन पुरोडाशाग्नारेत्यन्यथा वा द्रष्टव्या ॥ ६ ॥ ४ ॥ ५ ॥

यथाश्रुति ॥ दधिपयसोरेकैकस्य नाशे प्रायश्चित्तमुक्त्वा, यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदित्याम्नातम् । तत्र च नार्त्तिमात्रस्य निमित्तता । सर्वदैव तस्य पिदार्त्तिमत्त्वेन नित्यतया निमित्तत्वानुपपत्तेः । अतोऽर्धमन्तर्वेदीति वल्लक्षणया हविरार्त्तिर्निमित्तमिति तावदविवादम् । अतश्च तद्वदेवोभयत्वमपि उभयपदवैयर्थ्यापत्तेर्लक्षणया निमित्तकोटिप्रविष्टमित्युभयहविरार्त्तिरेव निमित्तम् । न ह्येकवचनादिवत्साधुत्वादिकं प्रयोजनमस्तीति भाति ।

यद्वैकमाधिकरणन्यायेनेप्सितोद्देश्यविशेषणस्येव निमित्तरूपोद्देश्यविशेषणस्यापि विवक्षाऽयोगादविशिष्टलक्षणायामेकवचनाद्यनुरोधेनेवोभयपदानुरोधेन हविरादिपदेषु करणे प्रमाणाभावात् उभयपदस्य चोभयत्वपरत्वं पूर्वोक्तैकैकनाशप्रायश्चित्तापेक्षया अस्योत्कर्षेण तावतैवाऽप्युपपत्तेरुभयत्वस्य निमित्तकोटिप्रविष्टत्वायोगादेकैकहविर्नाशेऽपि इदं प्रायश्चित्तम् ।

संस्कारोनानुपपन्नः । तस्य चानुपयुक्तस्य संस्काराद्योगात्सर्वभेदने चोपयोगाभावादेकदेशभेदनं एव निमित्तम् । अस्तु वा षष्ठमीयं संस्कार्यत्वपरैव न ■ निमित्तत्वार्थिकाऽपि । न च भिन्नस्य कादाचित्कत्वान्नित्यानित्यसंयोगविरोधः । एवमारस्य कादाचित्कत्वेऽपि सम्मीलनादिधर्मविधिवदुपपत्तेरिति प्राप्ते ।

भाव्युपयोगित्वे भूतोपयोगित्वे वा तत्कोपधानावश्यकत्वे भिन्नं कपालमपु प्रक्षिपति अन्यदुपदधातीति वाक्यविरोधान्नायं स्वतन्त्रोहोमोभिन्नसंस्कारकः । नापि प्रकरणपठितहोमानां तत्संस्कारकत्वम् । एतेन प्राकरणिकहोमानुवादेन लौकिकस्य भिन्नकपालस्य एकाधिकरणत्वेन विधिराहवनीयबाधेनेत्यपास्तम् । होमस्य प्राकरणिकस्य कपालोपधानोत्तरत्वादन्यदुपदधातीत्यस्य वैयर्थ्यापत्तेः । प्रायश्चित्तसमाख्याऽनुपपत्तेश्च । अत एवेदं कर्मान्तरम् । तच्च नैमित्तिकं आरादुपकारकं क्रतुवैगुण्यपरिहारार्थं क्रत्वङ्गत्वेन विधीयते । अतः सर्वभेदनमेकदेशभेदनमुभयमपव निमित्तम् ॥ ६ ॥ ४ ॥ ४ ॥

चात्ते ॥ तत्रैव यस्य पुरोडाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति यदा तद्धविः सन्तिष्ठते अथ तदेव हविर्निर्वपेदिति श्रुते प्रायश्चित्ते सर्वपुरोडाशदाहरूपं क्षामणमेव निमित्तम् । अग्निपाकेन हविषि एकदेशक्षामस्यावर्जनीयत्वात् । न चावर्जनीयक्षामणातिरिक्तैकदेशक्षामस्यैव निमित्तत्वम् । तस्यैव परिच्छेत्तुमशक्यत्वात् । न च तद्धविः सन्तिष्ठत इति श्रवणात् अवशिष्टेन हविषा यागप्रतीतेरेकदेशक्षामस्यैवनिमित्तत्वम् । प्रयोगमध्यपातिवैवंजायतीयकरुवत्प्रयोगस्य

नियमं प्रति कर्त्तुः संस्कार्यत्ववादिनः पार्थसारथेर्मते तदायत्तावपि शाब्दिकेन विधिना भक्षं प्रति संस्कार्यत्वे उच्यमाने श्रूयमाणे विधौ कर्त्तृत्वानुपादेयत्वाद्विशेषणविवक्षोपपत्तौ आर्थिकेन विधिना विशेषणविशिष्टस्यैव कर्त्तुरुद्देश्यत्वाङ्गीकारेण साहित्याविवक्षाऽनापत्तिः। अतोऽत्र मिलितयोरेव होमाभिषवयोरार्थिकं निमित्तत्वम् ।

यदि तु क्त्वाप्रत्ययस्य द्वितीयक्त्वाप्रत्ययान्तपदोपात्तक्रियायासमन्वयायोग्यत्वात् इत्यभिषवसमानकर्त्तृकत्वं होम एव विशेषणं, विशिष्टहोमसमानकर्त्तृकत्वस्य च भक्षणभावनायामन्वय इत्युच्यते । तदा सुतरां विशेषणविवक्षा । इतरथाऽभिषवस्याप्यविवक्षाऽऽपत्तेः ॥ ६ ॥ ४ ॥ ७ ॥

पुनराधेय ॥ यस्योभावग्नी अनुगतौ आदित्योऽभ्युदियादस्तमियाद्वा पुनराधेयमेव तस्य प्रायश्चित्तिरिति श्रुतं प्रायश्चित्तं किमेकैकाग्न्यनुगमेऽपि भवेदुत सर्वाग्न्यनुगतावेवेति चिन्तायाम् ।

उभयत्वस्य निमित्तविशेषणत्वेन लभ्यतेऽप्यविवक्षितत्वादेकैकाग्न्यनुगमेऽपीदं प्रायश्चित्तम् । न च हविरुभयत्ववदेकैकाग्न्यनुगमे क्षामवत्यादिप्रायश्चित्तान्तराम्नानादस्योभयविषयत्वम् । तस्यादित्योदयाद्यभावविषयत्वात् । न चैवमपि प्रकरणादेवकारश्रवणात्पुनःप्रयोगस्य कर्मान्तरत्वानुपपत्तेराधानस्य चोत्पत्तिवाक्ये सर्वाग्निजनकत्वस्यैव क्लृप्तत्वेन विधेयसामर्थ्यानुरोधेन उद्देश्यनिर्णय इति वाच्यम् । उत्पत्तिवाक्येऽप्यग्नीनामुद्देश्यत्वेनाविवक्षितविशेषणत्वात् । अतएव योगसिद्ध्यधिकरणन्यायेनाधानस्य प्रत्यग्नि भिन्न एव प्रयोग इति प्राप्ते ।

वस्तुतस्तु उभयार्त्तिरेवात्र निमित्तम्। न च तस्या अपि नित्यत्वात् निमित्तत्वानुपपत्तिः। प्रकरणादेव हविर्विशेषविषयत्वोपपत्तेः। इतरथा भवन्मतेऽपि दधिपयोविषयत्वानुपपत्तेः। अतो दोषदहनाय एवेदं प्रायश्चित्तम्। हविःपदमेव अविवक्षितम्। अधिकरणं तु हविःप्राप्त्यभावं कृत्वा चिन्तायाम्।

वस्तुतस्तु। पक्षद्वयेऽपि न हविरादिपदे लक्षणा। सर्वेषां पदार्थानामाख्यातार्थान्वयोत्तरं परस्परमन्वयोपपत्तेः। एवं च विशिष्टस्य निमित्तत्वासम्भवाद्द्वयोर्निमित्ततावच्छेदकगौरवभियाऽन्यतरविवक्षयाऽपि निमित्तत्वानुपपत्तेरन्यतरपदस्य प्राधानवाक्यगतपुंस्त्वस्येवानुवादत्वेनाप्युपपत्तेश्च द्रष्टव्यः ॥ १ । ४ ॥ १ ॥

होमाभिषव॥ सोमे हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्तीत्यत्र हविर्धानाधिकरणकग्रावकरणकाभिषवस्य आहवनीयाधिकरणकहोमस्य प्रत्यग्गमनस्य सदोऽधिकरणकत्वस्य च प्राप्तत्वाद्धोमाभिषवसमानकर्तृकभक्षान्तरमेवेदृग्गुणाविधीयत इत्युक्तम्। तत्र च होमाभिषवयोः श्रुतप्रयोजनयोरेव कर्तुपलक्षणत्वान्निमित्तत्वमिति तद्विशेषणस्यैकवाक्योपादानलभ्यत्वादित्यस्याविवक्षितत्वम्।

यदि तथार्थिकं निमित्तत्वं होमाभिषवकर्तुरेवोपादेयत्वात्तद्विशेषणं साहित्यं विवक्षितमित्याग्रहश्चेत्। तथापि प्रयाजशेषाभिधारणन्यायेन भक्षस्य तद्गतकर्तृनियमस्य वा कर्तृसंस्कारकत्वाद्धविर्विशेषणस्येव तद्विशेषणस्याप्यविवक्षा। अतोऽभिषवमात्रकर्त्रा नेष्टादिना होममात्रकर्तृभिः चमसाध्वर्युभिरपि स भक्षः कर्त्तव्य इति मतम्।

श्चयिनोगुणस्य वाजिनवद्यागभेदकत्वाद्यभावात्। अभ्युदितेष्टौ तु पूर्वदेवताऽपनयविधानाद्यच्छब्दश्रवणाच्च विशिष्य पूर्वयागीयत्वप्रतीतेर्भावनामात्रभेद इति विशेषः ॥ ६ ॥ ४ ॥ ८ ॥

स प्रत्यामनेत् ॥ तदिदं कर्मान्तरं द्रव्यनाशप्रयुक्तवैगुण्यपरिहारार्थत्वेन सान्नाय्याङ्गतया विधीयते। न तु तत्फलार्थं तत्स्थाने। तत्फलस्य पापक्षयादेः शिष्टविगर्हणनिमित्तकस्य वा सान्नाय्ययागेनैव सिद्धेः साधनान्तरानपेक्षत्वात्। न हि द्रव्यनाशे यागलोपः। द्रव्यान्तरोत्पत्त्या आज्येन वा तत्समापनोपपत्तेः।

न च स्वर्गादिरूपस्य फलस्य वैगुण्ये सत्यनुत्पत्तेस्तस्य साधनापेक्षायामस्य विधानमिति वाच्यम्। तथात्वे तत्कामनाऽभावे तदननुष्ठाने निमित्तश्रुतेः सदोषापत्तेः। अतोऽपेक्षितवैगुण्यसमाधानार्थत्वेनैवास्य विधानम्। अपेक्षा च सान्नाय्ययागस्यैवेति तस्यैव विशिष्योपस्थितत्वात्तद्वाचकपदकल्पनया वाक्यात्तदङ्गत्वमेव। न तु प्रकरणात् सर्वाङ्गमनुष्ठानसादृश्यात् धर्ममात्राङ्गं वा। अतएव हविर्नाशे निमित्ते प्रयोगान्तःपात्येवेदमङ्गं, न तु यागनिमित्तकमनुप्रयोगवत्प्रयोगबहिर्भूतम् ॥ ६ ॥ ४ ॥ १० ॥

विश्वजित् तु ॥ सत्र प्रकरणे, यः सत्रायागुरते स विश्वजिता यजेतेति श्रुतेः सत्रस्वरूपमागूरणं कृत्वा यः सत्रं न करोति तस्येदं सत्रफलार्थत्वेन विधानम्। न तु सत्राङ्गतया। तथात्वे आगूरणनिमित्तत्वश्रवणवैयर्थ्यात्। न चैव सत्राकरणस्यापि निमित्तान्तःप्रवेशाद्गौरवापत्तिः। अतः संकल्पमात्रे निमित्ते नैमित्तिकमिदं फलान्तरार्थं विधीयत इति वाच्यम्। फलान्तरकल्पनापेक्षया सत्रफलस्यैव साधनसाकाङ्क्षस्य फलत्वकल्पने लाघवात्।

आयतनेषु सम्भारान्निवपति इत्यत्रायतनबहुत्वस्य विवक्षितत्वा-
दाधानस्यैकेनैव प्रयोगेण सर्वाग्न्युत्पादकत्वावगतेर्विधेयस्य सामर्थ्या-
नुसारेण सर्वानुगम एवेदं प्रायश्चित्तम् । अतएव दक्षिणाग्नेर्भिन्नयो-
निपक्षाभिप्रायेणोभाविति श्रवणम् । समानयोनित्वे तु भिन्नया-
ग्निनाशे बोध्यम् ॥ ६ ॥ ४ ॥ ८ ॥

पञ्चशरावस्तु ॥ ऐन्द्रं पञ्चशरावमोदनं निर्वपेदित्यत्र सर्वाग्निनाशे
आज्यादिना समापने प्रसक्ते प्रतिनिधित्वेन लाघवात् सान्नाय्यानु-
वादेन पञ्चशरावपरिमितौदनमात्रविधानम् । न च वाक्यभेदः ।
पञ्चशरावौदनयोः समानाधिकरणत्वेनाग्नये दात्र इतिवद्विशिष्ट-
विधानोपपत्तेः । ओदनपदस्य तात्पर्यग्राहकत्वेन पञ्चशरावमिति
व्रीहिमयैवौदनस्योक्तत्वाच्च । ऐन्द्रमिति सान्नाय्यस्यैन्द्रदेवताकत्व-
स्यापि सत्त्वात्तावदमूनामितिवत्प्रापकानुवादः । अथ वा तत्तदु-
त्पत्तिवाक्ये इन्द्रमहेन्द्रभेदेन सान्नाय्यस्य भेदादैन्द्रयागानुवादेनैव
प्रतिनिधिविधानमिति प्राप्ते ।

सुबन्तपदद्वयस्य परस्परान्वयाव्युत्पत्तेर्यवव्रीहिणा सामान्यतो-
द्रव्योपादानेऽपि ओदनत्वादिरूपेणोपादाने प्रमाणाभावात्तात्पर्य-
ग्राहकत्वमङ्गीकृत्यैकस्मिन्नेव पदे विशिष्टलक्षणाङ्गीकारे च क्वापि
प्राप्तकर्मानुवादेनानेकविधाने वाक्यभेदापत्तेर्वाक्यभेदापादकगुणा-
देव कर्मान्तरमिदं प्रायश्चित्तत्वेन विधीयते । समानित्वाज्यादि-
नैव । अग्नये दात्र इत्यत्रापि तु न देवतामात्रविधिपक्षाश्रयणम् ।
वाक्यभेदप्रसङ्गात् । अपि तु भावनान्तरविधिपक्ष एव ।

न चैवमत्रापि भावनान्तरत्वापत्तेर्यागान्तरत्वानापत्तिः । उत्पत्त्य-

याजिन एव वत्सापाकरणसत्त्वादुक्तम् । अतएव एकपुरोडाशीयायामग्नीषोमीयाभावेऽपि आग्नेयसत्त्वात्कालोपलक्षणत्वेनोपांशुयाजेऽपि ॥ वृत्तिरिति भाति ।

मध्यन्दिनायामागन्तव्यमित्यादौ उपलक्षणाभावेऽप्युपलक्ष्यानपायाद्वत्सापाकरणाभावेऽपि अन्वाधानपश्चाद्भाविदृष्टतत्कालानपायात्सामान्याभावेऽपि कर्त्तव्यमेव मतम् ॥६।४।१२॥

प्रस्तरे ॥ सह शाखया प्रस्तरं प्रहरतीत्यत्र प्रहरणएव शाखासाहित्यं प्रस्तरस्य न तु होम इत्युक्तं चतुर्थे । तत्तु न समप्रधानत्वेन । प्रस्तरप्रहरणस्येव शाखाप्रहरणस्यापि शाखाप्रतिपत्तितया । किन्तु प्रस्तरप्रहरणे शाखासाहित्यगुणत्वेन । मैत्रावरुणपात्र इव पयःसाहित्यम् । सहयोगेऽप्रधाने इत्यनुशासनेन गुणत्वावगमादिति भाति ।

शाब्दबोधे गुणत्वश्रवणेऽपि प्रयाजशेषाभिघारणन्यायेनार्थिकप्रतिपत्त्यन्तरविधिकल्पनेन प्रस्तरवच्छाखाया अपि हुतार्थत्वाविशेषेण प्रतिपाद्यत्वम् । अतएव शाब्दबोधे गुणत्वश्रवणमपि प्रस्तरप्रहरणकालप्रतिपत्त्यर्थमित्युक्तं न तु स्वयं तत्त्वम् । अतश्चामावास्यायां शाखां विनैव प्रस्तरप्रहरणं, पौर्णमास्यां च । यथाशक्ति प्रयोगे प्रस्तराभावेऽपि गुणलोपे चेति न्यायेन शाखाप्रहरणम् ॥६।४।१४॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

षष्ठस्य चतुर्थः पादः ।

---

तच्च फलं यद्यपि न मुख्यत्वेन स्वर्गादिफलत्वेन कल्पयितुं शक्यं, तथात्वे वीतायां फलेच्छाया सकलफलपक्ष निमित्तस्य सत्त्वेन नैमित्तिकाननुष्ठाने निमित्तसङ्कोचापत्तेः । तथापि प्रारब्धाकरणनिमित्तदोषपरिहाराय चैवामनीयाख्याने विधीयते । अतएव तादृशफलबाधकपदकल्पनयैवाकरणविषयत्वसिद्धेर्न तस्यापि निमित्तान्तःप्रवेशः । अतएवैकस्याप्यकरणे अन्ये कथंतर उपाचारपायैव वा सत्त्वप्रयोगेऽपि अनेनैव विश्वजित्कार्यं इत्येकवचनस्याप्युपपत्तिः ॥६॥४॥११॥

वत्स ॥ अथ अप्रवृत्तस्य विश्वजिदुक्ते प्रासाच्छे अप्रवृत्तस्यैव व्रतमित्युक्तार्थमुत्तराधिकरणम् । तदुपोद्घातत्वेनेदं विचार्यते । दर्शपूर्णमासयोर्वर्हिषा पूर्वमासे व्रतमुपैति वत्सैरमावास्यायामिति श्रुतम् ।

तत्र तृतीयया वत्सकरणकभक्षणापरपर्यायव्रतविधिः, रागप्राप्तभक्षणानुवादेन अमावस्यायाः सर्पिष्क व्रत व्रतयतीति वचनान्तरप्राप्तभक्षानुवादेन वा वत्समात्रविधिरिति प्राप्ते ।

न तावद्वत्सस्य व्रते हस्तादिवत्करणत्वं, नापि भक्ष्यत्वेनाप्रसक्तत्वात्, नापि मासप्रकृतित्वेन विना वचनं विधाने प्रमाणाभावात् ।

अत पुरा वत्सानपाकर्तोर्दम्पती अश्नीयातामिति वचनान्तरैकवाक्यताभाव वर्हिषा पौर्णमास इत्येतद्वाक्यपाठात् वत्सप्रातिपदिकेन वत्सापाकरणं लक्षयित्वा तृतीया चेत्यमूलत्वेन व्याख्यायामावास्योद्देशेन वत्सापाकरणपूर्वकालीनव्रताश्रितत्वेन विधीयते, अत एव प्रकरणप्राप्तमिति न कश्चिद्विरोधः ॥६॥४॥१२॥

कालार्थेत् ॥ यद्यपि वत्सापाकरणं कालोपलक्षणं न तु स्वयमङ्गपरार्थत्वात्, तथापि तदभावे कालस्यैव ज्ञातुमशक्यत्वात्सान्नाय्य-

शिष्टाग्न्यादिविधानम्। आग्नेयोऽष्टाकपाल, पञ्चदशान्याज्यानी-त्यादिवदसमस्तपदानां क्रियाव्यतिरेकेण परस्परान्वयस्याव्युत्पन्नत्वात्। अतएव प्रकृतमध्यमादिद्रव्योद्देशेन देवतान्तरमात्रविधिरित्यप-पास्तम्। देवतातद्गुणरूपानेकविधौ वाक्यभेदतादवस्थ्यात्।

किं चैव स्विष्टकृदादिवाक्ययोर्द्रव्यद्वयोद्देशाद्वाक्यभेदः। न चाग्नौ स्वीक्रियत इति तन्त्ररत्नोक्तं युक्तम्। प्रमाणाभावात्। सर्वत्रैव तदापत्तेश्च। किञ्च मध्यमादिषु यच्छब्दप्रयोगेण प्रकृतग्रहणेऽपि दधिशृतयोस्तदभावात् प्रकृतग्रहणे प्रमाणाभावेनोद्देश्यत्वानुपपत्तिः।

न च तथापि प्रयोगान्तरगतत्वस्यैव स्वीकारेण कर्मान्तरत्वे प्रमाणाभाव इति वाच्यम्। निमित्तस्य विनियोगान्वयित्वस्यैव यावज्जीवाधिकरणे स्थापितत्वेन प्रयोगान्वयिगुणाभावेन वाजिन-वदेव तद्भेदानुपपत्तेः। अतएवोत्पत्त्यन्वयिनो गुणस्य कर्मभेदकत्वादेव वाजिनवदेव भावनामात्रभेदकत्वम्। अत पञ्चशरावदेव कर्मा-न्तराण्येव तत्तद्द्रव्यदेवताविशिष्टानि तत्तद्वाक्यैर्विधीयन्ते। तत्प्रकृति-भूततण्डुलानाञ्च त्रेधा तण्डुलान्विभजेदित्यनेन मध्यमादिभावेन त्रेधा विभागः प्रयोगान्तःपातितया विधीयते। न तु देवताऽपन-यादि। तथात्वे लक्षणापत्तेः। देवतान्तरविधिबलेनैव तत्सिद्धौ अपनयविधिवैयर्थ्याच्च।

अतएव संस्कारविधित्वादेव प्रसिद्धत्वाच्च मध्यमा इत्यादि-यच्छब्दोऽप्यनुवादः। दधिशृतयोः मन्मतेऽप्यधिकरणत्वेन विधिः। तथात्वे प्रणीताकार्यापन्नत्वेन सद्यस्पयस्यार्थसिद्धत्वादभ्युदि-तेष्टिप्रकरणस्थ-शृत अपनयतीत्येतद्वाक्यवैयर्थ्यापत्तेः। अनेन चि न

## अथ षष्ठोऽध्यायः ।

### पञ्चमः पादः ।



अभ्युदये ॥ दर्शपूर्णमासयोः, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात् त्रेधा तण्डुलान्विभजेद्ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुं इति श्रुतम् । तत्र निमित्तं तावच्चन्द्रमाभ्युदयावच्छिन्नदिने* प्रारम्भ इति वक्ष्यते । स च निमित्तस्याभावेन दर्शस्येत्यपि सिद्धमेव । नैमित्तिकं पुनरत्र कर्मान्तरं किं वा गुणान्तरयुक्तं तदेवेति चिन्तायाम् ।

वाक्यभेदापादकगुणात्कर्मान्तराण्येवात्र चोदि तत्तद्वाक्यैर्विधीयन्ते । न ह्यग्न्यादयो देवता दातृत्वादयश्च गुणा मध्यमादीनि द्रव्याणि अष्टाकपालत्वादयश्च धर्मा दधिशृतयोरधिकरणत्वं चरुत्वं चेत्यनेकार्थविधानं प्राप्ते कर्मणि सम्भवति ।

न चाष्टाकपालस्याग्नेये प्राप्तत्वेनाविधानं, तत्र प्राप्तत्वेऽप्यैन्द्राग्ने समाप्ततया विधावश्यकत्वात्† । न च दात्रादिपदानां यौगिकत्वात्सामानाधिकरण्याद्देवाऽदि‡ पदार्थैक्यान्वयोपपत्तेर्दातृत्वादिगुणवि-

---

* इत्थमेव पाठ सर्व्वत्र । चन्द्रमोऽभ्युदयावच्छिन्नदिने, इति तु भवितुमुचितम् ।

† विधानावश्यकत्वात्, इति तु भवितुमुचितम् ।

‡ देवाग्न्यादि,–इति भवितुमुचितम् ।

वस्तुतस्तु स्वीकारे प्रमाणाभावात्पञ्चशराववाक्येऽपि चेन्द्रदेवतोद्देशेन त्वत्पक्षे नैमित्तिकपञ्चशरावौदनरूपैककारकविधानापत्तेः। प्रकृते उद्देश्यानेकत्वाङ्गीकारे च तत्र विधेयानेकत्वस्य वारयितुमशक्यत्वाद्द्रव्योद्देशेन देवतामात्रविधिपक्षानुपपत्तेर्द्रव्यदेवताविशिष्टभावनान्तरविधिपक्षेणैव सिद्धान्तोपपत्तिः।

न चास्मिन्नपि पक्षे उत्पत्त्यन्वयिनोर्गुणयोः वाजिनवद्यागभेदकत्वापत्तिः, भावनामात्रभेदकत्वेऽपि वा पञ्चशराववाक्येऽपि तदापत्तिरिति वाच्यम्। यच्छब्देन पूर्वपरामर्शकेन पूर्वयागीयत्वोपस्थित्या यागान्तरत्वप्रमाणकत्वानुपपत्तेः। अतएव वाक्यभेदपरिहारार्थं परं भावनाभेदमात्रमभ्युपगम्यते। वाजिनपञ्चशरावादौ तु तदभावाद्यागान्तरत्वमिति विशेषः।

अतएव धर्मिग्राहकप्रमाणेन यागैकत्वेऽवधारिते पूर्वद्रव्यावरुद्धे तस्मिन् द्रव्यान्तरयोर्दधिपयसोर्विकल्पेन समुच्चयेन वा निवेशायोगात्तयोरपि तत्तद्यागीययोरेव विधेयभावनाविशेषणत्वम्। अतश्च द्रव्यदेवताविशिष्टभावनान्तरविधानेऽपि पूर्वयागीयद्रव्याणां मध्यतादीनामिन्द्रभावनां प्रत्युपादेयत्वाच्च लौकिकमध्यमादिग्रहणप्रसक्तिर्न वा लौकिकदध्यादिग्रहणम्। भवदुक्तरीत्यैव चरमाधिकरणत्वयोरनुवादत्वेन समाप्यविधेयत्वात्।

वस्तुतस्तु प्राविष्टादिप्रकृतिकपुरोडाशेन दध्यादेः सह श्रपणाप्रसक्तेर्न सहत्वप्राप्तिरिति तद्विधिरावश्यक एव। दध्यादिना च सह श्रपणविधानात्तदधिकरणत्वं परमनुवादः। सर्वथा न लौकिकग्रहणम्। किञ्च येषां तन्मतम् विभक्तेर्द्रव्यापमर्यविधिमाद्ध्ययनयो-

न्विष्णवे शिपिविष्टाय शृते चरुं, ये स्थविष्ठास्तानग्नये सनिमते-ऽष्टाकपालं, येऽणिष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुमिति वचनेन विहितायां पशुकामेष्टावपि चापनयविध्यभावादेव कर्मान्तरम्। यच्छब्दस्तु लोकप्रसिद्धानुवादकतयैव कथञ्चित्तत्र व्याख्येयः।

अतश्चापनयविधिरेव पूर्वदेवतासम्बन्धं पूर्वयागानां चापनयंस्तेषां देवतान्तराकाङ्क्षोत्थापनद्वारा तत्र देवतान्तरसम्बन्धमुपपादयन्कर्मान्तरत्वं प्रतिपादयति। प्रकृतयागानामेव च मध्यमादीनां दधिपयसोश्च भावनान्तरे उपादेयत्वमापादयति। यद्यगृहीतं हविरभ्युदियादेवैव अतथ्यां यदि गृहीतं हविरभ्युदियाद्यो तर्हि एतानेव तण्डुलान् *समस्तीकृतान् दधि प्रक्षेपादिविक्रियाप्रयोगो विधीयते।* तेन मध्यमादिभेदेनाग्नेयस्य वारत्रयमावृत्तिः। दधिपयोयागयोस्तु स्थविष्ठाणिष्ठमाध्यमेयाभ्यासेन। सह श्रपयतीति वाक्याच्च श्रपणमपि तेषां सन्निपन्नदेवताकानां सहैव।

अतएव दधिशृतयोः श्रपणाप्राप्तावपि साहित्यविध्यन्यथानुपपत्त्यैव श्रपणम्। प्राक्षासाहित्यवशेन तत्प्रहरणवत्। साहित्यं हि केनचिदावश्यकम्। तत्र सन्निपन्नदेवताकत्वात्प्रदानवेलायां तेन तदावश्यकत्वे श्रपणवेलायामपि तस्यैव साहित्यप्रतियोगिकत्व-कल्पनात्। अतश्चाभ्युदितेष्टिर्न कर्मान्तरमपि तु निमित्ते नैमित्तिकं तद्यागानामेव भावनान्तरं स्वकाले क्रियमाणदर्शप्रयोगाङ्गम्। तस्यैवाकालप्रारम्भनिमित्तदोषपरिहारार्थं प्रायश्चित्तम्। अकाल-प्रारम्भस्य दोषजनकत्वं सामान्यमुखेन। अपैव वा वि वा एन प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तमित्यादिवाक्य-

निर्णीयते । तथा हि न तावदत्र तण्डुलानां मध्यमादिभावेन त्रेधा विभागो विधीयते तस्य मध्यमादिवाक्यैरेव प्राप्तत्वात् ।

न च मन्यते चिचेष्टितण्डुलवत्पुरोडाशादिप्रकृतिलेनापि लोकसिद्धानामेव मध्यमादीनां तण्डुलानां याज्यलाभो यथोगान्त- पातिविभागसिद्ध्यर्थं विधिरयंवामितिवाच्यम् । लोकसिद्धमध्यमादि ग्रहणे तण्डुलप्रकृतिभूतव्रीहिप्रकारकनिर्वापप्राप्त्यभावेन मदाराय- एव हवींषि निर्वपेदित्यनुवादानुपपत्तेः । व्रीहिणामेवावश्योपा- देयतया विभागस्याप्यर्थप्राप्तत्वात् । यत्र अपण्यत्वेन चिचेष्टिन्याया- भावात् । अतस्त्रेधा तण्डुलानिति पदद्वयमानर्थक्याभिया प्रकृत- हविः परमङ्गीकृत्य तस्यापरित्यक्तयागान्वयस्यैव प्रकृतदेवताभ्योऽप- नयो विधीयते । आनर्थक्याभिया च लक्षणापि न दोषः । तदपनये च प्रकृतदेवतानां यागसम्बन्धोऽप्यपनीतो भवति ।

न चायमपनयोऽपि नैमित्तिकदेवतान्तरविधिवशादेव सिद्ध- तीति विधिवैयर्थ्यम् । एतद्विध्यभावे पूर्वयागस्य पूर्वदेवताऽवरुद्धतया देवतान्तरानपेक्षत्वेन तत्र नैमित्तिकदेवतान्तरस्य तद्विशिष्टभाव- नान्तरस्य वा विधानानुपपत्तेः । नैमित्तिकस्य हि निरवकाशतया नित्यबाधकत्वं वक्ष्यते । कर्मान्तरविधानेनैव च सावकाशत्वोपपत्तेर्न निरवकाशता । अतएव यत्र कर्मान्तरविध्यभावः प्रमाणान्तरप्रमि- तस्य फलचमसादौ निरवकाशेन नैमित्तिकेन नित्यापनया- भावेऽपि नित्यस्य बाधः ।

अत एवापनयविध्यभावादेव पञ्चशरावववाक्ये कर्मान्तरम् । यः पशुकामः स्यात्सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात् ये मध्यमाः

शेषादवगन्तव्यम् । एवञ्चातञ्चनाभ्यासदर्शनं, यदि बिभीयादभिमोदिष्यतीति महारात्र एव हवींषि निर्वपेत्कलीकृतैस्तण्डुलैरुपासीत अर्धं दधिहविरातञ्चनार्थं निदध्यादर्धं न यद्यभ्युदियात्तेनातञ्च प्रचरेत् यदि न प्रातरेवेन ब्राह्मणान् भोजयेदित्यकर्मान्तरत्वे उपपद्यते । बिभीयात् शङ्केत । महारात्रे चन्द्रोदयात् पूर्व्वम् । उपासीत प्रतीक्षेत । आतञ्चनार्थं स्वकालक्रियमाणदर्शार्थदध्यातञ्चनार्थम् । अर्धं न, किं तु तदभ्युदितेष्टावेव विनियुञ्जीत, न चेत् साम्नाय्ययाग एव । तेनातञ्चनार्थनिहितेन । एतेनातञ्चनार्थं स्थापितेनैवेति तदर्थः ।

तद्यदि कर्मान्तरं स्यात्तदा तेनाकालप्रारब्धनिमित्तदोषपरिहाराद्दर्शार्थमुत्पादितेन दध्ना कर्मान्तरकरणानुपपत्तेः, स्वकालक्रियमाणदर्शस्यैव तेन करणापत्तेश्च हविरन्तरोत्पादासमर्थकौ तत्रातञ्चनाप्रसक्तेरर्धविध्यनुपपत्तिः । कर्मान्तरे च दध्यन्तरस्यैव संस्कारविशिष्टस्योत्पादनापत्तेर्दर्शार्थोत्पादितस्य दध्नः प्रसक्त्यभावादर्धविधानानुपपत्तिः ।

यत्तु सूत्रे कर्मान्तरत्वपक्षे अधिकरणत्वेन दधिपयसोर्विधानात् लौकिकस्यैवासंस्कृतस्य दध्नो ग्रहणापत्तेर्दर्शोत्पादितस्य प्रसक्त्यभाव इत्युक्तम् । तत्तु अपचितिरीत्यस्य वैयर्थ्यापत्तेस्तत्त्वेन हविष्ट्वेनैव विधानस्यावश्यकत्वादुपेक्षितम् । सिद्धान्ते तु प्रायश्चित्तस्य दर्शाङ्गतापायाद्देव सर्वस्य दध्नः प्रसक्तौ स्वकाले क्रियमाणदर्शेन च दध्यन्तरोत्पादनार्थमातञ्चनप्रसक्तौ अभ्युदयशङ्कायां निमित्ते आतञ्चनसाधनत्वेनार्धमात्रविधिरुपपद्यते । अर्धान्तरस्य चार्यदिवाभ्युदितेष्टौ प्राप्तत्वादनुवादो विधिर्वेत्यन्यदेतत् ॥ ६ । ५ । १ ॥

विहितत्वेन तत्र देवतान्तरसंयोगाप्रवृत्तेः। यथैव हि कलञ्जं न भक्षयेदित्यादिनिषेधा अवयवावयविसाधारण्येन प्रवर्त्तन्ते, एवमप्ययात्मकोनिषेधोऽपि। यथैव च तत्र दध्यादित्यादिविधयोऽवयविन्येव प्रवर्त्तन्ते, एवं देवतान्तरसंयोगोऽपि। अतस्तु तूष्णीमेवावशिष्टोनिर्वापः। याज्ञिकास्तु पदार्थैकदेशस्याप्यार्थिकविधिविहितत्वमङ्गीकृत्य वैकल्पिकम् एवानुतिष्ठन्ति ॥ ६ ॥ ५ ॥ ५ ॥

सान्नाय्य ॥ किमियमभ्युदितेष्टिः संनयत एवोतासंनयतोऽपीति चिन्तायां, द्रव्योद्देशेन देवतामात्रविधिपक्षे यद्यपि द्रव्यसाहित्यमविवक्षितं, तथाप्युद्देश्यानेकत्वादेवैतत्पक्षापरितोषाद्भावनान्तरविधिपक्षे च तद्विशेषणयोर्दधिपयसोः प्रकृताविष्टयोश्च साहित्यस्य विवक्षितत्वाद्विधेयसामर्थ्यानुरोधेन सन्नयन्मात्र* विषयत्वमिति प्राप्ते।

न चेदन्येन शिष्टा इति न्यायेनाप्राप्तविशेषणस्यैव कल्प्यविशेषणविधिविधेयत्वेन द्रव्यसाहित्यस्य तत्तद्यागसाहित्यवशेनैव प्राप्ततया विशेषणविध्यकल्पनादविवक्षितत्वेनासंनयतोऽपि अभ्युदितेष्टावधिकारः। अतएवैन्द्राग्नस्याप्यौषधद्रव्यकत्वात्प्रथमादिभेदेनाग्नेयवदावृत्तिः। तथापि सह श्रपयतीति वचनेनाग्नेयैन्द्राग्नहविषोः सह श्रपणे विहितेऽष्टाकपालत्वद्वादशकपालत्वयोर्विरोधे मुख्यत्वादष्टाकपालस्यैवानुरोधेन द्वयोरप्यष्टाकपाला एव कार्याः। अथवा आद्य एवाष्टाकपाल उत्तरौ [illegible] नव एव चरू ॥ ६ ॥ ५ ॥ ६ ॥

मान्युत्थाने ॥ यदि सवाय दीक्षितानां भाव्युत्तिष्ठेरन् सोममपभज्य

---

* सर्वत्रैवमेव पाठः। सन्नयन्मात्र,– इति तु समीचीनं प्रतिभाति।

न पौर्णमास्यामेवोपांशुयाज इत्यधिकरणं कृत्वा चिन्तया । यद्यो-द्वामावास्यायामिति चावयुत्यानुवादः । एतद्बलादेवामावास्यायां विकल्प इत्यपि गुरवः ॥ ६ ॥ ५ ॥ २ ॥

निरुप्ते ॥ यस्य हविर्निरुप्तमिति श्रवणान्निर्वापोत्तरकालीन-चन्द्राभ्युदयस्यैव निमित्तत्वादमावास्यायां च सूर्योदयात्प्रागेवेष्या-रम्भविधानान्निर्वापात् प्राक् चन्द्राभ्युदयज्ञानेनेदं प्रायश्चित्त-मिति प्राप्ते ।

हविरभ्युदियादित्येतावतैव निमित्तत्वपर्यवसानेन निर्वापग्रहण-स्याविवक्षितत्वादभ्युदयावच्छिन्नदिनप्रारम्भस्यैव निमित्तत्व लाघवात् । पौर्णमास्यां च तस्य नित्यत्वादेव निमित्तत्वानुपपत्तेः परिशेषादेव दर्शविषयत्वम् । अतश्च निर्वापात् प्रागपि प्रक्रमसामान्येन प्राय-श्चित्तम् । अतएव यद्यग्रहीत हविरभ्युदियादिति लिङ्गमप्युप-पद्यते ॥ ६ ॥ ५ ॥ ३ ॥

अनिरुप्ते ॥ कर्मप्रवृत्तिमात्रस्य निमित्तत्वेऽपि नैमित्तिकोदेव-तापनयस्तण्डुलग्रहणात्तण्डुलावस्थायामेव कार्यम्, पूर्वं तु प्राकृतीभ्य एव निर्वापादि कार्यमिति प्राप्ते ।

तण्डुलग्रहणस्य विवक्षितत्वे दधिपयसोरन्यथाभावेन देवतान्तर-सम्बन्धानापत्तौ सह अपवर्तीतिवाक्यवैयर्थ्यापत्तेस्तस्य हविर्मात्रोप-लक्षणत्वात्पूर्वमप्यभ्युदये वैकृतीभ्य एव निर्वापादि ॥ ६ ॥ ५ ॥ ४ ॥

विनिरुप्ते ॥ अर्धनिरुप्ते चन्द्राभ्युदये ज्ञाते अवशिष्टामुष्टयो न तावत् प्राकृतीभ्यो निर्वप्तव्याः । निमित्तसत्त्वेन नैमित्तिकस्यापनयस्य प्रवृत्तौ बाधकाभावात् । नापि वैकृतीभ्यः । पदार्थैकदेशस्या-

वस्तुतस्तु निमित्तभेदस्य निर्वक्तुमशक्यत्वाच्छाखान्तरन्यायेनैक एव विश्वजिद्वाक्यद्वयेन विधीयत इति नाप्रकरणविश्वजितोऽस्य भेदः । प्रवृत्तस्य विश्वजितोऽप्रवृत्तस्येति विचारस्तु एतद्वचनाभावं कृत्वा चिन्तयेति ध्येयम् ॥ ६ ॥ ४ ॥ ७ ॥

दीक्षा ॥ सोमे एका दीक्षा तिस्रो दीक्षेत्येवं बहवो दीक्षापक्षाः श्रुताः । तत्र सोमे द्वादशदीक्षापक्ष एव । द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेति विहितस्य भृतिपदवाच्यदक्षिणाद्रव्यार्जनानुकूलयाच्ञारूपस्य भृतिवननस्य पक्षान्तरेष्वसम्भवात् । अतोऽन्ये पक्षा विकृतिविषयाः एक एवोक्त इत्यादिवदनुवादा इति भाष्यकाराभिप्रायः ।

वार्त्तिककारास्तु ——— इति नदर्थवादत्वायोगात्सर्व एव विधय इति तावदविवादम् । प्रकरणानुरोधाच्च नानेकेषामुत्कर्षकल्पना । तदरसेकस्यैव भृतिवननवाक्यस्य पाक्षिकत्वकल्पना । द्वादशरात्रिशब्दोपात्ता दीक्षापरिमाणमात्रपरः ।

वस्तुतस्तु सम्भवाऽपीयत्न विधौ, दीक्षितकर्तृकभृतिवननस्यैव पञ्चप्राप्तस्य प्रयोगमध्ये अत्यन्ताप्राप्तस्यैव वा विधेयत्वात् द्वादशरात्रिशब्दस्यानुवादत्वोपपत्तेः । अतोऽनेनास्य पाक्षिकत्वकल्पनाऽपि । दीक्षापक्षाणामेव परं औक्थ्यवदिकल्पः । अस्तु वा तस्य विधेयत्वेऽपि लक्षणा, तथापि न दोष इति ॥ ६ ॥ ५ ॥ ८ ॥

द्वादशाहस्तु ॥ द्वादशाहे द्वादशरात्रीर्दीक्षितः स्यादिति वाक्येन यवमयश्चरुरितिवद्द्वादशदीक्षाकत्वस्यैव नियमनाच्च विकल्प इति प्रत्युदाहरणमात्रम् ।

अतएव षट्त्रिंशद्रात्रो वा एष यद्द्वादशाह इति सिद्धं उपसत्सु-

विश्वजिताऽतिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेरन्निति श्रुतम्। तत्र विश्वजिदयं सोमक्रयोत्तरमुत तत्पूर्वमपि उत्थाने भवेदिति चिन्तायाम्।

यद्यपि त्यागपरपर्यायं व्युत्थानमात्रं निमित्तं, न तु नामिपदवाच्यार्थत्वमपि विशेषणं, नापि सोमक्रयः, तथापि सोमविभागस्यापि विश्वजिदङ्गत्वेन विधेयत्वात्पुनराधानवदेव नैमित्तिकत्वरूपपर्यालोचनया सोमक्रयोत्तरमेव विधीयते। न हि पूर्वं सोमोऽस्ति, येन सोमविभागरूपमङ्गमनुष्ठीयेत। न च बौधायनादिकल्पपर्यालोचनया पूर्वमपि सोमस्य सत्त्वाद्विभागोपपत्तिः। विक्रेतृसोमस्यैव क्रयात्पूर्वमुपकल्पनेन तस्मिन् यजमानस्वत्वाभावात्। अतः सोमक्रयोत्तरमेव व्युत्थाने विश्वजिदिति प्राप्ते।

नात्र विभागविधिः, सर्वद्रव्याणां व्युत्थाने द्रव्यविभागस्यार्थप्राप्तत्वात्। अतएव सोमपदं सर्ववस्तुमात्रपरम्। अतश्च सोममपभज्येत्यस्यानुवादत्वात् विश्वजिन्मात्रं नैमित्तिकं सोमक्रयात्पूर्वमपि व्युत्थानस्य निमित्तस्य सत्त्वात्कर्त्तव्यमेव।

किं च यद्यपि विभागो विधीयते, तथापि तस्यादृष्टविधया विश्वजित्यारादुपकारकाङ्गत्वाद्यावस्य क्रीतस्यैव स्वस्यैव वा सोमस्य विभागः। किं [illegible] लौकिकस्यैव यजमानसम्बन्धिनोऽस्य कस्यचित्सोमस्य प्रत्येकं विभागः। अतश्च तादृशनैमित्तिकस्य पूर्वमपि सत्त्वादविरोधः। अथ विश्वजिद्गुणात्कर्मान्तरं स्वर्गार्थविश्वजिदपेक्षया आगूरणविश्वजिदपेक्षयाऽपि। तयोस्तु तदपेक्षया कर्मान्तरत्वे अभ्यासः प्रकरणान्तरं च प्रमाणं बोध्यम्। एतत्फलमागूरणविश्वजिद्वदेव द्रष्टव्यम्।

ष्टम्यामष्टकाशब्दप्रयोगे हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति चतुर्ष्वपि तदष्टमीषु प्रयोगेण माघ्युत्तराष्टमीग्रहण एव प्रमाणाभावात्। द्वादशपौर्णमास्यो द्वादशाष्टका इति श्रुत्यन्तरे सर्वत्रैव प्रयोगाच्च। अतश्चैवमुत्तराष्टम्या अपि तन्मासपाथार्थैव्या एव पौर्णमासीपदेन ग्रहणात् तस्याः पुरस्ताच्चतुरहे एकादश्यां दीक्षेति प्राप्ते।

वृद्धव्यवहारे एकाष्टकाशब्दस्य माघ्युत्तराष्टम्यामेव प्रयोगात्तस्याश्च संवत्सरपत्नीत्वेनोपक्रमे श्रुतत्वात् माघ्युत्तराष्टमीश्चकर्माङ्गदेवतायाश्च, यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम्। संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गलीति तन्मन्त्रे संवत्सरपत्नीत्वेन सङ्कीर्तनात्। माघ्युत्तराष्टम्या एव एकाष्टकात्वमतीतेस्तस्यां क्रमममत्यनुरोधेनोपक्रमोपसंहारयो. श्रुतत्वेन च माघ्या एव पौर्णमासीपदेनाभिधानात्ततः पुरस्तादेकादश्यां दीक्षेति सिद्धम्।

अतएव मध्योऽयमर्थवाद एवं व्याख्येयः। यद्यपि दोषान्तराभावादेकाष्टकैव दीक्षायां प्रशस्ता, तथाप्यार्तिमयमलाभिनन्दकत्वरूपदोषश्रवणात्तामतिक्रम्यापि दैक्षेत्र परं प्रशस्ता, माघ्येकादशी [illegible] तदपेक्षयापि प्रशस्ततरा। एकाष्टकाया द्वादशदीक्षोत्तरवर्योदशदिनरूपायाः कथमप्यत्याऽनुत्तरीतत्वादिति ॥ ६ ॥ ५ ॥ १० ॥

दीक्षाकालस्य॥ सोमे दीक्षितो न जुहोतीत्यादिना पुरुषार्थानामग्निहोत्रादीनां क्रत्वङ्गत्वेन पर्युदास प्रतिषेधो [illegible] दीक्षितस्य श्रुतः। अवभृथे च कृते दीक्षामुक्तिः। तद्यदि दैवादिना कारणेन सन्ध्यात. पूर्वं क्रियमाणावभृथस्योत्कर्षस्तदा कालेऽग्निहोत्रं कर्त्तव्यमेव।

स्यामां द्वादशत्वस्य प्रमाणान्तरसिद्धत्वाद्दीक्षा अपि द्वादशेति गमयति। तथा भौधन एव दीक्षाभिरिति दीक्षाबहुत्वं विधाय द्वाभ्यां लोमावद्यन्ति द्वाभ्यां त्वचं द्वाभ्यामसृग्द्वाभ्यां मांसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमिति तद्वाक्यशेषे षट्द्विकानुक्रमणमपि ॥ ६ ॥ ५ ॥ ८ ॥

पौर्णमास्यां ॥ गवामयने, एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी यदेकाष्टका इत्युपक्रम्य आर्त्तं वा एते संवत्सरस्याभिदीक्षन्ते यदेकाष्टकायान्दीक्षन्ते, व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते यदेकाष्टकायां दीक्षन्ते, अपो नाभिनन्दन्तोऽवभृथमभ्यवयन्तीत्यनेन तत्र दोषानभिधाय, चित्रापूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासः तस्य न काचन निर्या भवतीत्यनेन चैत्रीं स्तुत्वा, चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन्नेषामेकाष्टकायां क्रयः सम्पद्यते तेनैकाष्टकां न च्छंबट् कुर्वन्तीति श्रुतम् ।

आर्त्तं दुःखयुक्तं शीतात्, व्यस्तं अयमपराहत्या*, अपो नाभिनन्दन्ति शीतादेव, निर्या दोषः, च्छंबट् रिक्तम् । अत्र जर्त्तिलयवागून्यायेन सर्वमिदमेकं वाक्यमिति तावदविवादम् । अतश्चतुरह इत्येव विधिः पयोसोमन्यायेन । तत्र च पौर्णमासीवाक्यशेषे चैत्र्याः स्तुतत्वाच्चैत्र्येव ।

न च वाक्यशेष एवोपक्रमोपसंहारयोरेकाष्टकाया माघ्युत्तराष्टमीरूपायाः परामर्शात्तस्याः क्रयसम्पत्त्याऽनुग्राह्यत्वोक्तेश्च माघ्येव प्राप्नोतीति वाच्यम् । अष्टकाशब्दस्य कर्मविशेषनामतया तत्कालत्वेना-

* पाठोऽयं न समीचीन । अयनपराहत्या,—इति तु समीचीनं प्रतिभाति ।

तदकरणे प्रत्यवायादि। अतो ऽपशुकामस्यैव यमयेऽधिकारवद्दीक्षितस्यैवाग्निहोत्रादावधिकारो निषेधपक्षेऽपि फलितो भवति।

यदा तु दीक्षितो [redacted] जुहोतीत्यस्याग्निहोत्रादिविध्येकवाक्यतया पर्युदासत्वमङ्गीक्रियते, तदा स्पष्ट एव दीक्षितस्य तत्रानधिकारः। अतश्च मुख्यकालेऽनधिकारात् गौणकाले करणमनाशङ्क्यम्। एवं दैवादिनाऽवभृथोत्कर्षेऽपि दीक्षावत्त्वस्य कथमप्यविशेषान्मुख्यकालेऽनधिकारस्य तुल्यत्वेन न गौणकाले प्रतिहोमकरणम्॥ ६॥५॥१२॥

प्रतिषेधश्च*। कृते ऽवभृथे पशुदवसानीयोत्कर्षे दैवादिना भवेत्तदा काले प्राप्तेऽग्निहोत्रहोम एव कर्तव्यः। तदकरणे वा प्रतिहोमः कार्यः। दीक्षाया अवभृथेनोन्मोचितत्वात्। यत्तु एतया पुनराधेयसंमितयेष्ट्वाऽग्निहोत्रं जुहोतीति वचनं, तत्प्रकरणान्तरन्यायात् होमाङ्गतयोदवसानीयेष्ट्यङ्गतयैव वा कर्मान्तरविधायकमिति प्राप्ते।

निषेधप्रतियोगित्वेनाग्निहोत्रादेरुपस्थितत्वात्तदपेक्षितावधिसमर्पकत्वेनाप्युपपत्तौ कर्मान्तरविधायित्वानुपपत्तेर्होमाङ्गत्वेऽपि उदवसानीयेष्टिप्रतीक्षाया आवश्यकत्वात्पूर्ववदेवानधिकाराच्च प्रतिहोमादिकरणम्। यदा तु दीक्षा यस्यास्ति सा दीक्षित इति व्युत्पत्त्या तत्तद्दीक्षोत्पत्तिकत्वमेव प्रतिषेधप्रयोजकरूपमाश्रीयते, तदा दीक्षाभावेऽपि सर्वदा निषेधप्रसक्तौ उदवसानीयाया अवधित्वमव्याहतमेवेति न तदुत्कर्षे प्रतिहोमादि॥ ६॥५॥१२॥

---

* प्रतिषेधाच,—इति भाष्यधृत पाठः।

यावन्तं कालं शास्त्रवशेन दीक्षानुवृत्तिः, तावत्कालं न जुहोतीति प्रतिषेधशास्त्रार्थविधारणादिति प्राप्ते ।

काललक्षणायां प्रमाणाभावाद्दीक्षैव निषेधावधिः । तस्मात्तन्निवृत्त्यानन्तरं कर्त्तव्यमेवाग्निहोत्रादि ॥ ६ ॥ ५ ॥ ११ ॥

तत्र प्रतिहोम ॥ दीक्षायां सत्यां सोमाङ्गत्वेन अग्निहोत्रप्रतिषेधेऽपि अग्निहोत्रवाक्ये दीक्षितभिन्नस्य कर्तृत्वाश्रुतेः काले तदकरणनिमित्तप्रत्यवायस्यावश्यकत्वात्तत्परिहारार्थं गौणकाले प्रायश्चित्तपूर्वकं कार्य्यं एवाग्निहोत्रहोमः । दैवापराधकृतदीक्षोत्कर्षे तु सुतरामिति प्राप्ते ।

यावज्जीवादिवाक्ये कालावच्छिन्नस्य जीवनादेर्निमित्तत्वमित्यविवादम् । तेषां च न वायकालशुचित्वादिना तत्तेन तत्तेनावच्छेदकत्व गौरवात् । अपि तु शब्दतोऽर्थतो वा यो निषिद्धः कालस्तद्भिन्नकालत्वेन । सायमादिकालविधेर्हि नियमविधित्वादितरकालनिवृत्तिरार्थिकी । एवं शुचित्वादिना अशुचिकालनिवृत्तिरपि । निषेधोऽपि चात्र न विधेयक्रियाङ्गभूत एव विदधितोऽपि अविशेषात्,* तस्मिन् सति विधेयक्रियाया अकरणस्य तत्राप्यावश्यकत्वात् ।

अतश्च यथैव पशुधर्मेणापि गोदोहनेनावरुद्धस्य प्रणयनस्य न चमसप्रयोजकत्वं, तस्मिन् सति तस्य कर्त्तुमशक्यत्वात् । अतएव न तदभावकृत वैगुण्यमपि । एवं सोमाङ्गभूतेनापि निषेधेनावरुद्धस्य दीक्षाकालावच्छिन्नजीवनस्य नैमित्तिकानुष्ठापकत्वानुपपत्तेः न

* विदधितोऽविशेषात्,–इति पाठः समीचीनः प्रतिभाति ।

सूत्रच्छ्रवणादेव साध्यमुपक्रमफलस्य नैयत्याभावप्रतीतेः । अतएव छत्रादिच्छिद्रोद्घाटनेऽपि यद्युदवसानीयायारादौ करणं तदा प्रातर्होमानुष्ठानं जैमिनिमते नानुपपन्नम् ॥ ६ ॥ ५ ॥ १४ ॥

प्रायश्चित्त ॥ भिन्ने जुहोतीत्यादिप्रायश्चित्तं नैमित्तिकमपि फलापेक्षाया प्रकरणात् क्रत्वङ्गम् । निमित्तमपि भेदनादि न लौकिककपालादेः । प्रायश्चित्तसमाख्यावशेन क्रत्वङ्गभूतकपालादिभेदननिमित्तवैगुण्यपरिहारार्थत्वस्यैव कल्पनेन स्वतन्त्रादृष्टकल्पने गौरवात् ॥ ६ ॥ ५ ॥ १५ ॥

व्यापन्नस्य ॥ व्यापन्नमप्सु प्रहरतीति वाक्ये श्रुतस्य व्यापन्नशब्दस्य पदार्थानामभोज्य कृमिकीटाद्यपचारादि तदर्थं, तत्रैव तेषां प्रयोगादिति शिष्यहितार्थमुक्तम् ॥ ६ ॥ ५ ॥ १६ ॥

विभागश्रुते ॥ ज्योतिष्टोमे दक्षिणादानात् प्राक् बहिष्पवमानार्थं सदसः कच्छं धृत्वा प्रसर्पता उद्गातृप्रतिहर्तृप्रस्तोतॄणां मध्ये यद्युद्गाताऽपच्छिद्येत तदा दक्षिणेन न यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद्दद्यात् पूर्वस्मिन् दास्यन् स्यात् यदि प्रतिहर्ता सर्ववेदसं दद्याद्यदि प्रस्तोता ब्रह्मणे वरं दद्यादित्यादिना तत्तत्कर्तृकापच्छेदे निमित्ते प्रायश्चित्तं श्रुतम् । तत्रापच्छेदो नाम विभागरूपं फलमेव, यदि वा तज्जनकक्रिया, सर्वथा तज्जनकक्रियाकर्तृत्वादेवास्य तत्कर्तृत्वव्यवहारः । तथा चान्यतरक्रियाजन्ये उभयक्रियाजन्ये च विभागे एकैकस्यापि प्रत्येकमपच्छेदकर्तृत्वमिति उद्गातृमात्रनिष्ठक्रियाजन्यविभाग इव उभयनिष्ठक्रियाजन्यविभागेऽपि उद्गातृकर्तृत्वव्यपदेशोपपत्तेर्भवत्येव तत्रापि प्रायश्चित्तमित्युत्तरविवक्षया भाष्यते ॥ ६ ॥ ५ ॥ १७ ॥

प्रतिहोमयेत् ॥ यदा अवभृथोत्कर्षे प्रतिहोमस्तदा कृत्वा चिन्तया विचार्यते । अग्निष्टोमसंस्थाके ज्योतिष्टोमेऽवभृथस्य साय-ङ्कालात्पूर्वमेव कर्त्तव्यत्वेन तदुत्तरं रात्रौ करणे एकस्यैव सायंहोमस्य दीक्षाविमोकोत्तरं गौणकाले करणम् । आमानराजतिः सायंहोमस्य गौणकालोवाचनिकः । प्रातर्होमस्य सायंकालावधिवद्गौणकालस्या-घतिक्रमे स्वकालक्रियमाणप्रातर्होमेन सह समस्य होमविधया तन्त्रेण करणम् । अवभृथोत्कर्षणानेकहोमकालातिपत्तौ तु सर्वान् सायंहोमान् प्रातर्होमांश्च पञ्चहोमविधिना समस्य होमविधिना च स्वकालक्रियमाणहोमेन सह तन्त्रेण कुर्यात् । न चातिपत्तिक्रमेण होमानां क्रमेणैव करणं ग्राह्यम् । एकदेशकालकालेन समस्य होमपक्षे होमविधिवैयर्थ्यप्रसङ्गेन चानेकदर्शपूर्णमासातिपत्तिनिमि-त्तकपथिकृदादेव पृथक् करणानुपपत्तेः ।

अतएव सर्वान् सायं होमान् सायङ्काले प्रातर्होमांश्च प्रातःकाल एव कुर्यादित्यपास्तम् । स्वकालक्रियमाणहोमात् पूर्वमेवातिपन्न-होमानां कर्त्तव्यत्वात् । एवं षोडशिस्तोत्रवति क्रतौ तस्य समया-ध्युषितकालीनत्वेनावभृथस्य रात्रावेव क्रियमाणत्वात्तस्य द्वितीयदिने उत्कर्षे प्रातर्होमस्यैव पूर्वोक्तविधयाऽनुष्ठानम् । अनेकहोमकालाति-पत्तावपि तथैव ।

न च दर्शपूर्णमासयोः पौर्णमास्योपक्रमयोरेव मिलितयोः फल-साधनत्ववत्तावप्युपक्रमयोरेव सायंप्रातर्होमाख्ययोरेकफलसाधनत्वस्य कल्पसूत्रेष्वभिधानात् षोडशिनि सायंहोमे अनधिकारे कथं प्रातर्होमेऽप्यधिकार इति वाच्यम् । प्रातस्तु षोडशिनीति जैमिनि-

बाध.। पूर्व्वनैमित्तिकविधेश्च परनिमित्तरहितप्रयोगविषयत्वकल्पना, तद्वदेव चानुष्ठानकालीनमेव पौर्वापर्यं शास्त्रार्थावधारणवेलायां पूर्वमालोच्य व्यवस्थितविषयत्वकल्पनेति न कश्चिद्विरोधः।

न च सञ्जातविरोधित्वेनेह परविज्ञानस्यानुत्पत्तिः। ज्ञापकप्रमाणस्य क्लृप्तत्वेन तदयोगात्। न ह्युत्तरं प्रमाणं पूर्वप्रमाणेनैकवाक्यतया स्वार्थबोधजनकम्। येन तदुपजीवित्वेन तदानुगुण्येन वर्त्तेत। अत उत्तरमेव निरपेक्षतयोत्पद्यमानं पूर्वप्रमाणस्य परनिमित्तकप्रयोगविषयत्वांशे मिथ्यात्वं कल्पयति।

न च पूर्वमेव विज्ञानं परप्रमाणस्य पूर्वनिमित्तकप्रयोगविषयत्वांशे मिथ्यात्वं किमिति न कल्पयेत्। न ह्यत्र नित्यापेक्षया नैमित्तिक इव नित्यकार्यत्वमस्ति। उभयोरप्येकैकनिमित्तकप्रयोगे मात्रकार्यत्वादिति वाच्यम्। पूर्वनिमित्तोपनिपातवेलायां परप्रमाणजन्यज्ञानस्य नियमेनोपस्थित्यभावेन धर्मिज्ञानाभावात्तद्गतस्य पूर्वनिमित्तकप्रयोगविषयत्वांशे मिथ्यात्वस्य कल्पयितुमशक्यत्वात्। परनिमित्तोपनिपातवेलायां पूर्व्वविज्ञानस्य चिकीर्षितविषयत्वेन पुरःस्फूर्त्तिकत्वाद्धर्मिज्ञानसत्त्वेन तद्गतमिथ्यात्वकल्पने न किञ्चिद्बाधकम्। यदि परनिमित्तोपनिपातोत्तरमेव पूर्व्वस्य मिथ्यात्वकल्पनमित्याग्रहस्तेन, तथापि यदा परनिमित्तोपनिपातोत्तरं पूर्वप्रमाणविस्मरणं तदाऽनेनोत्तरस्य मिथ्यात्वकल्पनानुपपत्तेरवश्यम्भवन्मते पूर्वप्रमाणस्मरणं कल्प्यम्। मन्मते तु यदा दैववशात् पूर्वप्रमाणस्मरणं, तदा तस्य मिथ्यात्वकल्पनेऽपि विस्मरणे परनैमित्तिकस्यैवानुष्ठानान्न किञ्चित्कल्प्यम्।

तथा चायमत्र क्रमः। परनिमित्तोपनिपाते नैमित्तिकवाक्यार्थज्ञानं, ततः पूर्वविज्ञानस्मरणं, ततः परविज्ञानस्य तेन सह विरोधज्ञानं, ततस्तेनापेक्षाबुद्ध्यात्मकेन विनश्यदवस्थेन चतुर्थक्षणे पूर्वज्ञानस्य भ्रान्तिकल्पना, विरोधज्ञानदशायां तदुत्तरं वा परनैमित्तिकवाक्यार्थस्मरणकल्पनेति न विरोधः। अतः सिद्धं परेण पूर्वस्य बाध इति ॥ ६ ॥ ५ ॥ १८ ॥

यद्युद्गाता ॥ क्रमेऽपि यद्युद्गात्रपच्छेदो जघन्यस्तदा तन्निमित्तपुनःप्रयोगे सर्वस्वमेव देयं, न तु द्वादशशतम्। परनिमित्तपातात्पूर्वं तस्यैव देयत्वेन प्रसक्तत्वात्। तत्र यद्यादित्यनेन यत्पूर्वप्रयोगे परनिमित्तपातात्पूर्वं देयत्वेन प्रसक्तं, तस्यैव दक्षिणात्वेन विधानात्। द्वादशशतस्य पूर्वनिमित्तेनैव बाधितत्वेन देयतयाऽप्रसक्तेः।

अतश्च यद्यपि सर्वस्वमप्यदाक्षिण्येन दक्षिणोत्कर्षेणैव वा पूर्वप्रयोगे वस्तुतो बाधितमेव, तथापि परनिमित्तपातात्पूर्वं बाधज्ञानाभावादेयत्वेन प्रसक्तेर्न काचित् क्षतिः। यदा तु प्रतिहर्त्रपच्छेदो जघन्यस्तदा तन्निमित्ते प्रयोगे सर्वस्वं देयं, न तु पूर्वापच्छेदनिमित्तकः पुनः प्रयोगः कार्यः। न च सर्वस्वदानेनादाक्षिण्यस्यैव विरोधात्तद्बाधेऽपि पुनःप्रयोगबाधे प्रमाणाभावः। अदाक्षिण्यपुनःप्रयोगयोः समुच्चितयोरेव नैमित्तिकत्वेन एकाभावे इतरस्याप्युपपत्तेः। अतश्च यथैव पत्न्याः स्वसूत्रापमभावात्क्षेत्रानामपि न वपनं साहित्यस्य विवक्षितत्वात्तथैवादाक्षिण्याभावे पुनःप्रयोगस्याप्यभावः।

यद्यपि च दक्षिणोत्कर्षस्य पुनःप्रयोगाङ्गतया विधानस्यावश्यकत्वादेव पूर्वप्रयोगे अदाक्षिण्यस्यार्थप्राप्तत्वाददक्षिणमित्यस्यानुवाद-

त्वमुच्यते । तथापि पाक्षिकानुवादभियैवादाक्षिण्यलोपे पुनःप्रयोगलोप इति द्रष्टव्यम् ।

वस्तुतस्तु सोमभयभक्षेतिवत् पाक्षिकानुवादत्वेऽपि पुनःप्रयोगलोपे प्रमाणाभावः । न च तस्य सर्वस्वद्रव्यमात्रोपलक्षणत्वान्न पाक्षिकानुवादत्वमिति वाच्यम् । सर्वस्वद्रव्यनाशेऽपि विश्वजित आवश्यकत्वेन पाक्षिकानुवादत्वानिवारणात् ।

वस्तुतस्तु नायमनुवादः । तत्र तद्दद्यादित्यनेन पूर्वप्रयोगे दातव्यदक्षिणाया पुनःप्रयोगाङ्गतया विधानेऽपि पूर्वप्रयोगाङ्गभूतकर्मान्तर्यं तस्मिन्नपि तस्या आवश्यकत्वेनादाक्षिण्यप्राप्त्यभावात् । न चैवं पुनःप्रयोगस्य ज्योतिष्टोमत्वादेव द्वादशशतादिरूपदक्षिणाप्राप्त्युपपत्तौ तत्र तद्दद्यादित्यस्य वैयर्थ्यमिति वाच्यम् । तस्य पूर्वप्रयोगे एकविंशत्येत्यादिप्रकरणेन पुनःप्रयोगे द्वादशशतादेरपि प्राप्त्यापत्तौ तन्निवृत्त्यर्थत्वेन सार्थक्यात् । उद्गातुर्जघन्यत्वे सर्ववेदसप्राप्त्यर्थत्वाच्च ।

न चैवं केशश्मश्रुन्यायेन पुनःप्रयोगबाधः । तत्र द्वन्द्वेन साहित्यस्योपादेयकेशश्मश्रुगतत्वेनोक्तत्वात् साहित्यावच्छिन्नस्यैव क्रियाङ्गत्वेन प्रत्येकं तदङ्गत्वाभावात् । प्रकृते त्वरुणैकहायन्योरिवाग्नेयदेवतान्तरप्रयोगयोरिव च प्रत्येकमेव क्रियान्वयादेकवाक्योपादानादिना पश्चात् साहित्यावगमेऽपि नैकलोपे परस्य लोपः । न ह्यरुण्यासम्भवे एकहायनीलोपः, उपांशुयाजे देवतान्तरप्रयोगाभावे चापत्तय इष्टः । प्रतिहर्त्तुं परत्वे पूर्वप्रयोगे सर्वस्वं दत्त्वा पुनःप्रयोगेऽपि तद्देयमिति सिद्धम् ।

यदा त्वाद्यप्रयोगे उद्गात्रमात्रापच्छेदस्तन्निमित्तकद्वितीयप्रयोगे

च प्रतिहर्त्रपच्छेदस्तदा तच्चैव सर्वस्वमेव देयम् । नैमित्तिकत्वेन नित्यदक्षिणाबाधकत्वात् । न च पुनःप्रयोगस्य प्रायश्चित्ततया पूर्वप्रयोगाङ्गत्वात्तत्र तद्दद्यादित्यनेन च पूर्वप्रयोगाङ्गभूतदक्षिणाया एवोत्तरप्रयोगदक्षिणात्वमात्रविधानाद्गुणविरोधन्यायेनाङ्गभूतपुनःप्रयोगाङ्गसर्वस्वदक्षिणाबाधेन प्रधानभूतपूर्वप्रयोगाङ्गदक्षिणाया एव देयत्वमुचितमिति वाच्यम् । अपूर्वविधित्वाददृष्टार्थत्वादिदोषप्रसङ्गेनोत्तरप्रयोगवत्तद्दक्षिणायाः पूर्वप्रयोगाङ्गत्वानुपपत्तेः । अतस्तस्यापि पुनःप्रयोगाङ्गत्वात्परेण नैमित्तिकेन पूर्वस्य बाधात् सर्वस्वमेव देयम् ॥ ६ ॥ ५ ॥ २० ॥

अहर्गणे ॥ द्वादशाहाद्यहर्गणे यद्येकस्मिन् कस्मिंश्चिदहनि उद्गातुरपच्छेदो भवति, तदा कृत्स्नस्याहर्गणस्यावृत्तिः । सुत्यागणस्यैव द्वादशाहपदवाच्यत्वेन फलसाधनत्वात्तस्यैव प्रायश्चित्तादिरूपाङ्गग्राहित्वात् । अस्तु वोत्पत्तिवाक्ये प्रत्येकं करणत्वावगमाद् द्वादशाहपदेनापि च समुदायिनामेवोक्तेः प्रत्येकमेव फलं प्रति करणत्वम् । एकपदोपादानाच्च करणानां समुच्चयः । अतस्तदङ्गग्राहित्वमपि प्रत्येकमेव । तथापि यत् क्रतुसम्बन्ध्युद्गाताऽपच्छिन्नस्तेन क्रतुना यजेतेत्यर्थावगमादुद्गातुश्च एकस्यैव सर्वसाधारणत्वेन सर्वावृत्तिरिति प्राप्ते ।

नोद्गातुः क्रतुसम्बन्धो विवक्ष्यते, अपि त्वावश्यकत्वादमुकक्रतुसम्बन्धिबहिष्पवमानार्थं प्रसर्पणमुद्गात्राऽपच्छिद्यात्तेन* क्रतुना यजे-

* इत्थमेव पाठः सर्व्वत्र । प्रसर्पणे उद्गात्राऽपच्छिन्नस्तेन,—इति भवितुमुचितम् ।

वेत्यर्थावगतेस्तस्य च प्रतिसुत्यं भेदेन तत्सुत्याया एवावृत्तिः। तत्सुत्याया अपि च तत्सुत्याव्यवहितोत्तरमेवावृत्तिः। साङ्गपूर्वसुत्या-करणव्यतिरेकेणोत्तरसुत्यायामनधिकारात्। अतएव पूर्वाङ्गानामप्यत्र नावृत्तिरिति ध्येयम् ॥ ६ ॥ ५ ॥ ११ ॥ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

षष्ठस्य पञ्चमः पादः ॥

# अथ षष्ठोऽध्यायः ।

## षष्ठः पादः ।

सन्निपाते ॥ दर्शपूर्णमासादौ कल्पभेदः श्रुतः, वासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामित्यादिना । अत्र हि तनूनपातं यजतीत्यनेन एकदेशप्रवृत्तिनिमित्तनामधेयमङ्गीकृत्य विहितस्य द्वितीयप्रयाजस्य क्रमेण शाखाभेदेन समाम्नातयोर्नराशंस-तनूनपान्मन्त्रयोर्व्यवस्थया विकल्पेन द्वितीयप्रयाजसम्बन्धित्वेन प्राप्तयोर्वासिष्ठसम्बन्धमात्र नराशंसस्य क्रियते । अतएव नाराशंस इति तद्धितो द्वितीयप्रयाजपदस्यानुवादः । ततश्च परिशेषादेव तनूनपान्मन्त्रे अन्यसम्बन्धसिद्धेस्तनूनपादन्येषामित्यपि षोडशुत्तर इति यदनुवाद एव ।

न च नराशंसमन्त्रस्य पशुप्रकरणे पाठेऽपि दर्शपूर्णमासप्रकरणे पाठाभाव इति केषाञ्चिदुक्तं युक्तम् । पशुप्रकरणे आप्रीसूक्ते नैतन्नाराशंसमन्त्रपाठेऽपि नराशंसोऽग्न आज्यस्य वेत्वित्यस्य दर्शपूर्णमासप्रकरणे पाठात् । अतएवाश्वलायनादिभिरपि तत्रैव स पठित । यत्तु नराशंसवाक्ये द्वितीयत्वादिविशिष्टप्रयाजान्तरविधिरूपस्य च वासिष्ठसम्बन्धित्वेन विधानादन्येषामभाव इति । तन्न । तथा सति सन्निधानोक्तरूपद्वितीयत्वस्य नराशंसयागे विधानेऽपि वासिष्ठानां तनूनपाद्यागबाधे प्रमाणाभावान्नराशंसोत्तर तत्करणापत्तेः ।

न हि द्वितीयपदेन तत्कार्य्यकारित्वेन नाराशंसविधिः, येन तेषान्तनूनपाद्बाधः प्रसज्येत। तथात्वे सिद्धान्ते वासिष्ठानामप्युद्देश्यत्वेन वाक्यभेदापत्तेः।

न च तनूनपादन्येषामित्यनेनान्येषामेव तनूनपाद्विधानाद्वासिष्ठानां तद्बाधोपपत्तिः। तस्यैकवाक्यत्वेनोपपत्तौ वाक्यभेदाङ्गीकारे प्रमाणाभावात्। विशिष्टविधिकर्मान्तरकल्पनागौरवप्रसङ्गाच्च। अतः पूर्वोक्तप्रकारेण मन्त्रस्यैव वासिष्ठसंबन्धविधानेन कल्पभेद उपपादनीयः। स च दौवणीयादिद्वाराऽनेककर्तृकेषु सत्रादिषु प्राप्तः। अतः सत्रादौ भिन्नकल्पानामप्यधिकारः उत समानकल्पानामेवेति चिन्तायाम्।

अविशेषाद्भिन्नकल्पानामपि। न चैककल्पकरणेऽन्येषां वैगुण्यप्रसङ्गः। वासिष्ठानामित्यस्य मन्त्रस्य शुद्धवासिष्ठार्थत्वविधाने प्रकरणबाधापत्तेः, क्रतुपुरुषधर्मत्वे च परिसङ्ख्यापत्तेर्वासिष्ठस्य नराशंसमन्त्रे दौत्ये वैश्वामित्रविधानात् सत्रात्कर्तरि परिच्छेदकत्वेन विधानायोगेऽपि प्रयोजककर्तृभूतयजमानपरिच्छेदकत्वेन वासिष्ठत्वविध्युपपत्तेः। सत्रादावौदुम्बरीसम्मानवदेकवासिष्ठकर्तृकत्वेऽप्यन्येषां वैगुण्यानापत्तेः। अतो भिन्नकल्पानामप्यधिकार इति प्राप्ते।

विकल्पेन प्राप्तयोर्नियमार्थत्वेन वाक्यसार्थक्योपपत्तौ नियतप्राप्ताप्राक्षिक्यास्तत्रिकल्पपरिसङ्ख्याफलकत्वायोगाद्वासिष्ठोद्देशेनैव प्रमाणान्तरप्राप्तवासिष्ठाभिन्नविविक्तफलसाधनीभूतदर्शपूर्णमासाङ्गभूतद्वितीयप्रयाजद्वारा नराशंसमन्त्रविनियोगविधिः। अतश्च नराशंसमन्त्रस्यावासिष्ठेषु विनियोगाभावादेव निवृत्तिरिति न तत्परिसङ्ख्यायां वाक्य-

प्रवृत्तिफलत्वम्। अतश्च भिन्नकल्पानामधिकारे एकाङ्गभूतमन्त्रपाठे इतरेषां फलानापत्तेः समानकल्पानामेवाधिकारः॥ ६॥ ६॥ १॥

वचनात्तु॥ एतेन राजपुरोहितौ सायुज्यकामौ यजेयाता-मित्यत्रापि न भिन्नकल्पयोरधिकारः। द्वन्द्वस्य युगपदधिकरण-वचनत्वेन पदद्वयेऽपि लक्षणाहत्तत्वात्। तदनङ्गीकारेऽपि वा साहित्यबोधार्थं पदद्वये लक्षणायां आवश्यकत्वाच्च। अन्यथा देवता-त्वादेर्व्यासज्यवृत्तित्वानुपपत्तेः। अतस्तत्पुरुष एवायमतदुत्तरत्वेकप्रयेः। अतश्च समासादुत्पन्नं द्विवचनमन्तर्ध्यैव द्वित्वमाह। तस्माद्राजद्वय-सम्बन्धिनौ द्वौ पुरोहितौ समानकल्पावेव यजेयातामित्याद्यः पक्षः।

द्विवचनस्य विशेष्यान्वयित्वानुपपत्तेः सङ्ख्याधिकरणे व्युत्पादित-त्वात् एकस्यानेकस्य वा राज्ञो द्वौ पुरोहितावित्यपरः।

अथ वैकशेषकृत्यैव तत्पुरुषः कार्यः। इतरथा पदद्वयावृत्ति-प्रसङ्गात्। राजपदवैयर्थ्यप्रसङ्गाच्च। अत एकस्यैव राज्ञो द्वौ पुरोहितावित्यन्यः।

पूर्वपक्षे लक्षणायां प्रमाणाभावात् पुरोहितं वृणीत इत्युपादेय-द्वयाद्यामेकस्यैव विवक्षितत्वेनैकराज्ञः पुरोहितद्वयाभावाच्च कर्मधारय-एवायमिति प्राप्ते।

ब्राह्मणानामेव पौरोहित्यश्रवणात् कर्मधारयानुपपत्तेर्द्वन्द्व-एवायम्। न च तत्र पदद्वये लक्षणा, युगपदधिकरणवचनत्वस्य निराकृतत्वात्। साहित्यप्रतीतेरानुमानिकत्वेनाप्युपपत्तौ लक्षणायां प्रमाणाभावात्। समाहारे परं एकत्वान्वयार्थं पदद्वयेऽपि समुदाय-लक्षणेति विशेषः।

व्युत्पन्नत्वात् । विशिष्टकर्तृलक्षणाऽपेक्षया तत्कार्यलक्षणाया एव ऋत्विक्पदे न्याय्यत्वाच्च ।

अतो यो होता सोऽध्वर्युरित्यत्राधन्ये ऋत्विक्पद एव तत्कार्यं लक्षयित्वा यजमानसंस्कारार्थत्वेन तद्विधीयते । यच्छब्दप्रथमाभ्यां यजमानस्यैवोद्देश्यत्वप्रतीतेः । अतएव फलमुखत्वात् प्राकृतकार्यकल्पनाऽपि न दोषः । एवं च ऋद्धिकामत्वाविशेषात्त्रयाणामपि वर्णानामार्त्विज्यसंस्कार्यत्वावगतेस्त्रयाणामपि सत्रेऽधिकारः । अतएव सारस्वते वार्षगिरं ब्राह्मणस्येत्यादि लिङ्गमपि सङ्गच्छते । एवं च यजमानसंस्कारकैरेव ऋत्विक्पदार्थैः प्राकृतकार्योपकारस्यापि सिद्धेः न तदर्थं परिक्रयादिभिः ऋत्विगन्तरसम्पादनमित्यपि द्रष्टव्यमिति प्राप्ते ।

ज्ञापकत्वे व्यवहितान्वयकल्पनया शाब्दबोधस्य दौर्बल्ये दृष्टत्वादिनाऽपूर्वविधित्वादिरूपप्राकृतकल्पनादिदोषभिया यच्छब्दस्य व्यवहितान्वयेन स्वरूपप्राप्तिमात्रसूचनेन वा ऋत्विक्कार्यस्यैवोद्देश्यत्वमङ्गीकृत्य यजमाना. कर्त्तारो विधीयन्ते । न चैतावताऽऽर्त्विज्यकर्तृकत्वं सत्रे, यजमानानामपि ऋत्विक्त्वस्य बाधितत्वात् । वरणादिनिष्क्रीत यजमानभिन्नत्वं परमतिदेशप्राप्तमुपदेशेन बाध्यते । न चैतावता-ऽब्राह्मणकर्तृकत्वमपीति तदनुग्रहाय ब्राह्मणानामेवाधिकारः । वार्षगिरादिदर्शनन्त्वहीनाभिप्रायेण ॥ ६ ॥ ६ ॥ २ ॥

वासिष्ठानां ॥ प्रकृतौ वासिष्ठो ब्रह्मा वैश्वामित्रो होतेति ब्रह्मत्वाद्युद्देशेन वासिष्ठादिविधानात्त्रयोश्च विरुद्धकल्पत्वात्सत्रे विकल्प इति प्राप्ते ।

व्यपदेशेऽपि अन्यत्र लोकादौ कृताया एव विधानादतिदेशत्वव्यवहारोभाक्त इति ध्येयम् । सर्वथा तक्षणादि प्रयोगमध्येऽनुष्ठेयमिति प्राप्ते ।

क्रियाप्रयोगोत्तरमपि जातिरूपार्थं प्रयोगसाधनत्वाद्यौगिकत्वाभावाच्च जातावेव शक्तिः । जातिस्तु परं क्रियाभिव्यङ्ग्या तज्जनितसंयोगविशेषादिरूपफलाभिव्यङ्ग्या वेति तदुत्तरमेव शब्दप्रयोगः । न चैतावता शब्दः क्रियावाचीति तस्या अविधेयत्वेनानङ्गत्वाल्लौकिकस्येव निष्प्रयोजनस्य हेयम् । निर्मन्थ्यशब्दस्तु यौगिक इति युक्तं तस्य मथनक्रियाविधायकत्वम् । यूपशब्दे तु क्रियाप्रयोगोत्तरं प्रयोगेऽपि तक्षणाद्यदृष्टविशिष्टकाष्ठवाचित्वात् शुद्धजातिवाचित्वमिति* युक्त एव तत्र संस्कारातिदेशः ।

वस्तुतस्तु यूपकार्ये खलेवालीविधानाद्यूपशब्दस्य न संस्कारातिदेशकत्वम् । संस्कारातिदेशस्तु स्वाभाव्येनेति पूर्व्वपक्षाशयोपपत्तिदृष्टान्तोऽप्ययुक्त एव ॥ ७ ॥ ३ ॥ १० ॥

विषये । गर्गत्रिरात्रे ब्राह्मणोक्तानि सामानि प्रकृत्याग्निमुपनिधाय स्तुवीतेति श्रुतम् । तत्राग्निः किं वैदिको लौकिको वेति चिन्तायाम् । यद्यपि दाशमे आहवनीयादीनां योग्यतया लौकिकपाकाद्यर्थत्वं निरसिष्यते, तथापि वैरूप्याधिकृतयोरपि शब्दे प्रयोक्तुमिति सामान्यवचनेन वैदिककर्ममात्रार्थत्वावगतेर्वैदिक एवेति प्राप्ते ।

---

* शुद्धजातिवाचित्वमिति,—इति सो० पुस्तके पाठः ।

† पूर्व्वपक्ष,—इति नास्ति व्यादर्शपुस्तके ।

मनूद्यते। पृष्ठपदेन तु आत्मनेपदानुरोधेन पृष्ठस्तोत्रसाधनीभूता-न्यत्र साम्नि लक्ष्यन्ते।

वस्तुतस्तु षाडहिकेषु रथन्तरादिषु षट्सु सामसु पृष्ठशब्दस्याभ्याख्यानार्थवादबलेन निरूढलक्षणाश्रित्याधिकरणे कौस्तुभे व्यवस्थापितत्वात्तान्येवाभिधानं प्रति करणत्वेन विधीयन्ते। सम्भवति च स्तोत्र इवाभिधानं प्रति साम्नः करणत्वं स्वगताभिव्यक्तिद्वारा। अतएव तदाधारभूतानां योन्यृचामप्यभिधानाङ्गत्वम्। उत्तरयोस्तु एकं साम तृचे क्रियते स्तोत्रीयमिति स्तोत्र एव विनियोगान्नाभिधानाङ्गत्वप्रसक्तिः। अतश्च योन्याधाररथन्तरादिषाडहिकसामविशिष्टाभिधानमेवात्र स्थण्डिलसंस्कारकत्वेन विधीयत इति सिद्धम्। सामान्ये उपदेशोऽयं मन्त्राङ्गत्वस्य पूर्वावगमसापेक्षेण चिन्तितः॥ ७ ॥ ३ ॥ १४ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

सप्तमाध्यायस्य तृतीयः पादः॥

धातूपात्तमपि च समीपावस्थानमङ्गप्रकार्यत्वात्कर्माकाराङ्गस्येव । अथ-वा पाशाधिकरणन्यायेन बहुवचनानुरोधेन पृष्ठप्रातिपदिके गौणाङ्गीकारस्यायुक्तत्वाद्बहुवचनेनैकत्वादि लक्षयित्वा प्रथमाङ्गतया ज्यौतिष्टोमिकपृष्ठविधिरेवायम् । समीपस्थितिस्तु पूर्ववत्पृष्ठस्तोत्र-यैवाङ्गम् ।

वस्तुतस्तु पृष्ठशब्दस्यापि ज्योतिष्टोमे साधितत्वात्सर्वाण्येव पृष्ठ-स्तोत्राणि प्रथमाङ्गतया विधीयन्ते । न तु पृष्ठमन्त्राणां रथन्तरा-दिसाम्नां वा विधानम् । उपक्रमस्थपृष्ठपदे लक्षणाप्रसङ्गात् । एवं च प्रथमात्मनेपदमेव आङ्गलकतया साधुत्वार्थं व्याख्येयमिति प्राप्ते ।

पृष्ठशब्दस्य शरीरावयवेऽपि प्रसिद्धेन तत्करणकसमीपावस्थिते-रपि विधिसम्भवेन स्तोत्रविधानेव नियामकाभावेन सन्दिग्ध-त्वान्निःसन्दिग्धात्मनेपदानुरोधेन पृष्ठपदमेवान्यथा नेतुमुचितम् । तथा हि । उपाध्यानकरण इति सूत्रात् आत्मनेपदस्वारस्यात्समी-पावस्थाने मन्त्रस्य करणत्वावगतेः साक्षात्सम्बन्धेनाभिधानातिरिक्ते व्यापारे मन्त्रस्य करणत्वासम्भवेऽपि समीपावस्थानप्रयोजनीभूताभि-धानद्वारा समीपावस्थानं प्रति करणत्वाङ्गीकारात्तदनुरोधेन पृष्ठ-शब्दस्य मन्त्रपरत्वावगतिः । अतएव समीपावस्थानजन्याभिधानजन-कत्वसंसर्गेण मन्त्राणां समीपावस्थानं प्रति करणत्वमिति नाभि-धानलक्षणाऽपि ।

वस्तुतस्तु ऐन्द्र्यधिकरणस्थकौस्तुभोक्तन्यायेन लक्षणया अभिधान-मेव प्रकृताङ्गिकर्मकं धातुना विधीयते । तत्रैव पृष्ठपदार्थस्य करण-त्वम् । समीपावस्थानं परमत्र अभि नोत्यादिमन्त्रसिद्धत्वादेव प्राप्त-

यत्तु सौर्यादौ, प्रयाजे कृष्णलं जुहोति, ऐन्द्राबार्हते अर्धं बर्हिषो लुनाति, पितृयज्ञे न होतारं वृणुते, पशुमेधीये आज्यभागौ यजति इत्यादिविकृतिदर्शनम्। तद्यत्र नित्यानुवादवचनानि श्रुतिश्चेदं परिहर्तव्यम्। तथा हि। यत्र प्रयाजा दर्शपूर्णमासादौ तत्र कृष्णलहोमविधिरिति तन्त्ररत्नकारः।

वस्तुतस्तु प्रयाजोद्देशेन कृष्णलहोमान्तरविधानादुपकारकत्वेन सर्वप्रयाजार्थं तन्त्रेणानुष्ठानापत्तेः प्रयाजे प्रयाजे इति वीप्सानुवादानुपपत्तिः। प्रयाजीयहोमोद्देशेन कृष्णलमात्रविधौ विशिष्टोद्देशः। होममात्रोद्देशेन तद्विधावतिप्रसङ्गः। अतः प्रयाजोद्देशेन कृष्णलमात्र पूर्वपक्षे आज्येन सह विकल्पेन प्रतिनिधित्वेन वा विधीयते। सिद्धान्ते तु तद्बाधकत्वेन। प्रयाजाश्च पूर्वपक्षे दर्शपूर्णमासीया सिद्धान्ते सौर्यीया इत्येतावान्विशेषः। जुहोतिश्च संस्कारकत्वेन प्राप्तोऽनूद्यते।

अत एव भाष्यकारोक्तमस्य बाधोदाहरणत्वमपि पञ्चमविधिप्रकारापत्तेरयुक्तम्। याज्ञिकास्तु आज्येनैव प्रयाजहोमे कृष्णलप्रक्षेपमधिकं कुर्वन्ति। एवं अर्धं बर्हिष इत्यत्रापि यत्र दर्शादौ बर्हिर्लवनं तत्र लवनानुवादेनार्धत्वविधिः। न होतारमिति तु नित्यानुवादः। आज्यभागविधिस्तु अपूर्वविधितया वचनमिति द्रष्टव्यम्। यत्र हि गुणोपादानं भवेत्तत्र सर्वत्र तृतीयविधिप्रकारलोभेन यथेत्यमेवोदाहरणं भवेन्न वचनत्वम्। अस्तु वा तत्र* प्राकरणिक-

* इत्यमेव पाठ सर्वत्र। यत्र,— इति तु भवितुमुचितम्।

## अथ सप्तमाध्यायस्य चतुर्थः पादः ।

इतिकर्तव्यता ॥ तदेवं सप्रसङ्गो नामातिदेशो निरूपितः । इदानीं कस्मिंस्तद्वचनातिदेशो निरूप्यते । यत्र उद्भित्सौर्यादौ नैवेतिकर्तव्यताऽऽम्नाता, यत्र वा द्रव्यदेवतोपहोमादिरूपा समाम्नाताऽपि न निराकाङ्क्षीकरणसमर्था, तत्र भावनायास्तदभावेन तस्याः करणानुग्राहकव्यापाररूपेतिकर्तव्यताकाङ्क्षायां वक्ष्यमाणमार्गेण प्रकृतिभावनोपस्थितौ तदंशभूतस्याप्युपस्थितेः, तत्र च फलकरणयोरनपेक्षितत्वादिनाऽतिदेशस्य निराकरिष्यमाणत्वादितिकर्तव्यतैव प्रकृतिवदित्येव कल्पितेन विकृतिवाक्यशेषरूपातिदेशेन विकृत्यङ्गतया विधीयते । न च प्रत्यक्षप्रमाणेन प्रकृत्यङ्गतयाऽवगतायाः कथं विकृत्यङ्गत्वमिति वाच्यम् । प्रत्यक्षस्यापि विकृतिविधेरितिकर्तव्यताकाङ्क्षामात्रभावेनानर्थक्यप्रसङ्गाद्दुर्बलप्रमाणबाधकत्वानुपपत्तेः ।

अतः सर्वथानाम्नातेतिकर्तव्यताकत्वे आम्नातेतिकर्तव्यताया अतिदेशः । आम्नातेतिकर्तव्यताकाश्च सोमदर्शपूर्णमासादयः श्रौताः श्रौताग्निसाध्याः । पार्वणस्थालीपाकादयश्च स्मार्ताग्निसाध्याः । स एव सूत्रे लौकिकपदेनोच्यते । तथाविधेषां सौर्यादावुभयोरप्यतिदेशः । यदि तु प्रकृतावेकैकस्याः प्रत्येकं निराकाङ्क्षीकरणसमर्थाया एव समुच्चयेन मिलिताया निराकाङ्क्षीकरणसामर्थ्यकल्पने प्रमाणाभावादेकस्या एवातिदेश इत्याशङ्क्येत । ततोऽस्तु लौकिक्या एवातिदेशः । तस्याः कल्पसूत्रकारादिवचनैराग्रयणीकर्मादावतिदेशस्य क्लृप्तत्वेन दृष्टप्रवृत्तिकतया सौर्यादावपि तस्या एवातिदेशात् ।

द्वादशाहिकातिदेशेनैव तद्धर्मप्राप्तिरावश्यकी। तत्तदहरुत्पत्ति-वाक्येष्वेव भावनाया इतिकर्त्तव्यताकाङ्क्षायाङ्गणान्तर्गतत्वसादृश्येन चातुर्मास्यान्तर्गताग्नेयादिवत्प्रत्येकमेवातिदेशकल्पनेन ज्योतिरादौ नामातिदेशसत्त्वेन चोदनालिङ्गातिदेशस्यैवाकल्पनात्। न च लाघ-वाद्गवामयने एक एवातिदेशः। गवामयनत्वस्य प्रत्येकवृत्तित्वेन प्रत्येकमेव फलभागत्वात्साधनानां समुच्चयेऽपि तत्तत्साधनानां प्रत्येक-मेवेतिकर्त्तव्यताकाङ्क्षायां प्रत्येकमेव तत्कल्पनात्। अतो ज्योति-रादौ नैव चोदनालिङ्गातिदेशः।

न चैवं तेषु त्र्युपसत्त्वस्यैव प्राप्तेर्द्वाभ्यां सौमावचति द्वाभ्यां सोम-मित्यादिषड्दिकान्यनुक्रम्य षडहाद्दशोपसदो भवन्तीति द्वादशाहिक-द्वादशोपसत्त्वदर्शनानुपपत्तिः। तस्य भूयोऽहरन्तरानुरोधेन नामा-तिदेशप्राप्तिनिमित्तबाधकत्वोपपत्तेः। द्वादशसु तिसृणामप्युपकारक-त्वोपपत्तेश्च। तस्मात्फलत्वात्कालीनाङ्गानामन्येषां वा चित्वातिरि-रिक्तानामेव नाम्नाऽतिदेश इति सिद्धम्।

नन्वेवमप्येकादशिन्या विहारदर्शनानुपपत्तिः। तथा हि। ज्योतिष्टोमे सौत्येऽहनि वैकल्पिकी एकादशिनी समाम्नाता। तस्यास्तु द्वादशाहे विहारः श्रुतः। तस्यातिदेशेन गवामयने एकषष्ट्यधिकशतत्रयसंख्याके प्राप्ताविदं श्रुतम्। यस्यातिरिक्त-मेकादशिन्यामालभेरन्नप्यथ भ्रातृव्यमतिरिच्येतामथ यद्वौ द्वौ पशू समस्येयुः कनीय आयुः कुर्वीरन्यदेते ब्राह्मणवन्तो नवपशव आल-भ्यन्ते नास्य भ्रातृव्यमतिरिच्यते न कनीय आयुः कुर्वत इति। गवामयने हि सम्पूर्णैकादशिन्याः द्वात्रिंशदावृत्तौ दिवसाग्र-

गुणावरुद्धे गुणान्तरस्य प्रतिनिविष्टत्वादिनापि कथञ्चिन्निवेशासम्भव-स्वदृष्टान्तोदाहरणम्। सर्वथातिदेशाभावेऽपि लिङ्गोपपत्तिरितिभाष्ये।

अप्रत्यक्षपठितवेदविहितत्वसादृश्यादैष्टानिकाग्निसाध्यत्वसादृश्याच्च वैदिक्या एवातिदेश। अतिदेशाभावेऽपि हि सौर्यादौना गृह्य-सूत्रेष्वनुक्तत्वाच्च स्मार्ताग्निसाध्यत्वम्। अत सामान्यविहिताहव-नीयादिसाध्यत्वे बाधकाभावात्सादृश्योपपत्ति। अत एवजातीयकेषु दर्शपूर्णमासादिधर्माणामेवातिदेश इति सिद्धम्। लिङ्गान्येव सदुपपन्नानि भवन्ति। इतरथा प्रकरणबाधो वाक्यानर्थक्यं वा प्रसज्येत ॥ ७ । ४ ॥ १ ॥

द्वादशाहिकम् ॥ तदेव निरूपितस्त्रिविधोऽतिदेश। तत्र प्रत्यक्षवचनातिदेशस्य द्विविधाद्यतिदेशाभावस्य धर्माणामुपात्तत्वा-दाकाङ्क्षैवर्थापत्तेश्च पूर्वमेव प्रसङ्गादुपपादितम्। अतस्तादृशविषये चोदनालिङ्गातिदेशस्य नैव कल्पना। नामस्तु यदि समानविषयत्व तदा प्रत्यक्षवचनापादितलिङ्गसादृश्यमादायैव नाम्नो गौणत्वोपपत्ते-र्नातिदेशकत्वम्। यदि तु भिन्नविषयत्वेन सादृश्यसम्पत्तिस्तदा नाम्नोऽप्यविरुद्धधर्मातिदेशकत्वमवधेयम्। एवं नामातिदेशवत्त्वेऽपि समाने असमाने वा विषये चोदनालिङ्गातिदेशस्य नैव कल्पनम्। नाम प्रत्यक्षत्वेन तेनैवैतिकर्तव्यताकाङ्क्षाशान्ते। अतएव गवा-मयने ज्योतिर्गौरायुरित्येवमादिष्वत्र तु एकाहकाण्डपठितज्योति राद्धिधर्माणां नाम्ना प्राप्ति। न तु गणत्वसादृश्याद्द्वादशाह धर्माणाम्।

न च अहरन्तरार्थमवश्यकल्प्येन गणत्वसादृश्याद्गवामयननिष्ठ-

# अथ अष्टमाध्यायस्य प्रथमः पादः।



अथ विशेषः ॥ तदेवं त्रिविधोऽतिदेशो निरूपितः। तत्रापि प्रत्यक्षवचननामातिदेशयोः कार्त्स्न्येन चिन्ता कृता। चोदनालिङ्गातिदेशस्य सामान्यतो निरूपितस्य प्रकृतिविशेषनिरूपणार्थमष्टममारभ्यते। तत्रैकस्मिन् सौर्यादौ एकविध्यन्तेनैव निराकाङ्क्षत्वात्सर्वविध्यन्तसमुच्चयायोगेऽपि नियामकाभावात् अनियमेनानेकप्रकृतिकविध्यन्तप्राप्तिरिति प्राप्ते।

अष्टदोषदुष्टविकल्पापत्तेर्यस्यैव सादृश्यविशेषेण शीघ्रोपस्थितिस्तत एव धर्मातिदेशः। तच्च सादृश्यं शब्दघटितमर्थघटितं चोत्तरत्र प्रपञ्चयिष्यते। अत एव यत्र कथमपि न सादृश्यस्य नियामकता, यथा द्यावापृथिव्यैकादशकपाले, तत्राग्नीषोमीयैन्द्राग्नयोर्विकल्पेनैव प्रकृतित्वम् ॥ ८ ॥ १ ॥ १ ॥*

प्रवृत्तत्वात् ॥ यत्र द्रव्यदेवतादिसन्निपत्योपकारकाङ्गसामग्रीग्राहकप्रकरणरूपं प्रकृतं विधानं, तत्राग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादौ न परस्परं धर्मातिदेशः स्वसन्निधौ यावदाम्नातैरङ्गैरेवेतिकर्तव्यताकाङ्क्षाशान्तेः। सादृश्यस्यापि तादृशस्य नियामकस्याभावाच्च। ज्योतिष्टोमे तथैकत्र प्रयाजानूयाजा इति प्रकृतिप्राप्तप्रयाजाद्यनुवादेन गुणमात्रविधानलिङ्गाद्दीक्षणीयादिषु दार्शिक-

---

* भाष्यकारेणात्र द्वे अधिकरणे लिखिते।

दधिकशतत्रयमहानि पूर्यन्ते। अवशिष्टानि नव। तत्र पुनरेकादशिनीकरणे अतिरेकः समासो वा आपद्येत। अतो ब्राह्मणवता तेषु विधानम्। तद्यदि चोदनालिङ्गातिदेशेन ज्योतिरादिसुत्यास्वपि विहारः प्राप्यते, तत एतल्लिङ्गमुपपद्यते। यदि तु नामातिदेशप्राबल्यं, तदा तद्बलेन ज्योतिरादिसुत्यासु सम्पूर्णाया एकादशिन्या एव प्राप्तेर्विहारदर्शनानुपपत्तिरिति चेत्।

न। एकादशिनीविहारस्यानारभ्याम्नातस्य गवामयने औपदेशिकत्वेन तदंशे नामातिदेशबाधात्। तथाहि। यथाहि प्रभवः पशवः सुत्यानेतामनूचीनामालभेरन्नाग्नेयमेव प्रथमेऽहन्यालभेरन्नथ सारस्वतीं मेषीं द्वितीये सौम्यं बभ्रुं तृतीये शादवमन्ततोऽथ पुनर्ज्योतिरादीनां पर्यावर्त्तेषु आग्नेयमेव प्रथमेऽहनीत्याद्यनारभ्याधीतस्यैकादशिनीविहारस्य प्रकृतौ ज्योतिष्टोमे द्वादशाहे वा ज्योतिराद्यहःसमूहाभावेन निवेशानुपपत्तेस्तृतीयप्रकृतौ गवामयने निवेशः। अन्ततः एकादशेऽहनि। अतश्चौपदेशिकत्वान्नामातिदेशस्तदंशे एव बाध्यत इत्युपपन्नं लिङ्गम्॥ ७॥ ४॥ २॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां
सप्तमाध्यायस्य चतुर्थः पादः॥

सप्तमाध्यायः समाप्तः॥

ऽहनि इत्यनेन श्रौपवसथ्येऽहन्यनुष्ठानेऽवगतेऽनुष्ठानसादेश्यादुपहोमन्यायेन यूपादिग्रहणेऽपि नातिदेशकल्पनाप्रतिबन्ध। एकादशप्रयाजान्यजति, औदव*माघारमाघार्य पशुमालभेत्यादिलिङ्गमप्येवमुपपद्यते।

अन्येषु [illegible] सवनीयादिपशुषु† दैक्षस्यातिदेश। आलभतिचोदनाकत्वपशुद्रव्यकत्वाद्यधिकतरसादृश्यात्। यूपाद्यधिकधर्मलाभाच। अतएव वपया प्रातःसवने चरन्ति, औदुम्बरो यूप इत्यादिलिङ्गम्।

एकादशिनेषु तु सुत्यादिसम्बन्धाधिक्यात् प्रचारविप्रकर्षादिरूपधर्माधिक्याच सवनीयपशुविकारत्वम्। अग्निष्ठाद् द्वे द्वे रशने आदाय द्वाभ्यां द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययतीत्येतदपि दैक्षान्यरूपसवनीयधर्मानुवादकमुपपद्यते। न ह्ययं विधि। अग्निष्ठाधूपादित्यस्याविधेयत्वात्लिङ्गत्वोपपत्ते।

पशुगणेषु तु सौत्येष्वसौत्येषु वा पशुगणान्तर्गतत्वसादृश्याद्रूपधर्माधिक्यलाभाच्चैकादशिनविकारत्वम्। अत एवासौत्येषु प्रचारविप्रकर्षाद्यप्राप्तावपि गणधर्मान्तरप्राप्तिरविरुद्धा। अतएव सौत्रामण्यां प्रतिपशु वैकल्पिके यूपानेकत्वे प्राप्ते तन्निषिध्य यूपैकत्वनियमविधिरेकयूप आलभेतेत्ययमुपपद्यते।

उद्भिदादिषु तु अव्यक्तत्वसादृश्यात् ज्योतिष्टोमविकारत्वम्। अव्यक्तत्व [illegible] स्वाङ्गतयाऽविहितदेवताकत्वम्। ग्रहणाङ्गभूताया ऐन्द्र-

* औदव — इति सो पुस्तके पाठ।

† पशुषु सवनीयादिषु, — इति सो पुस्तके पाठ।

धर्माणां प्रवृत्ततया तन्मध्यवर्त्तिनि सोमेऽपि दार्शिकविध्यन्तप्राप्तिं मन्यमानस्योत्तरम् ।

दीक्षणीयादिषु विद्यमानानामेव प्रयाजादीनां परम्परया सोमसम्बन्धाद्वाजपेयस्य यूप इतिवत्स्रुवेति यद्यनुवादोपपत्तेः, प्रवृत्तस्य हेतोराकाङ्क्षानिवर्त्तकत्वेन तदभावे अबाधकत्वाच्च सोमेऽतिदेशः । अत एव, हसं वै देवानन्नं हत्वा सोममघ्नन् स्रुचौ चाह तस्मात् स्रुचि सोमहविर्नासाद्यते नाज्येनाभिघारयतीति दार्शिकासादनाभावानुवाद उपपद्यते । न ह्ययं पर्युदासविधिः । यदाङ्गिरसस्तेदेव सोमाप्यायतामित्येतद्विध्येकवाक्यत्वेन तदर्थवादस्यास्य स्वातन्त्र्यविधित्वानुपपत्तेः । किं च यदनुपोष्य प्रयायाद्ग्रीवसङ्खेनमसुभिन् लोके नेनीयेरन्, तस्मादुपोष्य प्रयायात् इति उपोषणविधिरप्यतिदेश उपपद्यते । अन्यथाऽतिदेशादेव तत्प्राप्तिसिद्धेर्विधिवैयर्थ्यात् । तस्माच्च कृत्स्नातिदेशः सोमे ॥ ८ ॥ १ ॥ २ ॥

इष्टिषु ॥ सौर्यादिषु इष्टिसमाख्यातेषु इष्टिसमाख्याकृतसामान्यात् निर्वपतिधातुमद्वाक्यसम्बन्धित्वात्तद्धितपदविहितदेवतात्वाच्च दर्शपूर्णमासविकारत्वमेव । अतएव प्रयाजे प्रयाजे इति लिङ्गम् । एवं पशावप्यग्नीषोमीये दैवसंज्ञके, तद्धितपदविहितदेवतात्वादेव । न च तत्र यूपादिस्वकृतरधर्मविधानादेव निराकाङ्क्षत्वादनतिदेशः । तथाप्यावाहनाभावादनङ्गम्यादिस्वकृतरदृष्टार्थधर्मानाम्नानेन साकाङ्क्षत्वात् ।

किं च प्रयाजविधानवाक्यतो निर्धर्मकोद्देशः प्रथमं तावदतिदेशं कल्पयत्येव । ततश्च प्राकृतैर्धर्मैर्निराकाङ्क्षस्य च एव औपवसथ्ये-

नाम्नैवातिदेशः । सर्वस्यापि मुख्यत्वेन तद्‌सम्भवात् । एकत्र मुख्यस्य हि नाम्नोऽपरत्र गौणत्वे नामातिदेशः । न तु सर्वत्र प्रवृत्ति-निमित्तसत्त्वेन मुख्यत्वेऽपि । न चैवं प्रायणीयस्थलेऽप्येकसंज्ञायोगा-दतिदेशापत्तिः । तस्य प्रायण्यसिद्धार्थत्वेन द्वादशाहिकद्वितीयाद्य-धर्मदर्शनेनानतिदेशकत्वात् । अतएव प्रयोजनान्तररहित एवैक-संज्ञायोगोऽतिदेशसाधकः ।

अत्र च, य एव धर्मवांस्तस्याधर्मकेषु प्रवृत्तिः । स पूर्वो वा उत्तरो वा, युक्तिसाम्यात् । प्रायशः पूर्वं एव तादृश इति सूत्रादौ तथोक्तिः । अतएव पूर्वपूर्वस्य क्वचित् किञ्चिदधिकधर्मवत्त्वे उत्तरोत्तरेषु प्रवृत्तिः । अतएव पूर्वस्मिन् साहस्रे सहस्रं विधायो-त्तरस्मिन् यावदस्य सहस्रस्योत्तरा गौः समाहिता भवति तावदस्माल्लोकादसौ लोक इति सहस्रं दक्षिणां दर्शयति । बाधस्त्रे च पूर्वस्मिन् षाण्डं सोमक्रयणं विधायोत्तरस्मिन्नाम्नी स्त्री गौः सोमक्रयणी व्यावृत्ता क्षेपां स्यधितेत्यनेन स्त्रियो विधानं स्यधिता-व्यावृत्त्यनुवादश्च सङ्गच्छते ॥ ८ ॥ १ ॥ ३ ॥*

कर्मणः ॥ एवं प्रकृतिविशेषे निरूपिते कर्त्तनियमकर्तृसमुदा-याभि तेषां न प्रकृतित्वमतस्तेषामनतिदेशः । तथा हि प्रकृतिफलं तावत् प्रकृतेरनतिदेशादेव नातिदिश्यते । न हि प्रकृतिरप्यतिदेष्टु शक्या । विकृतिभावनाया विकृतिकरणेनैव निराकाङ्क्षत्वात् । न च सौर्यादिवाक्ये द्रव्यदेवतामात्रविशिष्टभावनाविधौ कृते सादृश्येन

* भाष्यकारेणात्र दश अधिकरणानि लिखितानि ।

वायव्यादिदेवतायाः प्रसङ्गेन सोमयागोपकारकत्वेऽपि ज्योतिष्टोमाङ्गत्वाभावात् । अतस्तद्व्यक्तत्वेन तदतिदेशे सिद्धे आतिदेशिकग्रहणाद्यङ्गभूतदेवताया वह्निदाद्युपकारकत्वकल्पनेन रूपलाभः सुलभः । अतएव श्येने दीक्षणीयादिमात्रौ दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा चतुर्विंशतिमानं प्रायणीयायामिति दक्षिणादानविधिः सङ्गच्छते ।

एवं गवामयनादिसत्रेषु द्विरात्राद्यहीनेषु च सुत्यागणेषु द्वादशाहविकारत्वम् । अहोरात्रसाध्यकर्मत्वाविपद्वाच्यत्वसामान्यात् । अत्र हि रात्रिशब्दोऽहःशब्दश्चाहोरात्रसाध्यकर्मविशेषपरः । सुत्यागणान्तर्वर्तित्वसादृश्याच्च द्वादशाहविकारत्वम् । अतएव गवामयनादौ द्वाभ्यां लोमावद्यतीत्यादिना द्वादशोपसत्त्वानुवादो विध्यन्तरस्तुत्यर्थः सङ्गच्छते । स्थिते च द्वादशाहविकारत्वे प्रथमोत्तमौ वर्जयित्वा द्वादशाहस्यैव प्रवृत्तिरिति वक्ष्यते ।

तथापि सत्रेषु सत्रात्मकस्याहीनेभ्योऽहीनात्मकस्य द्वादशाहस्यावान्तरसादृश्यादित्यपि वक्ष्यते । सत्रेष्वपि यानि संवत्सरसाध्यानि तथापि तेषु संवत्सरसत्त्वसामान्यादयनशब्दवत्त्वसामान्याच्च संवत्सरनियमादिधर्मलाभाय गवामयनस्य विध्यन्तः । अतएव गवामयनान्तर्गतमहाव्रतिक पञ्चाय उपगायन्तीति धर्मं विध्यन्तरस्तुत्यर्थं संवत्सरसत्रान्तरेऽनुवदति ।

ये साद्यस्का साद्यस्क्रा इत्येव एकसंज्ञायोगिनो यागास्ते सङ्घातरूपनिकाययोगान्निकायिन उच्यन्ते । तेषां च एवैकोधर्मवान् तस्याधर्मकेषु प्रवृत्तिः । एकसंज्ञायोगित्वसादृश्यात् । न चात्र

नियमो निमित्तम्। तस्य तु विकृतिभावनया अनपेक्षितत्वादेवानतिदेशः। न हि निमित्तमङ्गं, येन प्रयाजादिवदतिदेशो भवेत्। प्रमाणाभावात्कारकत्वाभावाच्च न तस्याङ्गत्वम्। एवं सत्यपि यदि प्रकृतिरतिदिश्येत ततो भेदनवद्विकृतावेव निमित्तसन्निपाते नैमित्तिकं विकृत्यङ्गतया प्रकृत्यनुष्ठानं प्रसज्येत। भेदनहोमानुष्ठानवत्। न त्वेतदस्ति। सर्वथा न निमित्तातिदेशो नैमित्तिकस्य वा विकृतेः।

कर्त्ता अधिकारी। तस्यापि प्रकृतावनङ्गत्वात्। अतश्च तद्विशेषणानां स्वर्गकामत्वाहिताग्नित्वादीनामनतिदेशः। अतएव स्वपसौम्यादावाहिताग्नित्वस्यानतिदेशः। राजत्वादेस्तु कर्तृविशेषणत्वस्य च प्रकृतावङ्गत्वाद्विकृतावतिदेश इष्ट एव। न हि तत्प्रकृतावधिकारिविशेषणम्। अधिकारिणः शाब्दविधिबोधितत्वपक्षे* उद्देश्यविशेषणस्य राजत्वादेरविवक्षापत्तेः। वस्तुतस्तु प्रथमापेक्षितत्वेन स्वाराज्यकामपदस्य फलपरत्वादधिकारिपरत्वानुपपत्तेरधिकारी आर्थिकविधिबोध्य एवेति तत्र न शाब्दस्य राजत्वादेरन्वयसम्भव इति राजत्वादेः कर्तृविशेषणत्वमेव। अत एवाहिताग्नित्वादेर्यौगिकत्वार्थिकेऽधिकारिविधौ विशेषणत्वकल्पनम्। याज्ञिकास्तु राजत्वादेरधिकारिविशेषणत्वमङ्गीकृत्यानतिदेशं मन्यन्ते।

समुदायोऽग्नीषोमीयादिप्रधानान्तरसाहित्यम्। तस्य प्रकृतावङ्गत्वेऽपि परप्रयुक्ताग्नीषोमीयादिप्रतियोगिकत्वात्तदभावे विकृतौ नातिदेशः ॥ ८ ॥ १ ॥ ३ ॥

* शाब्दविधिबोध्यत्वपक्षे,— इति सो पुस्तके पाठः।

प्राकृतभावनोपस्थितौ तदुपस्थितिकरणार्थं प्रयाजादिवदतिदेशोपपत्तिरिति वाच्यम् । अनुमितिविषयागमाध्ययनजन्येन सूर्यादिचरुतया यागानुमानाध्यायवाक्यजनकतया शाब्दबोधे विजातीययागस्यापि भावनाविशेषणतया विधेरावश्यकत्वेन करणाकाङ्क्षाऽभावादतिदेशानुपपत्तेः ।

न च तथापि तद्देवतात्वे आग्नेयभेदकल्पने गौरवात्तद्यागे आग्नेयत्वापत्तिः । विभिन्नमन्त्रादिरूपमहत्त्वविधिगुणश्रवणेन वैजात्यावगतिभेदसिद्धेः । अन्यथाऽऽग्नेयेऽपि पौर्णमास्यां सूर्यादीनां प्राप्त्यांपत्तेश्च । अतः सौर्यादीनां भिन्नानामेव करणानां लाभाय तेषामतिदेश इति सिद्धम् । अतश्च तदभावाच्च तत्त्वन्यपक्षातिदेशः । न च तदभावेऽप्यङ्गवद्विकृतेः फलाकाङ्क्षाऽस्ति । अङ्गवदेवमादिश्रुतफलेनैव निराकाङ्क्षत्वात् ।

यद्यपि विश्वजिदादौ न फलश्रवणं, तथापि न तदतिदेशः । स हि अङ्गातिदेशकेन प्रकृतिवच्छब्देन भवेत्, भिन्नेन वा ? नाद्यः । एकेनैव प्रकृतिवद्विकृतिः कार्यमित्यनेन विकृत्युद्देशेनाङ्गविधानफलोद्देशेन विकृतिविधानमिति वैरूप्यापत्तेः । यद्यपि च प्रकृतिवच्छब्दस्यापि विकृतिविधिवाक्यशेषत्वकल्पनया अशब्दविशिष्टविकृतिभावनाविधाने नावैरूप्यमित्याशङ्क्येत । तथाप्येकप्रकृतिवच्छब्दमात्रस्याङ्गांशे विधेयसमर्पकत्वं फलांशे उद्देश्यसमर्पकत्वमिति वैरूप्यापत्तिस्तदवस्थैव । नान्त्यः । स्वविध्युपस्थापितविश्वजिद्याग्येनैव फलकल्पनोपपत्तावतिदेशकल्पने प्रमाणाभावात् । अतो न फलस्यातिदेशः ।

साधनीभूतप्रणयनत्वेनैवाश्रयत्वात्। विकृतौ तदभावेन गोदोहनानुष्ठानानुपपत्तेः। अतएव खादिरत्वादेः संयोगपृथक्त्वन्यायेन क्रत्वर्थस्यापि सत्त्वादतिदेशोपपत्तावपि अग्नीषोमीयापूर्वसाधनीभूतयूपाभावाच्च तेन वीर्यादिफलोत्पत्तिः।

भाष्यकारस्य तु एतादृशविषये फलोत्पत्तिं मन्यमानस्याभिप्रायं न विद्मः। यत्र तु नाश्रयापेक्षा विजातीयप्रस्तरप्रहरणत्वादिनैव चायुरादिफलं प्रति साधनत्वम्। आयुरादिप्रकाशकमन्त्रस्य च स्वप्रकाश्यफलजनकत्वेन प्रहरणाङ्गत्वम्। तत्र भवत्येव विकृतावपि तस्मात् फलोत्पत्तिः॥ ८॥ १॥ ५॥

एककर्मणि॥ सौर्यादिरौषधद्रव्यकत्वैकदेवताकत्वाभ्यां आग्नेयविकार इति वक्ष्यते। आग्नेयवाक्ये आग्नेयद्वयं पौर्णमास्यमावास्याकालकमित्युक्तं कौस्तुभे पौर्णमास्यधिकरणे। सौर्यस्य विनिगमनाविरहादुभयविकार इत्यप्यविवादम्। सौर्ये च य इष्टेति वचनादेकविधः पौर्णमास्यमावास्याकालः। तदाग्नेययोः किं पौर्णमासीकालीनसौर्यप्रयोगे पौर्णमासीकालीनाग्नेयस्यामावास्याकालीनसौर्यप्रयोगे चामावास्याकालीनस्य व्यवस्थितं प्रकृतित्वमुताव्यवस्थितविकल्पेनेतिचिन्तायाम्।

तत्तत्कालत्वरूपासाधारणसादृश्यात् व्यवस्थितम्। एवं च चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्राऽमावास्यामिति विहिततत्तदङ्ग मन्त्रयोरपि व्यवस्था। अत्र हि पौर्णमास्यादिसंज्ञकप्रधानसम्बन्धिद्रव्यैरेव पौर्णमास्यादिपदेन लक्षयित्वा तदुद्देशेन मन्त्रमात्रविधिः। अभिमर्शनं आग्नेयानि हवींष्यभिमृशतीति वाक्यान्तरप्राप्तं चाश्रयत्वे-

गुणकामेषु । ये प्रकृतौ गोदोहनादिगुणजन्याः कामास्तेषाम-नङ्गत्वादनुपकारकत्वाच्च यद्यपि नातिदेशस्तथापि तज्जनकीभूत-गोदोहनादिगुणानां प्रणयनोपकारकत्वेनातिदेशे विकृतावपि काम-नायां सत्यां फलोत्पत्तौ न किं चिद्बाधकम् । न चाङ्गस्यैव विकृतावतिदेष्टव्यमिति नियमे प्रमाणमस्ति । करणोपकार-साकाङ्क्षाया विकृतिभावनायास्तज्जनकापेक्षायामुपकारकमात्रस्यैवाति-देशात् । न हि विकृतिभावनाऽङ्गमपेक्षते । प्रमाणाभावात् । अतः खादिरत्वादिवदेव गोदोहनादीनामप्यतिदेशः फलोत्पत्ति-श्चेति प्राप्ते ।

सत्यम् । विकृतिभावनोपकारकमेवापेक्षते, तथापि सादृश्यात् प्रकृतिचोदना तदर्थं एव वा प्रथमत उपतिष्ठते । पश्चाच्च तदन्वित-मुपकारकम् । तदच चोदनार्थभूतायां प्रकृतिभावनायां यदन्वितं, तदतिदिश्यते । अनन्वितस्योपस्थित्यभावेनातिदेशायोगात् । अन्वितं चापशुकामप्रयोगे चमसविशिष्टं प्रणयनम् । पशुकामप्रयोगे प्रण-यनमात्रम् । तत्प्रयोगे प्रणयनस्य परप्रयुक्तगोदोहनोपजीवित्वेन द्रव्यानाक्षेपकत्वेन स्वरूपेणैव प्रधानभावनान्वयात् । अङ्गस्यैव प्रधान-भावनायामन्वेतीत्यभिप्रायेण तस्यैवातिदेश इति प्रवादः । अतश्च फलार्थगुणानामनतिदेशः ।

न चातिदेशाभावेऽप्याश्रयस्य प्रणयनस्य विकृतावपि सत्त्वात्तत्रैव कामनायां सत्यां गोदोहनानुष्ठानोपपत्तिः । प्रकरणपाठवैयर्थ्या-पत्तेः । गुणफलसम्बन्धविधेराश्रयप्रयोजकत्वशक्तिकल्पनागौरवप्रस-ङ्गाच्च । प्रणयनमात्रस्याश्रयस्याश्रयत्वानुपपत्तेरवश्यं दर्शपूर्णमासापूर्व-

सम्बन्धेन प्रत्येकाधाराणामेव तदधिष्ठानतया आग्नेयेऽप्यव्याप्ते । पर्याप्तिसम्बन्धावच्छिन्नाधिष्ठानत्वविवक्षायामग्नीषोमीयेऽप्यतिव्याप्तेश्च । सम्बन्धद्वयातिरेकेण पदमात्राधिष्ठानकत्वस्य वक्तुमशक्यत्वाच्च । तथापि देवतात्वाश्रयप्रतिपादकपदैकत्वमेवैकदेवताकत्वम् । एकत्वमेकसंख्याकत्वम् ।

अर्थस्य देवतात्वपक्षे तु देवतात्वाधिष्ठानैकत्वमेव तत् । अस्ति चैतदाग्नेये सौर्ये च । प्रथमातिक्रमे कारणाभावेनैकवचनान्तेनैव तद्धितविधानात् । अग्निमेव स्वेन भागधेयेन समर्द्धयति, अमुमेवादित्यं स्वेन भागधेयेनोपधावतीत्याद्यर्थवादाच्च । अग्निर्मूर्धा, उदुत्यं जातवेदसमिति मन्त्रवर्णाच्च । अग्नीषोमीयैन्द्राग्नयोस्तु तदभावादनेकदेवताकत्वम् । अतएव मारुतं सप्तकपालमित्यादौ, मरुतो यस्य हि क्षये इति मन्त्रवर्णादनेकदेवत्यत्वावगतेः सत्यपि पदैक्ये नाऽऽग्नेयविकारत्वम् । अग्नये धामवते चरुमित्यादौ च सत्यपि पदभेदे प्रमाणान्तरेणार्थैकत्वावगमादाग्नेयविकारत्वम् । अनेकदेवताकेषु तु अग्नीषोमीयैन्द्राग्नयो । तत्राप्यग्नीषोमदेवत्यस्य सोमपदघटितानेकदेवत्यस्य चतुरवरानेकदेवत्यस्य वाऽग्नीषोमीयविकारत्वमेव । इन्द्राग्नीदेवत्यस्येन्द्रपदघटितानेकदेवत्यस्य त्र्यवरानेकदेवत्यस्य चैन्द्राग्नविकारत्वमेवेति व्यवस्था । तथैन्द्राग्ने शाखाभेदेनैकादशकपालत्वद्वादशकपालत्वयोर्विकल्पाद् द्वादशकपालायां तदधिकसंख्याककपालायां वा विकृतावैन्द्राग्नविकारत्वमेव । तन्न्यूनसंख्याककपालायामष्टाकपालभिन्नायां तु विकल्प एव व्यवस्थापकसामान्याभावे । अष्टाकपालकायां तु सत्यप्यनेकदेवताकत्वे द्रव्यघटितसादृश्यस्य बलवत्त्वादाग्नेयविकारत्वमेवेत्या-

नानूद्यते इति साधितं तृतीये । अतश्च मन्त्रयोरपि व्यवस्थोपपत्तेः प्रकृतित्वव्यवस्थेति भाष्ये ।

भावनाया विजातीययागत्वावच्छिन्नस्य वाऽनुग्राहकरूपेतिकर्तव्यताकाङ्क्षा न तु प्रयोगविशेषस्य । अतश्चैकजातीयस्य सौर्यस्य वैकल्पिकोभयकाम्यत्वादैकल्पिकोभयविकारत्वावगतेरव्यवस्थयैव तत्तदाग्नेयप्रकृतिकत्वं मन्त्राणाञ्चाव्यवस्थेति सिद्धम् ।

यत्तु पार्थसारथिना वार्त्तिककारस्याद्याग्नेयैकत्वमभ्युपगम्य मन्त्रयोर्दृष्टार्थत्वेन विकल्पादेकस्मिन्नाग्नेये प्रधानान्तरपाठित्वात्तु रोधेन प्रकृतौ व्यवस्थायामपि विकृतौ तदभावेन व्यवस्थाकारणाभावाद् अव्यवस्थितविकल्पो मन्त्रयोरिति सिद्धान्तितम् । तन्मन्त्रविकल्पचिन्तापादादसङ्गततया ऽतिदेशविचाराभावेनाध्यायसङ्गत्यभावापत्तेराग्नेयभेदस्य च स्थापितत्वेनैक्यानुपपत्तेरुपेक्षितम् ॥ ८ ॥ १ ॥ ६ ॥

लिङ्ग ॥ इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरित्युक्तम् । तथापि सौर्यादिषु औषधद्रव्यकत्वविशिष्टैकदेवताकत्वरूपविशेषसादृश्यादाग्नेयविकारत्वम् । अत्र च सान्नाय्य*स्यैकदेवताकत्वेऽपि औषधद्रव्यकत्वाभावादाद्य विशेषणम् । अग्नीषोमीयादेरौषधद्रव्यकत्वेऽप्यनेकदेवताकत्वादपरम् ।

अथ यद्यपि एकदेवताकत्वं नाम नैकदेवतात्वकत्वम् । अग्नीषोमीयादावपि व्यासज्यवृत्तेर्देवतात्वस्यैकत्वेनातिप्रसङ्गात् । नाप्येकदेवतात्वाधिष्ठानकत्वम् । देवतात्वस्य मन्त्रनिष्ठत्वेन देवतात्वीयरूप-

---

* सान्नाय,— इति सो॰ पुस्तके पाठः ।

एव च धर्मानुग्रहोप्याङ्गत्वेन सङ्गच्छते। इतरथा पुरोडाशादौ शाखाच्छेदादीनां बाधापत्ते। एवमन्यत्राप्यन्तरङ्गत्वादिना सर्वत्र सादृश्ययोर्बलाबलं द्रष्टव्यम्। यत्र तु न्यायेनास्यादृश्य बलाबलं, कल्पसूत्रयाज्ञिकाचाराद्यान्यादृशास्तत्र तन्मूलभूतश्रुतिरूपवचनातिदेशेन न्यायकस्यातिदेशस्य बाध इत्यपि द्रष्टव्यम्। अतएव सौर्य्यचरित्यादौ शब्दार्थगतसमानत्वरूपसादृश्यस्य भिन्नैकदेवताकत्वरूपसादृश्यापेक्षया अन्तरङ्गत्वेऽपि नाग्नीषोमीयविकारत्वमपि त्वाग्नेयविकारत्वमेव। एवमाग्नेयएकादशकपालइत्यादौ देवतासामान्यस्य कपालसङ्ख्यासादृश्याद्यपेक्षया अन्तरङ्गत्वेऽपि नाग्नेयविकारत्वमपि त्वग्नीषोमीयादिविकारत्वमेव। केचित्त्वेतादृशविषये कपालैकादशत्वादीनां द्रव्यनिष्ठसाधनतावच्छेदककोटिप्रविष्टत्वात् द्रव्यसादृश्यघटकत्वमेवेत्यग्नीषोमीयविकारत्वं समर्थयन्ते ॥ ८ ॥ १ ॥ ८ ॥

चिरव्य ॥ द्रव्यनिष्ठसादृश्ययो परस्परविरोधे तु देवतासादृश्योपष्टब्धस्यापि द्रव्यसादृश्यस्य यौगिकलिङ्गोपष्टब्धद्रव्यसादृश्यापेक्षया दुर्बलत्वम्। यथा प्राजापत्य घृते चरु निर्वपेच्छतकृष्णलमायुष्काम इत्यत्र कृष्णलमान्दीभिमत्त्वरूपतेजस्वित्वसादृश्यस्य प्रजापतिदेवताकत्वसादृश्योपष्टब्धस्यापि कठिनत्वापरपर्य्यायविशदत्वसादृश्यापेक्षया दुर्बलत्वम्। तेन नाय प्राजापत्याज्यविकारोऽपि तु कठिनत्वसादृश्यादाग्नेयविकार एव। चरुशब्दप्रयोगात्। घृते श्रपयतीति श्रपणविधानाच्च। यद्यपि नाय विकृत्यभावेन मुख्यचरु। तथापि चरौ चरुशब्दानुवादचरुधर्मयोगादुपपद्यत इति सौम्यधर्मप्रापक भवति सिद्धम्।

सूत्रम् । आज्यद्रव्यकायामुपांशुयागस्य । दधिपयोरूपसान्नाय्यद्रव्यकायां तत्तद्द्रव्यकस्येत्यादिविशेषतः प्रकृतेन बोध्यम् ॥ ८ ॥ १ ॥ ७ ॥

विप्रतिपत्तौ ॥ एवं सादृश्यनियामकत्वे निरूपितेऽधुना तयोर्विरोधे बलाबलञ्चिन्त्यते । तत्रापि द्रव्यघटितदेवताघटितसादृश्ययोर्येव विप्रतिपत्तिर्यथा । ऐन्द्रः पुरोडाशः आग्नेय पय इत्यादौ । तत्र कस्य बलवत्त्वमिति चिन्तायाम् । देवतायाः प्रथमोपस्थितत्वेन मुख्यत्वात् प्रधानत्वाच्च तत्सादृश्यमेव बलवत् । इन्द्र एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयतीत्याद्यर्थवादवशाद्धि यागो देवताराधनार्थः । आराधिता च सा फलं ददातीति तस्याः प्रधानत्वम् । देवतासादृश्यञ्च यद्यपि निरूक्तैकदेवताकत्वरूपं द्रव्यसादृश्याविरोधि । तथापि समानशब्दार्थकत्वरूप तद्विरोधीति तस्य बलवत्त्वमितिप्राप्ते ।

प्रथमोपस्थितत्वेऽपि कर्मविध्युत्तरकालमतिदेशकल्पनात्तदा च द्रव्यस्यैव प्रत्यासन्नत्वेन शीघ्रोपस्थितेस्तत्सादृश्यस्यैव बलवत्त्वम् । यागोऽपि दृष्टव्यवहारात् देवतोद्देशविशिष्टद्रव्यत्यागरूपः । तत्र द्रव्यस्य प्रधानभूते त्यागे विशेषणत्वं, देवतायास्तु विशेषणीभूते उद्देशे । अतो द्रव्यं यागप्रत्यासन्नम् । यद्यपि च देवताप्रसादस्यैवार्थवादवशाद्यागस्य फलसाधनत्वे द्वारत्वं कल्प्यते । तथापि देवतायाः शाब्दबोधे यागं प्रति द्रव्यं प्रति वा प्राधान्ये प्रमाणाभावात् प्रत्युत द्रव्यस्यैव पार्ष्टिकान्वये विशेष्यत्वेन प्राधान्यावगतेर्न देवतासादृश्यस्य बलवत्त्वाशङ्का । वस्तुतस्तु न देवताप्रसादस्य द्वारत्वमिति जैमिनिमतं वक्ष्यत एव । अतोऽन्तरङ्गत्वप्रादेव द्रव्यसादृश्यस्य बलवत्त्वम् ।

मधूदकम् ॥ चित्रिण्यावनेके यागाः इत्युक्तं चित्राधिकरणे कौस्तुभे। तत्र दधिघृतपयोधानामनुपशुयागानामिष्टिरेव प्रकृतिः। मधूदकयोस्तु वर्णसाम्यादुपांशुयाजविकारत्वम्। प्रकृतोदाहरणे देवतासामान्यस्याधिकत्वाच्च। न तु स्वाभाविकद्रवत्वसादृश्यादनयो- र्याज्यविकारत्वम्। सत्यपि सादृश्यद्वये लिङ्गविशेषस्य निर्णायकत्वा- भावे बहुतराज्यधर्मानुग्रहस्यैव नियामकत्वात्। नैमित्तिकद्रवत्व- स्याज्येऽपि सत्त्वाच्च। अतश्च सर्वयागानामेकफलकत्वेनैकतन्त्रत्वाद्भूय- स्त्वमनुपहाय चयाणां मधुघृतोदकानामुपांशुयाजधर्मास्तत्रानुष्ठीय- मानविरुद्धधर्मविषये कार्याः। आवृत्त्यानुष्ठीयमानद्रव्यसंस्कारविषये तु तत्तद्यागीयधर्मास्तत्तद्द्रव्येषु कार्याः ॥ ८ ॥ १ ॥ ८ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां

अष्टमस्य प्रथमः पादः ॥

न चाग्नेये चरोरभावादाग्नेयधर्माणां चरुगतत्वाभावेन कथं चरुशब्दस्तन्नौषधधर्मप्रापक इति वाच्यम्। सौर्यचरोराग्नेयविकारत्वे-नाग्नेयधर्माणामपि चरुगतत्वाच्चरुशब्दस्य तत्प्रापकत्वसम्भवात्। एवं श्रपणवाक्येऽपि यद्यपि न श्रपणानुवादेन घृतविधिः। श्रपण-स्याग्नेयविकारत्वेऽपि विक्लित्तिरूपप्रयोजनाभावेन बाधात्। घृत-स्योत्पत्तिवाक्ये प्राप्तत्वाच्च। तथाप्यग्निसंयोगमात्ररूपं श्रपणं प्रत्या उपयया वा प्रतिप्रसवविधया विधीयते। तत्र घृतविशिष्टं शुद्धं वेत्यन्यदेतत्। न विशिष्टविधित्वमित्यत्र नियामकाभावात् उत्प-त्तिवाक्ये घृतस्य परम्परासम्बन्धेन यागान्वये तस्य विलम्बोपस्थिति-कत्वादप्येव विशिष्टविधिरिति न युक्तमुत्पश्याम।

यद्यपि च श्रपणस्योपांशुयाजविकारत्वेऽपि प्रतिप्रसवविधित्वं युज्यत एव। आज्येऽप्यग्निसंयोगसद्भावात्। तथापि द्रव्यान्तरसंयोग-स्यात्यन्ताप्राप्तस्योपांशुयाजविकारत्वे विधेयत्वापत्तेराग्नेयविकारत्वे द्रव्यान्तरस्य जलस्य प्राप्तौ तत्र घृतविधाने लाघवमिति विकृत्योप-पत्तिः। एतदस्वरसेनैव वा भाष्यकारेण तस्मिंश्च श्रपणश्रुतेरिति सूत्रस्य एतद्वाक्यगतपदादृष्टादुपांशुयाजविकारत्वमाशङ्क्य तत्राधि-करणत्वश्रुतेः प्रदेयत्वाभावादिति व्याख्यानान्तरं कृतम्। सर्वथा श्रौतलिङ्गोपष्टम्भस्य सादृश्यस्य बलवत्त्वाद्धिरण्ययाग औषधविकार एव। एव च यत्र हिरण्ययागान्तरे लिङ्गाभावस्तत्र देवतासादृश्या-भावेऽपि आज्यधर्माणां भूयसामनुपपत्तेरसित्वसादृश्येनाज्य-विकारत्वमेव। चरुशब्दस्य वा स्थालीपुलाकन्यायेन गमकत्वादौषध-विकारत्वम्। इत्यष्टिविकारत्व वा ॥ ८ ॥ १ ॥ ८ ॥

पशुपुरोडाशा इमे पशव इति पशुषु पुरोडाशशब्दानुवादस्तु-मंकल्पे सङ्गच्छते ।

यद्यपि चैतेषां पशुयागान्तराणां वार्त्तिककारमते पशुपुरो-डाशकार्यापन्नत्वस्य इममे वक्ष्यमाणत्वात् सामापत्त्यैव पुरोडाश-शब्दोपपत्तिस्तथापि सामापत्त्यापि तावत् पशुपुरोडाशधर्मप्राप्ति-र्लिङ्गोपपत्तिः । वस्तुतस्तु । अङ्गापेक्षायामङ्गघटितसादृश्यस्यैव पुरः-स्फूर्त्तिकत्वेन सामापत्त्यतिदेशापेक्षया चोदनालिङ्गातिदेशस्य बल-वत्त्वादौषधद्रव्यकत्वेन सर्वप्रकृतिभूतदर्शपूर्णमासविकारत्वमेव । अतएव,

"एतामसमाप्ते कुर्यादिष्टिं वैश्वानरीं बुधः" ।

इत्यादौ चैधात्व्यादौ चर्णोयेत्यादौ च न ज्योतिष्टोमादिधर्माः । यदा तु द्रागमिकसूत्रभाष्यकाररीत्या प्राकृतपशुपुरोडाशयाग एव घृतादिद्रव्यान्तरमात्रविधिरित्याश्रीयते । तदा सोमादिशब्दस्य नामातिदिशनिराकरणमात्रार्थमिदमधिकरणम् । न तु चौषध-द्रव्यकत्वलिङ्गकातिदेशसिद्ध्यर्थम् । एतदभावेऽपि पशुपुरोडाशस्य दर्शपूर्णमासविकारत्वसिद्धेरिति ध्येयम् ॥ ८ ॥ २ ॥ १ ॥

पशुः ॥ दैव. पशुदर्शपूर्णमासविकार इत्युक्तम् । तथापि कि-मग्नीषोमीयपुरोडाशविकार उत साद्याय्यविकार इति चिन्तायां, घनत्वसादृश्यात् पुरोडाशविकारः । न च पशुप्रभवत्वसादृश्यस्य द्रव्यगतस्य साद्याय्ये सत्त्वाद्विनिगमकाभाव. । घनत्वस्य लिङ्गोपष्टब्ध-त्वात् । अग्नाग्नीषधाभ्योऽग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामीति पशुं प्रोक्षतीति हि प्रोक्षणं पुरोडाशधर्मः । तथा पशुं पर्यग्नि करोतीति पर्यग्निकरणं पुरोडाशविकारत्वे लिङ्गम् । न च पशुप्रभवत्वसादृश्य-

## अथ द्वितीयः पादः ।

वाजिने ॥ वाजिनयागस्यामिक्षाऽनुनिष्पन्नवाजिनप्रतिपत्तिकर्मणोऽप्यङ्गापेक्षायां किं सौमिकातिदेश उत दार्शिक इति चिन्त्यते। सौत्रामण्यङ्गदेवतासंस्कारार्थसुराग्रहेषु चैवमेव चिन्ता। तत्र सोमो-वै वाजिन सुरा सोम इत्युक्ते सोमशब्दः सोमधर्मातिदेशार्थः। न चोपमयोर्गुणो भवतीतिवदर्थवादत्वादनतिदेशकत्वम्। तद्वदिह लिङ्गसादृश्याभावेन नामातिदेशावश्यकत्वात्।

अतएवानुवषट्कारमन्त्री समुपहूय भक्षणमुभयत्र दर्शयति। सुराया सीसेन क्रयणं, कुवलसक्तुभिः श्रयणं, एका पुरोरुक्, एका याज्या, उपयामेतिमन्त्रो गृहीतासादनं, सोमे वाग्न्युपनहनं दर्शयति। ग्रहशब्दश्चैव सति सुतरामुपपद्यत इति प्राप्ते।

आर्थवादिकस्य सोमशब्दस्य अदृष्टफलवत्त्वरूपसिद्धसादृश्येनोपपत्तौ वाक्यभेदापादकविधिपरत्वे प्रमाणाभावात्। ग्रहशब्दस्य प्रायणीयवद्ग्रहणकौपदेशिकत्वेनैवोपपत्तेर्लिङ्गाभासः वाचनिकतयाप्युपपत्त्यावप्रतिपद्धेन चोदनालिङ्गातिदेशेन दार्शिकविधन्त एव। तथापि वाजिने पशुप्रभवत्वद्रव्यत्व*सादृश्यात्पयोयागविधन्त। सुरायां पौरोडाशिक औषधद्रव्यकत्वात्। अतएव मध्येव दीक्षणीयामाप्राप्तीति दीक्षणीयाभिवचनं सङ्गच्छते। इतरथा हि तस्या प्रत्यक्षेण प्राप्तिवचनेन स्मृतिरप्यङ्गमेव स्यात्। तथा नैतेषां पुरोडाशविधन्ते,

* द्रव्य—इति नास्ति ग-पुस्तके।

वादम्। तत्रापि तु विशेषचिन्तायां, तप्ते पयसीत्यत्र द्वितीयानिर्दिष्टदध्न एव सा वैश्वदेवीति तच्छब्देन परामर्शो न तु सप्तम्यन्तपदनिर्दिष्टस्य पयसः। गुणभूतत्वात्। न चानयतेर्द्विकर्मकत्वात्पयसोऽप्यप्रधानत्वेन दध्यपेक्षयापि प्राधान्यावगतिः। द्विकर्मकधातुस्थले अधिकरणत्वादिकारकान्तराविवक्षायां कर्मकारकसम्बन्धमात्रविवक्षायां च सम्बन्धसामान्ये षष्ठीप्राप्तौ अकथितं चेति सूत्रेण कर्मसंज्ञाकरणात्। द्वितीयाविधानावगतावपि प्राधान्ये प्रमाणाभावात्। प्रकृते सप्तमीश्रवणेनाधिकरणत्वविवक्षावगतेर्द्वितीयकर्मत्वसम्भवाभावाच्च। अतश्च दधिरूपत्वादामिक्षायाद्दधियागविकारत्वमेवेति लौकिकस्य पयसोऽधिकरणत्वमिति प्राप्ते।

मधुररसभूयस्त्वाद्दध्यभावेऽपि च अन्यान्तरेणामिक्षासम्पत्तेरन्वयव्यतिरेकाभ्यां जुषन्तां युज्यं पय इति मन्त्रवर्णाच्च पयस एवावस्थाविशेषापन्नस्यामिक्षापदवाच्यत्वावगतेस्तदनुरोधेन तच्छब्दस्यापि सप्तम्यन्तपदनिर्दिष्टपय परामर्शित्वस्यैवावगतेः पय एवामिक्षा। अतश्च तद्यागविकारत्वमेव। एवं च तप्ते पयसीत्यत्र सप्तम्या प्राधान्यलक्षणा, द्वितीयया च सक्तुन्यायेन करणत्वलक्षणेत्यपि ध्येयम्।

अवस्थाविशेषरूपामिक्षा च न तापं विनेति तस्यापि विवक्षा। यदि तु तापं विनाप्यामिक्षा लोके सम्भाव्यते, तदा न सप्तम्या प्राधान्यलक्षणापि। तप्तपयोधिकरणत्वविशिष्टदध्यानयनस्यैवावस्थाविशेषविशिष्टपयोरूपामिक्षोद्देशेन विधेयत्वात्। उद्देश्यवाचकपदकल्पनया [illegible] वाक्यार्थपूर्त्तिः। तस्यैव च तच्छब्देन परामर्शात् सुतरां लिङ्गोपपत्तिः। अधिकरणत्वस्यैव च दध्यानयन प्रत्यङ्गत्वेऽपि पय-

स्यापि उखादर्शनरूपलिङ्गोपष्टम्भत्वाच्चियामकाभावः । तथात्वेऽपि देवतासादृश्यस्यैवाग्नीषोमीयविकारत्वे गमकत्वादिति प्राप्ते ।

देवतासामान्योपष्टम्भस्यापि द्रव्यसादृश्यस्यान्यथासिद्धलिङ्गोपष्ट-म्भेनानन्यथासिद्धलिङ्गोपष्टम्भद्रव्यसादृश्यापेक्षया दौर्बल्यात् सान्ना-य्यविकार एव पशुः । तथा हि माप प्रोक्षणानुवादेन मन्त्रो विधीयते । येनेदं लिङ्गं भवेत् । तस्य तु लिङ्गादेव प्राप्तत्वात् प्रोक्षणभावनैवापूर्वा विधीयत इति विपरीतसाधकत्वम् । पर्य-ग्निकरणं तु प्रदेयपुरोडाशधर्मत्वेन प्रकृतौ क्लृप्तम् । नेह प्रदेय-प्रकृतिभूतपशुसंस्कारकतया दृश्यमानं प्राकृतम् । अपि त्वपूर्वमेवेति न तदपि लिङ्गम् । अतो घनत्वसादृश्यं न लिङ्गोपष्टम्भम् । यदि पशुरुखायां पच्यमानः स्कन्देदिति उखादर्शनं तु अनूद्यमानत्वा-दनन्यथासिद्धं लिङ्गम् । अत तदुपष्टम्भं पशुप्रभवत्वमेव बलीय ॥ ८ ॥ १ ॥ २ ॥

दध्नः ॥ तथापि दधिविकारः पयोविकारो वेति चिन्तायां, घनत्वसादृश्याद्दधिविकारत्वमेव । न च साक्षात् पशुप्रभवत्वसादृश्येन पयोविकारत्वशङ्का । कारणत्वस्य व्याप्तिरूपतया अतीन्द्रियत्वादानु-मानिकत्वेन प्रत्यक्षगम्यघनत्वापेक्षया दौर्बल्यादितिप्राप्ते । चदध्या-दीनां पयसैकदिनान्तरितानां विकारदर्शनादेकादिनस्थायित्व-सादृश्यं स्वतोगतिमत्त्वसादृश्यं च प्रत्यक्षमेवेति तत्सहकृतेन साक्षात् पशुप्रभवत्वेनैकस्य घनत्वस्यैव बाधात्पयोविकारत्वमेव ॥ ८ ॥ २ ॥ ३ ॥

आमिक्षा ॥ आमिक्षा तावत्तापान्तरमपि तु दधिपयोऽन्यतर-रूपमिति साधितं चतुर्थे । अतश्च तदन्यतरविकार इति तावद्वि-

च न सत्रत्वम् । यदन्यतरतोऽतिरात्रस्तेनाहीन इति श्रुत्या अन्यतरतोऽतिरात्रत्वस्याहीनलक्षणकरणादर्थाच्चोभयतोऽतिरात्रत्वस्य सत्रलक्षणत्वेन पञ्चदशरात्रादौ अहीनलक्षणसत्त्वेन तदनुपपत्तेः । अतएव न सत्राहीनयोर्भवदुक्तलक्षणं, न चैकादशरात्रान्तमेव शुद्धाहीनत्वम् अतश्च पञ्चदशरात्रादौ अहीनात्मकद्वादशाहस्यैव प्रवृत्तिरिति प्राप्ते

अहीनत्वाभावेऽपि प्राचुर्येणाहीनेऽन्यतरतोऽतिरात्रत्वादस्मिन्नपि पञ्चदशरात्रेऽन्यतरतोऽतिरात्रत्वेनाहीनत्वोपचारस्य स्तुत्यर्थत्वेनोपपत्तेरभियुक्तप्रसिद्ध्या निरुक्तलक्षणकस्यैव सत्रत्वादेरङ्गीकारात् पञ्चदशरात्रकुण्डपायिनामयनयोरपि सत्रत्वमेव। अतएव गृहपतिर्गृहपतिरिति गृहपतिशब्दः सदैकान्तवृत्तिः कुण्डपायिनामयने । अतः सत्रात्मकद्वादशाहप्रकृतिकत्वमेवानयोः ॥ ८ ॥ २ ॥ ६ ॥

इति श्रीखण्डदेवविरचितायां
भाट्टदीपिकायामष्टमस्य द्वितीयः ।

सौनाङ्गत्वं कृत्स्नप्रयोजनत्वादिति ध्येयम्। अतः आमिक्षाया अवस्थाविशेषविशिष्टपयोरूपत्वात्पयोयागविकारत्वम्। तेन पयस्येव प्राकृतदोहधर्माः, दधि तु लौकिकमेव संस्कार्यम् ॥ २ ॥ ८ ॥ ३ ॥

सत्त्रमहीनश्च ॥ अहर्गणेषु द्वादशाहस्य प्रवृत्तिरित्युक्तम्। द्वादशाहे चास्ति सत्त्रत्वमहीनत्वं चेति धर्मद्वयम्। तत्रासीरन्, उपेयुरित्यादिचोदनाचोदिते सत्त्रत्वमखण्डोपाधिः। अनियतस्वामिके यजतिचोदनाचोदिते चाहीनत्वमखण्डोपाधिर्वृद्धव्यवहारात्। तत्तद्धर्मकत्वे निमित्ते च तत्र धर्मविशेषा विहिताः। तथान्येऽपि सत्त्रसंज्ञका अहीनसंज्ञकाश्चाहर्गणा अधर्मकाः समाम्नाताः। तत्र द्विविधेष्वपि द्वादशाहस्यैकस्य धर्मप्रवृत्तिः। अतोऽविरुद्धाः समुच्चीयन्ते विरुद्धाश्च विकल्प्यन्ते। न तत्र द्वादशाहे भेदोऽस्ति। येनावान्तरसामान्यात्सत्त्रद्वादशाहवदित्यतिदेशवाक्यं कल्प्येत। भेदे प्रमाणाभावात्तु द्वादशाहवदित्येवातिदेशवाक्यकल्पनेऽव्यवस्थैव युक्तेत्येवं प्राप्ते।

यद्यपि द्वादशाहत्वेनैवातिदेशे सत्त्रत्वरूपनिमित्ताभावात्तन्नैमित्तिकधर्माणामहीने, अहीनत्वरूपनिमित्ताभावाच्च तन्नैमित्तिकाधर्माश्च सत्त्रे प्रवर्तन्ते। भेदाभाव इव सोमसाध्ययागादाविति फलतो व्यवस्थितं प्रकृतित्वम्। सत्त्रात्मकेष्वहर्गणेषु सत्त्रात्मकस्य द्वादशाहस्याहीनात्मकेष्वहीनात्मकस्येति। द्विरात्रादारभ्यैकादशरात्रान्तमहीनाः। द्वादशाह उभयात्मा। त्रयोदशरात्रादारभ्य सर्वे सत्त्रभूता एव। तथैवोक्तलक्षणसत्त्वात्। वृद्धव्यवहाराच्च। अतस्तेषु तेषु तत्तद्रूपस्य द्वादशाहस्य प्रवृत्तिः ॥ ८ ॥ २ ॥ ४ ॥

अन्यतरतोऽतिरात्रत्वात् ॥ पञ्चदशरात्रस्य कुण्डपायिनामयनस्य

संस्थाकत्वेनाग्निष्टोममुखत्वस्य प्राप्तत्वात् । न चाद्येष्वेव चतुर्षु त्रिवृत्त्वविधौ प्रमाणाभावेनाग्निष्टोममुखत्वस्यापि विधिरावश्यक इति वाच्यम् । प्रथमातिक्रमे कारणाभावात्त्रयाणामन्येषां विध्यन्तरेण स्तोमविधानाच्चाद्येष्वेव चतुर्षु त्रिवृत्त्वप्राप्तेरिति भाष्यकाराभिप्रायः ।

वस्तुतस्तु चतुःसंख्याकोद्देशेन त्रिवृत्त्वविधौ योग्यतया सप्तस्वप्य-हःसु चाद्येषु चतुर्षु स्तोमेषु त्रिवृत्त्वविध्यापत्तेरुत्तमानोद्देशेन तद्विधौ च सर्वत्र तदापत्तेः चतुःसंख्याविशिष्टोद्देशे च वाक्यभेदापत्तेरयमेव संख्याभिन्नत्रिवृत्त्वविशिष्टकर्मोत्पत्तिविधिः । त्रयाणां चान्येषां विध्यन्तरेण विधिः ।

सर्वेषां च एकवाक्येन समन्वयमाचकरणम् । एवं चोत्पत्तिवाक्ये चतुर्णाङ्गत्वप्रतीतेस्तस्योत्पत्तिगतत्ववत् त्रिवृत्त्वस्याप्युत्पत्तिगतत्वेन साम्येऽपि त्रिवृत्त्वस्याङ्गभूतस्तोमवृत्तित्वात् प्रधानवृत्तिगणनापेक्षया दुर्बलत्वेन गणनसादृश्येनैवाद्यानां चतुर्णामतिदेशः प्रबाध्यः । सर्वथा नाद्यस्यैव चतुर्ष्वतिदेशः । एवं चाग्निष्टोममुखानीत्यनुवादोपपत्तिः । इतरेषां त्रयाणामन्यसंस्थाकत्वात् । इतरथाऽग्निष्टोमानीत्येवावक्ष्यत् । सर्वेष्वग्निष्टोमसंस्थाकत्वस्यैवातिदेशेन प्राप्तेः ॥ ८ ॥ २ ॥ ९ ॥

सत्राभ्यासे ॥ षट्त्रिंशद्रात्रे षडहा भवन्ति चत्वारो भवन्तीति श्रुतम् । द्वादशाहान्तर्गतद्व्यहे चाद्य एकः षडहः प्रथमकः श्रुतः । तदिह तस्यैव वारचतुष्टयमत्र प्रवृत्तिरुत दशाहस्याप्यस्येति चिन्तायाम् । न तावदत्र षडहशब्दो नामातिदेशकः । तस्य संख्याविशिष्टाहर्वाचकस्य गुणविशिष्टकर्मविधायित्वेन नामत्वाभावात् । सत्येऽपि वा यौगिकत्वेनोक्तविधायित्वाच्चतेर्नामातिदेशकत्वायोगाच्च । नापि

# अथ तृतीयः पादः ।



हविर्गणे ॥ आग्नावैष्णवमेकादशकपालं सारस्वतं चरुं बार्हस्पत्यं चरुं इत्यादिहविर्गणे क्रमसामान्यात् प्रथमतृतीययोः आग्नावैष्णव-बार्हस्पत्ययोराग्नेयाग्नीषोमीयविकारत्वमिति प्राप्ते । क्रमसामान्यस्य प्राग्दृष्टान्यापेक्षत्वेन विलम्बोपस्थितिकत्वादुत्पत्तिवाक्यगतदेवतासादृश्यस्यानन्यापेक्षत्वेन यागस्वरूपपरिचायकत्वेन च शीघ्रोपस्थितिकस्य बलवत्त्वात्तेनाग्नावैष्णवस्याग्नीषोमीयविकारत्वं, बार्हस्पत्यस्य चाग्नेय-विकारत्वम् ॥ ८ ॥ ३ ॥ १ ॥

गणचोदनायां ॥ अनकसप्तरात्रे चत्वारि त्रिवृन्त्यहान्यग्निष्टोम-मुखानीति श्रुतम् । तत्र चतुर्ष्वहःसु द्वादशाहिकदशाहान्तर्गत-प्राथमिकस्य त्रिवृत्स्तोमकस्याह्नः प्रवृत्तिः । त्रिवृत्त्वलिङ्गात् । न च क्रमसहकृतगणत्वसामान्येनान्यापेक्षेण दशाहान्तर्गतानामाद्यानां चतु-र्णामह्नां प्रवृत्तिः । तत्तदहर्वर्त्तित्रिवृत्त्वस्यान्यानपेक्षत्वेन बलवत्त्वा-दिति प्राप्ते ।

स्वर्गकामोऽनकसप्तरात्रेण यजेतेति वचनेनोत्पन्नानां सप्तानां कर्मणां मध्ये चत्वार्यनूद्य त्रिवृत्त्वविधानेन त्रिवृत्त्वस्योत्पन्नशिष्टत्वेन दुर्बलत्वादुत्पत्तिशिष्टेन गणत्वेनैव प्रथमस्य प्रथममित्यादिक्रमसह-कृतेन सप्तानामप्यह्नां द्वादशाहिकदशाहान्तर्गतसप्ताहविकारत्वम् ।

न च प्राप्तकर्मानुवादेन त्रिवृत्त्वविधिरग्निष्टोममुखत्वस्य च विधिरिति वाक्यभेदः । दशाहान्तर्गतचतुर्णां मध्ये प्रथमस्याग्निष्टोम-

अथातोऽग्निष्टोमेनेत्यादौ प्राकरणिकोत्तरवेद्यवरोधेन चयनस्य विकृतौ निवेशापत्तेः । अतो ज्योतिष्टोमत्वाभावाच्च द्वादशाहवदप्रवृत्तिः । अथवा, अग्निष्टोमादिशब्दानां नागृहीतविशेषणन्यायेन सङ्ख्यामात्रवाचित्वाज्ज्योतिष्टोमे निरूढलक्षणाङ्गीकारेऽपि प्रकृते तदाश्रयणे प्रमाणाभावान्नित्यकाम्यसंयोगानुवादेनैव स्तोत्रावृत्तिविधिः । अस्मिन्नपि पक्षे ज्योतिष्टोमस्यैवाश्रयत्वादिना सत्त्वाच्च गुणातिदेशः । अस्तु चेदं कर्मान्तरम् । तथाप्यन्यपदार्थस्यैकवचनान्तत्वादेकमेव तत् । स्तुतसङ्ख्यायाश्च सङ्ख्यागतत्वेनाभेदकत्वात् । अतः स्तुतसङ्ख्याकसम्भवस्यैकं कर्म ज्योतिष्टोमविकार इति च गुणातिदेश इति प्राप्ते ।

एकप्रसरताभङ्गापत्तेर्न तावज्ज्योतिष्टोमोद्देशेन सङ्ख्योद्देशेन वा सङ्ख्याविधिः । अतो वषट्कर्तृभक्षवदेव कर्मान्तरम् । तदपि नैकम् । तथात्वे एकस्य कर्मणोऽनेकसङ्ख्याकत्वस्याभ्यासमन्तरेणानुपपत्तेरश्रुतस्याभ्यासकल्पनापत्तेः । अतोऽग्निष्टोमोक्थ्यादिपदानां विरुद्धार्थेषु दग्निष्टोम उक्थ्यो विरूपसामेत्यादौ विहितयज्ञसामानाधिकरण्येनापि क्वाचित्कप्रयोगेण साम्प्रतिकलक्षणया तत्तत्सङ्ख्याकयज्ञान्तरपरत्वमङ्गीकृत्य स्तुतसङ्ख्याभिन्नतावद्यज्ञविधिरेवायम् । एवं चान्यपदार्थो न कर्मापि तु यज्ञ उक्थ्यसङ्ख्याका यज्ञाः करणं यस्मिन्निति व्युत्पत्त्या फलमेवेति ध्येयम् । तदपि च नोद्दिश्य यज्ञविधिरेकप्रसरताभङ्गादवश्यापत्तेः । अपि तु तात्पर्यगत्या प्रत्ययविशिष्टतावच्छेदकविधिरेवेति युक्ता गुणस्यैवातिदेशाद्द्वादशाहवदावृत्तिः । द्विगुसमासत्वाद्वा न कश्चिद्दोषः । *[एकवचनान्तत्वासम्भवत्वे उपपत्ति-

---

* [ ] एतच्चिह्नद्वयान्तर्गतः पाठो नास्ति सो॰ पुस्तके ।

प्राकृतषडहानुवादेन सङ्ख्याविधिः । द्वादशाहत्वानुपपत्त्या तस्यासन्निवेशात् । अतः कर्मान्तराण्येव सङ्ख्यया चतुर्विंशतिर्विधीयन्ते । न तु षडहस्य चतुरावृत्तिः । तथात्वे चतुः षडहो भवतीति क्रियाभ्यावृत्तिविहितसुच्प्रत्ययापत्तेः । चत्वारो भवन्तीति श्रवणात्तु पृथक्त्वनिवेशिन्या सङ्ख्यया भेद एव । अतश्च गणत्वसामान्याद्द्वादशाहविकृतित्वाविशिष्टेषु चतुर्षु द्वादशाहधर्माणां चतुर्णां प्रवृत्तिरिति प्राप्ते ।

यद्यपि तन्त्ररत्नरीत्या चतुर्विंशतिरेतानि कर्माणि, तथापि षडहशब्दवत्त्वसादृश्येन तस्यैव चतुर्वारं प्रवृत्तिः । वस्तुतस्तु नात्र तावन्ति कर्माणि, चतुर्विंशतिसङ्ख्याया अश्रवणात् । षट्सङ्ख्यायां चतुःसङ्ख्यायाश्चैकत्र द्वयमिति न्यायेन कर्मान्वयमङ्गीकृत्य भेदाङ्गीकारे कर्मद्वयकापत्तिः । षट्सङ्ख्याया समासगतत्वेन तथान्वयानुपपत्तेश्च । अत एकविशिष्टे अपरविशिष्टमिति न्यायेनैव षट्सङ्ख्याविशिष्टे चतुःसङ्ख्यान्वयो वाच्यः । अतश्च सत्यप्येकवाक्यत्वे प्रयाजैकादशत्वन्यायेन निर्ज्ञातसङ्ख्याकत्वात्तु सङ्ख्या आवृत्त्यापादिकैव । वस्तुतस्तु पृथगाख्यातश्रवणाद्वापि भिन्नवाक्यत्वमेव । तेन षण्णामेव कर्मणां चतुर्वारमावृत्तिः । सुच्प्रत्ययाभावेऽपि च प्रमाणान्तरेणावृत्तिकल्पने न कश्चिद्दोषः । अतः सूत्रभाष्यस्वारस्येन षण्णामेवावृत्तेः षट्सङ्ख्यात्वसादृश्यादिना षडहस्यैव वारचतुष्टये धर्माः ॥ ८ ॥ ३ ॥ २ ॥

सङ्ख्यागणे ॥ अनारभ्य, शताग्निष्टोमं भवति शतोक्थ्यं शतातिरात्रमिति श्रुतम् । तत्राग्निष्टोमादिशब्दानां ज्योतिष्टोम एव प्रचुरप्रयोगात्तदनुवादेन शतसङ्ख्याऽभ्यासापादिका विधीयते । न ह्यग्निष्टोमादिशब्दानां सङ्ख्याविशिष्टक्रतुसामान्यवाचित्वम् । तथात्वे

स्तोत्राणामुत्पत्तिर्ज्योतिष्टोम एव। द्वादशाहे तु अतिदेशप्राप्त-स्तोत्रानुवादेन धर्मविशेषमात्रम्। अतश्च ज्योतिष्टोमिकानामेवोप-देशेन विधानम्। अतएव रात्रिपर्यायादीनां ज्योतिष्टोमे फलार्थ-सद्याप्तत्वेनैषामतिदेशेऽपि न काचित्क्षतिरुपदेशेनैव तद्विधानाङ्गी-कारात् ॥ ८ ॥ ३ ॥ ९ ॥

गायत्रीषु ॥ द्वादशाहे प्रकृतितो गायत्र्यैष्टुभादीनां छन्दःसु प्राप्तेषु छन्दोन्तरपरिसंख्यार्थं गायत्रमेतदहर्भवतीति श्रुतम्। तत्र गायत्र्यादिशब्दानां चतुर्विंशत्याद्यक्षरसंख्यामात्रवाचित्वादगृहीत-विशेषणान्यायेन लक्षणयापि ऋक्षुप्रयोगोपपत्तेस्तथापि न क्षतिः। अतश्च प्राकृतीष्वेव ऋक्षु अधिकाक्षरलोपं कृत्वा चतुर्विंशत्यक्षराण्येव पठनीयानि। अतएव, ये हि द्वे गायत्र्यौ सैका जगतीति लिङ्ग-मपि संख्यावाचित्वपक्ष उपपद्यते न ऋग्वाचित्वपक्षे। तिस्रोऽनुष्टुभ-स्ततस्रो गायत्र्यो भवन्तीति च। अतश्च शताग्निष्टोमे उक्थ्यादि-स्तोत्रलोपवदिहाप्यधिकाक्षरलोपप्रसक्तौ,

न गायत्र्यादिशब्दानां संख्यामात्रवाचित्वम्। तथात्वे घटादि-संख्यायामपि प्रयोगापत्तेः। प्रयोगानुसारेणाक्षरसंख्यावाचित्वे तेनैव ऋग्विशेषस्य वाच्यतापत्तेः। इतरथा तावदक्षरे गणेऽपि प्रयोगा-पत्तेः। अतोऽष्टाक्षरपादत्रयादियुक्तमन्त्रविशेष एव गायत्र्यादिपद-वाच्यः। निरूढलिङ्गेषु तु संख्यामात्रे लाक्षणिकः। तेन दाशत-यीभ्य एवोत्पत्तिगायत्र्य आनेया न त्वक्षरावलोपः। तथात्वे वाक्यार्थपरिपूर्त्त्यभावेनार्थप्रत्यायकत्वानुपपत्तेश्च*। पूर्वाधिकरणे

---

* प्रकाशकत्वानुपपत्तेश्च,—इति सो॰ पुस्तके पाठः।

रूप]। कर्मैकत्वेऽपि आवृत्तेरावश्यकत्वेन सुत्यागणत्वानपायाद् द्वादशाहधर्माविरोधः ॥ ८ ॥ ३ ॥ ४ ॥

गणादुपचयः ॥ शताग्निष्टोमादौ द्वादशाहगतदशरात्रप्रवृत्ति-रित्युक्तम्। द्वादशाहे च प्रथमोत्तमावतिरात्रसंस्थाकौ। दशरात्र-प्रथमोत्तमौ चाग्निष्टोमसंस्थाकौ। मध्यमानि चाष्टौ उक्थ्यसंस्था-कानि। केषाञ्चिन्मते षोडशिसंस्थाकानि, एकः षोडशी। तदिह शता-ग्निष्टोमे तावदतिदेशप्राप्तानामुक्थ्यादीनां बाधादग्निष्टोमसंस्थाकत्वे न कापि क्षतिः। उक्थ्यातिरात्रयोस्तु दिनेषु येषु* अतिदेशेनैवोक्थ्य-स्तोत्रादि प्राप्तम्, तेष्वपि न काचिच्चिन्ता। येषु तु अग्निष्टोम-संस्थाकत्वप्राप्तिस्तेषु वचनादेवोक्थ्येषु कर्त्तव्येषु द्वादशाहिकान्येवो-क्थ्यातिरात्रस्तोत्राण्युपस्थितत्वात्कर्त्तव्यानीति प्राप्ते।

न तावदतिदेशेन तेषामुपस्थितिः। प्रथमस्य प्रथममित्येव क्रमेण प्रत्येकमेव तत्तदहःसु तत्तदह्नामतिदेशेन यान्यहानि उक्थ्यसंस्था-कप्रकृताहर्विकाराणि तेषु तदीयोक्थ्यप्राप्तावपि अग्निष्टोमसंस्थाक-प्रकृताहर्विकारेषु तत्प्राप्तौ प्रमाणाभावात्। प्रथमोत्तमयोरेवाति-रात्रसंस्थाकत्वेन तयोः क्वाप्यनतिदेशेन रात्रिपर्यायाणां सुतराम-प्राप्तेः। अतः शतोक्थ्यादौ तेषु तेष्वहःसु वाचनिकानि स्तोत्राणि। न हि भिक्षुको भिक्षुकान्तरं याचते इति न्यायेन ज्योतिष्टोम-स्यान्येव कार्याणि। अयं च नातिदेशोऽपि तु कर्मान्तरत्वे प्रमाणा-भावाद्यत्रोक्थ्यप्रभृतिलिङ्गवत्त्वानि वचनेन विधीयन्ते। किञ्च

* दिनेषु येषु,—इति नास्ति सो॰ पुस्तके।

## अथाष्टमाध्यायस्य चतुर्थः पादः।

दर्विहोमे ॥ तदेव चिह्नेऽतिदेशे दर्विहोमेषु तदपवाद वक्तुं दर्विहोमशब्दार्थो निरूप्यते। तत्र न तावदयं दर्व्याख्यस्य गुणस्य विधिरिति शङ्कितुं शक्यम्। सोमादिवद्विधिवाक्ये श्रवणाभावेन विधायकत्वग्रहणानुपपत्तेः। न च वास्तुहोमीयगुणविध्यर्थवादे, यदेकया जुहुयाद्दर्विहोमं कुर्यादित्यत्र श्रुतस्य दर्विहोमपदस्य घृतादिपदवत्पदान्तरकल्पनया विधायकत्वसम्भवः। पुरोऽनुवाक्यामनूच्य याज्यया यजतीति शब्दद्वयरूपगुणविधेर्दर्व्यपेक्षाभावात्।

न च चिह्नसन्निवेशाद्यन्यथानुपपत्त्योपरि हि देवेभ्यो धारयतीतिवद्वाक्यान्तरकल्पनया होमोद्देशेनैव दर्विविधायकत्वम्। वास्तुहोमे तावत्स्रुचः प्रत्यक्षशिष्टत्वेन विधातुमशक्यत्वात्। होमान्तरेष्वपि स्मार्त्तेषु व्यस्तिकया मूलदण्डया दर्व्या जुहोतीति स्मार्त्तवचनेनैव तत्प्राप्तेः। श्रौतेष्वपि स्रुवेण जुहोति जुह्वा जुहोतीत्यादिना तत्र तत्र पात्रान्तरसद्भावाच्च। अतश्च तत्सम्बन्धेन गुणविधित्वानुपपत्तेर्दर्विशब्द पात्रान्तरस्योपलक्षणमश्रौतस्यैकदेशप्रवृत्तिनिमित्तेन वा तत्साध्यहोममात्रस्येदं नामधेयम्।

तथापि यथैव स्मार्त्तानां पार्वणस्थालीपाकादीनां कर्त्तरि दर्विहोमिक इति प्रयोगदर्शनात् प्रवृत्तिनिमित्तसद्भावाच्च तेषां नामधेयं, तथैव वास्तुहोमेऽपि प्रयोगात् श्रौतानामपि। न च वास्तु-

अधिकारमहत्त्व उपचर्यास्थितिस्तत्रापङ्गादिहापचर्यास्विन्यत इति भाव तथाध्यायसङ्गतौ यतितव्यम् ॥ ८ ॥ ३ ॥ ६ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकाया-

मष्टमाध्यायस्य तृतीय पाद ॥

नवत्त्वेन यावदुक्तैतिकर्त्तव्यतयैव निराकाङ्क्षत्वात्तादृश्यस्य च विनिगमनाविरहेणानियामकत्वादपूर्वाः एव दर्विहोमा न प्रकृतिपूर्वा । यत्तु परिधिवेदिदर्शनं, तद्देशोपलक्षणतयाप्युपपन्नम् । एवं च त्र्यम्बकहोमेषु औचित्येन प्राप्तेऽपि बर्हिः प्रयुज्यते न प्रयाजानूयाजा इज्यन्ते न सामिधेनीरन्वाहेति स्तुतिरप्युपपद्यते । अतिदेशपक्षे स्वतन्त्रपर्युदासकल्पने विध्यन्तरैकवाक्यताभङ्गापत्तेः ।

सोमयागाद्यविकारत्वे इदमपरं लिङ्गम् । औदुम्बरीहोमे इतेन द्यावापृथिवी आपृणेति अन्तरा यूपं जुहोति भूमिगते चाज्ये स्वाहाकार इति । सोमयागादिविकारत्वे हि अतिदेशेन वषट्कारः प्राप्येत । तत्र स्वाहाकारस्यापि विधिरपूर्वविधिः स्यात् । स्वाहाकारेण वा देवेभ्यो हविः प्रदीयते वषट्कारेण वेति अनारभ्याधीतवाक्येन विहितयोः स्वाहाकारवषट्कारयोर्विकल्पेन प्रदानमात्रे प्राप्तौ याज्याया अधि वषट्करोतीति वचनेन याज्यावत्कर्मणि वषट्कारनियमात्तद्रहिते परिशेषादेव स्वाहाकारप्राप्तेस्तदनुवादेन भूमिगमनोपलक्षितकालमात्रविधानात्सावद्यम् । न चैव परिशेषादेव सर्वत्र स्वाहाकारप्राप्तौ अग्निर्मूर्धेतितिरित्यादौ क्वचित्पुनः स्वाहाकारपाठवैयर्थ्यम् । तस्य मन्त्रत्वसिद्ध्यर्थत्वेन सार्थकत्वात् । यदि त्वतिदेशपक्षेऽपि औपदेशिकमन्त्राम्नानादेव याज्यारहितत्वाद्वषट्कारप्राप्त्यभावेन परिशेषसिद्धेः स्वाहाकारप्राप्तिरुक्ताच्येत, ततो नेदं लिङ्गमिति ध्येयम् । अत सिद्धं दर्विहोमा अपूर्वा इति ॥ ८ ॥ ४ ॥ २ ॥

इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां अष्टमस्य
चतुर्थ पादोऽध्यायश्च समाप्तः ॥

क्यविवक्षणम्। प्रकृतावेव व्रीहित्वाद्यवच्छिन्नवृत्तित्वेन श्रुतानामवघातादीनां तद्विषयवादिवृत्तित्वात्तद्वारणाय प्रकृतिविकृतिपदोपादानम्। प्रकृतिस्थव्रीहिव्यक्त्यपेक्षया सौर्यादिविकृतिस्थव्रीहिव्यक्तीनां भेदादातिदेशिकव्रीहिमत्सौर्यादावेवावघातादीनामुद्धारणार्थं यद्धर्मावच्छिन्नेति विशेषणम्। सौर्यस्थव्रीहिषु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकव्रीहिभेदसत्त्वेऽपि व्रीहित्वावच्छिन्नप्रतियोगिताकतद्भेदाभावात्। यवसाध्यविकृतौ तूपाङ्गीकारेऽप्यदोषः। प्रकृतौ प्रोक्षणादीनां तात्पर्यगत्या अपूर्वसाधनत्वावच्छिन्नवृत्तित्वस्यैव विवक्षितत्वेन विकृतावपि तेनैव रूपेण श्यामाकवृत्तित्वादुभयमपूर्वयोर्दर्शपूर्णमासीयत्वादिना भेदविवक्षायां सौर्यस्थव्रीहिष्वतिव्याप्तिवारणाय श्रुतपदं विरुद्धप्रतीयमानत्वार्थकम्। अपूर्वसाधनत्वस्य तात्पर्यज्ञानाधीनत्वेन निरूढश्रुतत्वाभावात्। अथ चाग्निपदस्थाने सूर्यादिपदप्रक्षेपेऽपि अवशिष्टमन्त्रस्य प्राकृतत्वानपायात् लक्षणे तस्येति शब्दानुपपत्तिः। एवं च यत्र प्राकृतपदस्थाने पदान्तरप्रक्षेपस्तत्रोहशब्दोऽभाक्त इति ध्येयम्। अथवाऽस्तु तदनुरोधेन तस्येति पदं प्राकृततत्कार्यापन्नान्यतरपरमिति संक्षेपः।

स चोहः प्राकृतपदार्थानां प्रकृतौ यद्रूपावच्छिन्नोद्देश्यसम्बन्धित्वेन विधानं, तद्रूपावच्छिन्नसम्बन्धित्वेनैवातिदेशे सिध्येत्। न तु स्वरूपेणैवातिदेशे। तथाग्नेऽग्निपदस्यैवातिदेशेन सौर्ये तस्यैवादृष्टादिप्रयोजनान्तरकल्पनया प्रयोगोपपत्तावूहानापत्तेः। अतएवोपकारपृष्ठभावेन पदार्थानां विकृतावतिदेशः। प्रकृतौ निरूपितरूपाणामेव वा विकृतावतिदेश इति दशमे वक्ष्यते।

## अथ नवमाध्यायस्य प्रथमः पादः ।

ऊहकर्म ॥ सदेव सिद्धेऽतिदेशे तत्प्रापितपदार्थविषय ऊहश्चिन्त्यते । त्रिविधश्चोहो निरूप्यते । मन्त्रोहः, सामोहः, संस्कारोहश्च । तत्रोहो नाम प्रकृतावन्यथा दृष्टस्य विकृतावन्यथा भावः । तस्य च, येन सम्बन्धेन यद्धर्मावच्छिन्नवृत्तित्वं यस्य प्रकृतौ श्रुतं, तस्य तेन सम्बन्धेन विकृतौ तद्धर्मावच्छिन्नभिन्नवृत्तित्वम् ।

अस्ति चेदं देवस्य त्वादिमन्त्रेषु प्रोक्षणादिसंस्कारेषु च । मन्त्रस्य हि स्मारकत्वसम्बन्धेनाग्न्याद्यवच्छिन्नवृत्तित्वं श्रुतं प्रकृतौ, विकृतौ च तेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नसूर्यादिवृत्तित्वात् । एवं प्रोक्षणावघातादीनामपि संस्कार्यतासम्बन्धेन व्रीहित्वावच्छिन्नवृत्तित्वं प्रकृतौ श्रुतं, विकृतौ च तेनैव सम्बन्धेन तद्धर्मावच्छिन्नभिन्नश्यामाकादिवृत्तित्वात् । एवं साम्नामपि, आर्द्रं भावादिरूपाणां येन सम्बन्धेन यत् स्थानगतैकारवृत्तित्वं प्रकृतौ श्रुतं, विकृतौ तेषां तेनैव सम्बन्धेन तत्स्थानभिन्नस्थानगतैकारवृत्तित्वादूहः ।

अत्र श्रुतत्वं तात्पर्यमनपेक्ष्य प्रतीयमानत्वम् । तेनोक्तैकारवृत्तित्वादेः शब्दादप्रतीतावपि न क्षतिः । अत्र च सम्बन्धैक्याविवक्षायां पशुपुरोडाशयागीयोद्देश्यांशस्य प्रकृतौ स्मारकत्वसम्बन्धेनाग्नीषोमदेवतावृत्तेर्विकृतावनुपयुक्तान्यदेवताविधानेनारादुपकारकस्य सम्बन्धान्तरेण तदुपकारवृत्तित्वादतिप्रसङ्गवारणाय सम्बन्धै-

अस्तु वा व्रीहिपदे लक्षणा, तथापि लाघवादुपस्थितत्वाच्च विजातीययागसाधनव्रीहित्वादिकमेव लक्ष्यतां, न त्वपूर्वसाधनत्वम्। न च यागस्यापि विज्ञातोपायत्वेन प्रोक्षणादिव्यतिरेकेणापि जायमानत्वादानर्थक्यापत्तिः। यागत्वावच्छिन्नस्यापूर्वत्वावच्छिन्नस्येव जायमानत्वेऽपि विजातीययागत्वावच्छिन्नस्य प्रोक्षणादिव्यतिरेकेण जायमानत्वे प्रमाणाभावात्। न हि आग्नेयत्वावच्छिन्नं प्रति काचित्सामग्री क्लृप्ताऽस्ति, येन तज्जन्यव्यक्तौ आग्नेयत्वाभिव्यक्तिर्भवेत्। प्रोक्षणादेरेव तु विधानबलेन तत्सामग्रीत्वात्, तद्व्यतिरेकेण तदुत्पत्तौ प्रमाणाभावेन न यागस्वरूपार्थत्वे आनर्थक्यं प्रोक्षणादीनाम्। अतएवारादुपकारकाणामपि यागस्वरूपार्थत्वे नानर्थक्यमिति भाष्ये।

यद्यपि तावद्विजातीययागसाधनत्वमेव प्रोक्षणादीनामुद्देश्यतावच्छेदकं, तथापि अपूर्वसाधनत्व एव वक्ष्यमाणरीत्या तत्र व्रीहित्वादिकं प्रविष्टमिति जिज्ञासाकेष्वपि तत्त्वादूषणसिद्धिरनिवार्यैव।

वस्तुतस्तु न विजातीययागसाधनत्वं तथा। विजातीययागव्यक्तीनामपि व्यापकीभूतयागत्वावच्छिन्नव्यक्त्यन्तर्गतत्वात्तदवच्छिन्नं प्रति द्रव्यमात्रावच्छिन्नस्य लोकत एव कारणत्वावगतेः। सामग्रीवशेन व्रीह्यादिद्रव्यं विनापि द्रव्यान्तरेण कदाचिद्विजातीययागव्यक्तीनामुत्पत्तौ बाधकाभावेनानर्थक्यस्य तदवस्थत्वात्। न च सामान्यसामग्र्या विशेषसामग्रीसहिताया एव कार्यजनकत्वनियमः। अन्यत्र तथात्वेऽपि प्रकृते तथा कल्पनायां प्रमाणाभावात्। तदेव यादृक् तादृक् होमत्वमिति निरूढमुपपत्तेश्च। अतएवानयैव रीत्या पच-प्राप्तिमुपपाद्य अनन्तो नियमविधित्वं व्रीह्यादिविधीनामुपपाद्यते

तदित्थमुपोद्घाततया किं प्रोक्षणावघातादीनामग्नये जुष्टं निर्वपामीत्यादावग्न्यादिपदानां च प्रकृतौ व्रीहित्वाग्नित्वाद्यवच्छिन्नोद्देशेन विधानं, ततश्च व्रीह्यग्न्यादिप्रयुक्तास्तेऽथवाऽपूर्वसाधनत्वावच्छिन्नोद्देशेन, ततश्चापूर्वप्रयुक्ता इति चिन्त्यते । व्रीह्यादिप्रयुक्तत्वे श्यामाके चरौ सौर्ये वा व्रीह्यादीनामभावात्प्रोक्षणादीनां लोप एव न तूहः । अपूर्वप्रयुक्तत्वे तु श्यामाकादीनामपि तद्रूपावच्छिन्नत्वात्सिध्यत्यूहः । तत्र यद्यपि आरादुपकारकस्थले न श्रुतमुद्देश्यतावच्छेदकम्, तथापि करणानुग्राहकाकाङ्क्षारूपेतिकर्त्तव्यताकाङ्क्षात्मकप्रकरणेन यागाङ्गत्वमेव प्रयाजादिविधानाद्यागत्वमेवोद्देश्यतावच्छेदकम् । न त्वपूर्वं, तस्य प्राधान्यापत्तेः । न चैतावता पारिप्लवत्वापत्तिः । अनुवादस्य सति सम्भवे सन्निहितगामित्वेनाग्नेयादित्वस्यैवोद्देश्यतावच्छेदकत्वात् । न वा अतिदेशोच्छेदः । अपूर्वविशेषार्थत्व इव आग्नेयाद्यर्थत्वेऽपि तद्वत् कुर्यादित्यतिदेशेनाग्नेयस्याभावे सौर्ये धर्मातिदेशोपपत्तेः । अतस्ते यागप्रयुक्ता एव । तदा किन्तु वक्तव्यं यद्व्रीह्यादिसंयोगेनैव प्रोक्षणादिश्रवणाद्व्रीहित्वादित्वमेवोद्देश्यतावच्छेदकमिति ।

[redacted] च व्रीहियागादिस्वरूपार्थत्वे धर्माणां आनर्थक्यम् । तेषामपि अग्निवत्फलवत्त्वेन तदभावात् । न चाग्नीनामाधानव्यतिरेकेणोत्पत्तौ प्रमाणाभावेन तदभावेऽपि व्रीह्यादीनां प्रोक्षणादिव्यतिरेकेणापि जायमानतयाऽऽनर्थक्यापत्तिस्तदवस्थैवेति वाच्यम् । एतादृशानर्थक्यपरिहारार्थं प्रोक्षणविशिष्टव्रीहिणामेव कल्पितवाक्यान्तरेण यागार्थत्वस्यापूर्वार्थत्वस्य वा बोधोपपत्तौ निषादस्थपत्यधिकरणन्यायेन व्रीहिपदे यवादिसाधारण्येनापूर्वसाधनत्वलक्षणायां प्रमाणाभावात् ।

दिशा यागलक्षणाधारादुपकारकत्वे निमित्तत्वं प्रत्युक्तम्। अतो-बाधकाभावात् विध्यत्वेवोक्तः। यानि चात्र सूत्रे वर्णकान्यनेकानि कृतानि, तानि पुनरुक्तत्वादनुपयुक्तत्वाच्चोपेक्षितानि। मूलकारैस्तु ग्रन्थव्याख्यानरसिकतया कृतानीति ध्येयम् ॥ ८ ॥ १ ॥ १ ॥

संस्कारे ॥ अत्र सूत्रे सन्निपत्योपकारकेषु पूर्वमुक्तमप्यपूर्वार्थत्वं त्रिभिरेभिरधिकरणैराक्षिप्य समाधीयते। तत्रेह वाक्यसंयुक्ते अग्रिमाधिकरणद्वये च लिङ्गश्रुतिसंयुक्तयोरिति विवेकः। तदिह दर्शपूर्णमासप्रकरणे श्रुते प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीत्यादौ प्रोक्षणं नापूर्वार्थम्। वाक्येन तस्यावघातार्थत्वावगमेन प्रकरणभावादपूर्वार्थत्वकल्पनानुपपत्तेः। न च निष्ठाप्रत्ययोक्तोलूखलमुसलोद्देशेनैव प्रोक्षणस्य व्रीहीन् प्रोक्षतीतिवत् विधानात्कथं वाक्येनापि तस्यावघातार्थत्वम्। द्वितीयाविरहितया कर्मत्वस्य विशेष्यतयाऽश्रुतेः कर्मत्वस्य द्रव्योपसर्जनत्वप्रतीत्या तयोरुद्देश्यत्वानुपपत्तेः। अतश्च प्रोक्षणस्यानर्थक्यतदङ्गन्यायेनोलूखलमुसलयोरवतारेऽपि वाक्यादवघातोद्देशेनैव विधानम्। अस्तु वा उलूखलादावेवावतारे प्रमाणाभावात् प्रोक्षणस्य यदङ्गता तदन्वयेऽपि तृतीयया अन्यसाधनीभूतयोरेव तयोः प्रतीतेः प्रोक्षणस्यापि यदुलूखलमुसलयोः कार्यं तदर्थत्वावगतेरवघातार्थत्वसिद्धिः। सर्वथा नापूर्वार्थत्वम्। एवं च नैवारश्चरुर्भवापूतानामित्यादाववघातस्योलूखलमुसलयोर्वाऽभावात्तेषु न प्रोक्षणमिति सिद्धान्ते।

पूर्वाधिकरणोक्तरीत्यैवाघातस्वरूपे उलूखलमुसलस्वरूपे वाऽसमर्थस्यापत्तेरपूर्वसाधनत्वलक्षणया अपूर्वार्थत्वात्समापाददृष्टोपपत्तिरित्यु-

प्रतिनिधिश्च*। अतो द्रव्यतत्संस्कारविषयाः सर्वे अपूर्वसाधनीभूतविषया एव। व्यापकीभूतापूर्वत्वावच्छिन्नं प्रति द्रव्यत्वादिना कारणत्वस्य लोकतोऽक्लृप्तत्वेन निरूढप्रतिबन्धानापत्तेः। आरादुपकारकाणामप्यनयैव दिशा अपूर्वजननानुकूलयोग्यतासंपादकत्वं न तु यागार्थत्वम्। आनर्थक्यापत्तेः। यागनिष्ठयोग्यतासंपादकत्वाच्च न प्राधान्यापत्तिरङ्गत्वविघातो वेत्यादि ज्ञेयं कौस्तुभे।

यत्तु व्रीहित्वाद्यवच्छिन्नोद्देशेनैव प्रोक्षणादिविधिः। शाब्दबोधे लक्षणाया अनङ्गीकरणात्। पश्चात्तु निषादस्थपतिन्यायेन प्रोक्षणादिविशिष्टव्रीहीणां साक्षात्कारकत्वकल्पनया अपूर्वार्थत्वकल्पनमित्युक्तम्। तत्प्रोक्षणादेरन्यादृष्टस्य वा व्रीहित्वावच्छिन्नभाव्यकत्वे अयोग्यतानिश्चयस्य प्रतिबन्धकत्वाच्छाब्दबोधस्यैवानुपपत्तेर्लक्षणाङ्गीकरणात् प्रत्युक्तम्। अतो व्रीह्यादिपदेनापूर्वसाधनत्वावच्छिन्नलक्षणात्तदुद्देशेनैव प्रोक्षणादिविधिरिति ते अपूर्वयुक्ता एवेति सिद्धं श्यामाकादावूहः। न चैवमपि धर्मानुष्ठाने व्रीह्यादीनामपि अनुष्ठापकतया निमित्तत्वादिष्टतौ तदभावे भेदनाभाव इव धर्मलोपापत्तिः। यच्छब्दाद्यभावेन व्रीह्यादीनां निमित्तत्वे प्रमाणाभावात्। वक्ष्यमाणरीत्या उद्देश्यतावच्छेदककोटावप्रवेशेनानुष्ठापकत्वस्याप्यभावाच्च। अतएवापूर्वस्यैव तत्त्वान्निमित्तत्वम्।

वस्तुतस्तु फलेच्छाया अनुष्ठापकत्वेऽपि फलस्यासिद्धस्यानुष्ठापकत्वे प्रमाणाभावात् फलीभूतापूर्वमपि न निमित्तम्। अनयैव च

* प्रतिनिधिश्च,–इति नास्ति का० पुस्तके।

व्यापारवद्विनिगमनाविरहेण साधनतावच्छेदकस्यापि विवक्षा। इतरथा यजादावतिप्रसङ्गापत्तेः। अथवा साधनतायाः अवच्छेदकं विना निरूपयितुमशक्यत्वादेव विवक्षितं तत्। न तु व्यापारः। तं विनापि साधनतायाः सत्त्वेन निरूपयितुं शक्यत्वात्। अतश्च मखेषु अवघातत्वाद्यभावाच्च प्रोक्षणम्। एवं च यद्यपि सुवर्णोदूखल-त्वादेरपूर्वसाधनलक्षणौपयिकतयोपक्षीणत्वात् अविवक्षा स्यात्, तथाप्याघारादिकानां साधनतावच्छेदकानां यागत्वप्रभृतीनां विवक्षा दुर्निवारैवेतिभाति।

अपूर्वभिन्नकार्यतानिरूपितकारणतादिलक्षणायामतिप्रसङ्गपरि-हारार्थं मध्यवर्त्तितया झटित्युपस्थितव्यापारस्यैव व्यापारत्वे विवक्षा न तु साधनतावच्छेदकस्य, तस्य कारणतायाः पश्चादुप-स्थितेः। अतएव यत्र मध्ये यागादौ न व्यापारस्तत्र कारणताया एव शृङ्गग्राहिकया विवक्षणम्। न तु तदवच्छेदकस्य गौरवात्। उपपादितश्चैतत् कौस्तुभे तेषामर्थाधिकरणे विस्तरेण। अतोऽव-घातत्वादेरविवक्षितत्वान्मखेषु प्रोक्षणसिद्धिरिति।

एवं वा। एवं तावदुद्देश्यस्वरूपे आनर्थक्यप्रसक्तौ अपूर्वसाध-नत्वलक्षणेत्युक्तम्। तत्र किं प्रधानजन्यापूर्वमेव लक्ष्यते उताङ्गजन्य-मपीति चिन्तायां, यत्र तावदवघातप्रोक्षणादौ* न व्रीह्यादिजन्य मध्येऽपूर्वान्तरं, तत्र प्रधानजन्योत्पत्त्यपूर्वसाधनत्वलक्षणा अविवादैव। यत्र तद्दृष्टार्थसन्निपत्योपकारिषु प्रोक्षणदीक्षणीयादिषु स्वजन्या-

---

* प्रोक्षणादौ,—इति मो॰ पुस्तके पाठः।

कम्। तदनुपपन्नम्। आक्षेपप्रकारस्याधिकस्याभावेन पौनरुक्त्यापत्तेः। किञ्च प्रोक्षणं न तावदवघातोद्देशेन विधीयते। उलूखलमुसलविशेषणत्वेनैव प्रतीतेः। न ह्यस्य प्रधानक्रियान्वयो युक्तोऽपि तु निष्ठाविष्टक्रियान्वय एव। नाप्यवघातसाधनीभूतोलूखलमुसलोद्देशेन, विशिष्टोद्देशापत्तेः। उलूखलमुसलयोर्विशिष्टयोः शुद्धयोर्वा उद्देश्यत्वे एकप्रसरताभङ्गापत्तेश्च। अतो नैवं पूर्वः पक्षः सम्भवी।

अपि तु विध्यन्तरप्राप्तावघातानुवादेनार्थात् अन्यतःप्राप्तिकयोरपि उलूखलमुसलयोः पूर्वमदृष्टाङ्गीकारेण प्रोक्षणविशिष्टयोर्विधानार्थकेन विशेषणविधिनोलूखलमुसलोद्देशेन प्रोक्षणविधिर्वाच्यः। ततश्चोलूखलमुसलत्वेनोद्देश्यताऽपूर्वसाधनत्वेन वेति विचारः कार्यः। सोऽपि च तदा भवेद्यदि सकलपौरोडाशिकपात्रसाधारण्येन प्रोक्षणविधिर्न स्यात्। न त्वेतदस्ति। उक्तान्यपि पात्राणि प्रोक्षतीति विध्यन्तरेण तस्य प्राप्तत्वात्। न हि मीमांसकमते पौरोडाशिकपात्रप्रोक्षणाभावः। तन्त्राभावस्यैव परं तृतीये साधनात्। अतः प्रकारान्तरेण प्राप्तस्यार्थस्यायमनुवादः। अभ्युदयशिरस्कतयोलूखलमुसलविधानार्थः। समासोपात्तत्वाच्च नानेकविधेयता दोषाय।

अतएव विचारोऽपार्थः। पात्रप्रोक्षणविधिनैवोलूखलमुसलयोरपि प्रोक्षणम्। ननु पूर्वाधिकरणन्यायेनैवोलूखलमुसलनिष्ठापूर्वसाधनत्वप्रयुक्तम्। तयोश्च तत्साधनता न साक्षादपि तु यागपुरोडाशव्रीहितदवघातद्वारिकैव प्रयोजकत्वापरपर्याया। तत्र चातिप्रसङ्गपरिहारार्थं साधनतावच्छेदकस्य यागत्वपुरोडाशत्वव्रीहित्वावघातत्वादेरपि विवक्षेत तत्तज्ज्ञापकसाधनतामात्रस्यैवेति चिन्तायाम्।

पक्षे दीक्षणीयाधर्मप्राप्तिः, सिद्धान्ते तु प्रसिद्धचैधातव्याधर्मा एवेति प्रयोजनमुक्तम्। तन्न, पूर्वपक्षवत्सिद्धान्तेऽपि स्थानापत्तौ बाधकाभावात्। यदि तु स्थानापत्त्यतिदेशापेक्षया चिविधातिदेशस्यापि बलवत्त्वस्याष्टमे साधितत्वात्सामान्यातिदेशेन प्रसिद्धचैधातव्याधर्मा एवेत्याग्रहस्तेन, तत्पक्षात्पूर्वपक्षेऽपि तुल्यम्।

वस्तुतस्तु नेयं चैधातव्या प्रसिद्धचैधातव्यातः कर्मान्तरम्। सत्यप्यसुपादेययोगे आख्यातसामानाधिकरण्याभावात्। अतः प्रसिद्धायाः सधर्मकाया एव चैधातव्यायाः यजमानसंस्कारार्थत्वेन विधानाद्धर्माकाङ्क्षाविरहेण न स्थानापत्त्यतिदेशप्रसक्तिः ॥ ८ ॥ १ ॥ २ ॥

फलदेवतयोश्च ॥ पूर्वोक्ताया अपूर्वसम्बन्धित्वेनोद्देश्यतायाः क्वचित् आक्षिप्य समाधानार्थमिदमधिकरणम्। दर्शपूर्णमासयोरगन्म स्वः स्वरगन्मेति स्वर्गप्रतिपादको मन्त्रोऽग्नेरहमुज्जितिमनूज्जेषमित्यादिनाग्न्यादिप्रकाशको मन्त्रः श्रुतः। तयोश्च स्वर्गत्वाग्नित्वादिनैव स्वर्गाग्न्योर्लिङ्गकल्प्यश्रुतावुद्देश्यता। उपस्थितत्वात्। न तु अपूर्वसम्बन्धित्वेन। मुख्य एवार्थे विनियोगस्यौत्सर्गिकतया साधितत्वेन तेन रूपेण स्वर्गादिपदैरनभिधानात्। न च स्वर्गादिस्वरूपे आनर्थक्यं, साध्यत्वरूपस्य तस्याभिप्रेतोपायत्वाविशेषेण* तदर्थत्वे वैयर्थ्याभावात्। मन्त्रजन्यप्रकाशनव्यतिरेकेणेतराङ्गयुक्तप्रधानसम्पादेयोत्पत्तिसिद्धेरानर्थक्यमपूर्वेऽपि तुल्यम्। प्रयोगविधिना सर्वाङ्गसाहित्यावगतेर्मन्त्रजन्यप्रकाशनव्यतिरेकेणापूर्वानुत्पत्तिरिति तु स्वर्गेऽपि तुल्यम्। एवं

---

* तस्य निष्पन्नोपायत्वाविशेषेण,—इति पा॰ पुस्तके पाठः।

दृष्टमस्ति, तथापि तदङ्गानामुत्पवनादीनां, यावत्या वाचा काममधीत
तावत्या दीक्षणीयायामनुब्रूयादित्यादीनां च स्वराणां, दर्शपूर्णमास-
ज्योतिष्टोमाद्युत्पत्त्यपूर्वसाधनत्वलक्षणया तदर्थत्वमेव। न तु प्रोक्षण-
दीक्षणीयादिजन्योत्पत्त्यपूर्वार्थत्वम्। तस्मिन्नपि फलवत्त्वाभावेनान-
र्थक्यादिति प्राप्ते।

साक्षात्फलवत्त्वाभावेऽपि परम्परयाऽग्निवत्फलवत्त्वोपपत्तेरङ्गा-
पूर्वाणामप्यभिसंहितोपायत्वेन स्वाङ्गाभावे निष्पत्तौ प्रमाणाभावा-
दङ्गापूर्वस्वरूपेऽप्यानर्थक्याभावेन तत्साधनत्वलक्षणायामपि बाधका-
भावात्। प्रधानापूर्वार्थत्ववादिनापि चाङ्गापूर्वाणामतिप्रसङ्गपरि-
हारार्थं द्वारत्वस्यावश्यकत्वेन तदर्थतयैवोपपत्तौ प्रधानापूर्वपर्यन्तग-
मने प्रमाणाभावाल्लक्षितलक्षणाप्रसङ्गाच्च प्रकृत्युपस्थितदीक्षणीया-
द्यपूर्वसाधनत्वमेव दीक्षणीयादिपदैर्लक्ष्यत इति ते धर्मास्तत्प्र-
युक्ता एव।

अतएवारादुपकारकाङ्गानामपि अभिक्रमणप्रयाजादीनां प्रयाज-
दैवादिजन्यापूर्वार्थत्वमेव न तु दर्शज्योतिष्टोमाद्यपूर्वार्थत्वम्। अव्य-
हितापूर्वेऽप्यानर्थक्याभावात्। प्रयोजनं, ज्योतिष्टोमविकारानङ्गभूत-
पशुषु नैय्यादिद्रव्यकेषूपाकरणादीनामूहाभावादकरणं पूर्वपक्षे,
ज्योतिष्टोमापूर्वस्थानापन्नापूर्वाभावेन प्राकृतकार्याभावात्। सिद्धान्ते
तूहः करणमिति द्रष्टव्यम्। एवं दैक्षधर्मातिदेशोऽपि पूर्वपक्षप्रयोजन-
मनुसन्धेयम्।

यत्तु भाष्यकारेणाश्वमेधे चेधातव्या दीक्षणीया भवतीति वच-
नेन दीक्षणीयाकार्यं यजमानसंस्कारे विहिताया चेधातव्याया पूर्वं

त्वादिनोद्देश्यता, अतिप्रसङ्गात्। नापि दर्शपूर्णमासफलोपहितस्वर्गत्वेन। तत्फलोपहितस्यापूर्वद्वारकत्वेन* गुरुभूतत्वात्। किं तु विजातीयापूर्वसम्बन्धित्वेनैव। अतएव सन्निपत्योपकारकत्वेऽपि स्वर्गप्रत्यासन्नत्वादपूर्वमपि परमापूर्वमेव, न त्ववान्तरापूर्वमुद्देश्यतावच्छेदककोटिप्रविष्टम्। स्वर्गत्वस्य तु प्रीतित्वादिवदेवाप्रवेशो गौरवात्। अतएव मन्त्रलिङ्गकल्प्या श्रुतिः, अनेन मन्त्रेण प्रकृतिजन्यबोधद्वारा परमापूर्वसाध्यं संस्कुर्यात्,—इति। प्रकृतिजन्यबोधस्य वस्तुतः स्वर्गत्वप्रकारः स्वर्गविशेष्यक एव द्वारतायां प्रकृतिजन्यबोधत्वेन प्रविष्टः। न तु अपूर्वसम्बन्धित्वप्रकारकः। तथात्वे प्रकृतिजन्यत्वानुपपत्तेः।

अतएव ब्रह्मवर्चसादौ द्वाराभावात्स्वर्गपदलोपे प्रकृतिजन्यबोधसिद्ध्यर्थं ब्रह्मवर्चसपदोहः। इतरथा प्रकृताविव लक्षणया स्वर्गपदेनापूर्वसम्बन्धित्वप्रकारकबोधजनने ब्रह्मवर्चसस्यापि तेनैव रूपेण बोधोपपत्तेरूहानुपपत्तिः। अत एव च सुपर्णदर्शपूर्णमासप्रयोगेऽपि मन्त्रलोपः। तत्रापूर्वसाध्यफलस्य स्वर्गत्वेन बोधानुपपत्तेः। अत एव च मुख्य एवार्थे मन्त्राणां विनियोग इत्यप्युपपन्नम्। प्रकृतिजन्यबोधेन चापूर्वसाध्ये ज्ञाततया आधानात्तस्य संस्कार्यत्वं उद्देश्यतापरपर्यायं नानुपपन्नम्। तादृशबोधस्य च स्वजन्यसंस्कारजन्यादृष्टद्वारा परमापूर्व एव फलोत्पत्त्यनुकूलयोग्यताजननात्फले उपयोगो न तु फलोत्पादकत्वम्। तथात्वे अप्राधान्यापत्त्या प्रकरणबाधापत्तेरित्याद्यन्यत्र विस्तरः।

* नापि दर्शपूर्णमासोद्देश्यस्वर्गत्वेन। तस्यापूर्वद्वारकत्वेन,—इति मो॰ पुस्तके पाठः।

देवतायामपि मन्त्रार्थवादेतिहासादिवशात्सत्यप्यपूर्वे तज्जनितदेवता-प्रसादादेव फलोत्पत्त्यवगतेः प्रसादस्य च मन्त्रजन्यप्रकाशनव्यति-रेकेणोत्पत्तौ प्रमाणाभावात्तदर्थत्वम्। अतएव लिङ्गकल्प्यविनि-योगविधौ उपस्थितत्वात्प्रसादाश्रयीभूतायैव तत्त्वेनोद्देश्यता न त्वपूर्वीयदेवतात्वेनेति [illegible] सौर्यादौ ब्रह्मवर्चसपूर्यादिपदोप-हतिं मन्ते।

न तावत्सर्वेषामेवावघातादीनामपूर्वार्थत्वमपहाय स्वर्गार्थत्वं शक्यं, व्रीह्यादिपदेन प्रत्यासन्नतया तेषामर्थाधिकरण-न्यायेनापेयाद्युत्पत्त्यपूर्वार्थानामन्वयेन ग्रहणात्। एवमपूर्वाङ्गीकारेण देवताप्रसादार्थत्वमवघातादीनां निराकर्त्तव्यम्। देवताप्रसादस्या-पूर्वजन्यत्वेनाप्रत्यासन्नत्वात्। उदाहृतमन्त्रस्थलेऽपि च न स्वर्गमन्त्रस्य स्वर्गार्थत्वसम्भवः। नहि किं दर्शपूर्णमासजन्यस्वर्गव्यक्ति प्रत्येव मन्त्र-जन्यप्रकाशनस्योपयोग उत स्वर्गमात्रमिति प्रतीति।

मान्यः। प्रथमे दर्शपूर्णमासाङ्गत्वाभावात् सामान्यसम्बन्ध-बोधकप्रमाणाभावेन लिङ्गकल्प्यश्रुतेरेवाकल्पनेन स्वर्गार्थत्व एव प्रमाणाभावात्। न च स्वर्गाधिकार एव सामान्यसम्बन्धबोधक प्रमाणम्। स्वर्गस्य यागाख्यकरणेनैव निराकाङ्क्षतया तदधिकार-स्याकल्पकत्वात्। न च प्रमाणं प्रयोजनाकाङ्क्षयैव लिङ्गेन श्रुति-कल्पनं, वाक्यभेदे विनियोगेन निराकाङ्क्षत्वात्। अत एव लिङ्ग-मात्रेणापि न श्रुतिकल्पनम्। पाके प्रसर्पणापि देवदत्तस्या-काङ्क्षाऽभावे विनियोगादर्शनात्।

नाद्यः। प्रथमे हि दर्शपूर्णमासजन्यस्वर्गव्यक्तीनां [illegible] स्वर्ग-

भावेऽपूर्वपक्षे सुतरां प्रमाणाभावः। यद्यपि देवताया अभिप्रेय-
माणत्वोक्तावपि तस्य ब्राह्मणाय गां ददातीत्यादौ ब्राह्मणस्य फल-
दातृत्वासम्भवेन उपयोगाभावात्प्राधान्यासम्भवेन प्राधान्यव्यभिचारेण
तत्कल्पनानुपपत्तेः। प्रत्युत भावार्थाधिकरणन्यायेन यागकरणि-
कायां भावनायां भाव्यापेक्षायां स्वर्गस्यैव तत्त्वेनान्वयाद्देवताया-
अपि संस्कार्यत्वे उद्देश्यानेकत्वनिमित्तवाक्यभेदापत्तेर्देवताया एव
यागाङ्गत्वम्।

तथापि यागस्य फलजनकत्वे व्यापारापेक्षायामश्रुतापूर्वकल्पना-
पेक्षया राधिमिचवदर्थवादिकदेवताप्रसादस्यैव द्वारत्वकल्पनात् तत्प्र-
युक्तत्वसिद्धिः। प्रसादस्य च विग्रहभोगादिव्यतिरेकेणानुपपत्तेरर्थ-
वादाद्यनुसारेण विग्रहभोगादिकल्पनेऽपि न दोषः इतिप्राप्ते।

प्रसादो हि यदि इच्छारूपस्तदा तस्येच्छात्वेन तत्फलं प्रति
कारणत्वे अतिप्रसङ्गापत्तेरवश्यं दर्शादिकर्तुस्तत्फलं भवत्वित्येवमाका-
रिकेच्छात्वेन तद्वाच्यम्। तथाच कारणतावच्छेदके गौरवम्।
दर्शादिजन्यफलभोगेऽपि तत्कर्तृत्वानपायादन्यकृतदर्शपूर्णमासजन्य-
प्रसादादन्यस्य फलापत्तिश्च। अतस्तत्फलव्यक्तित्वावच्छिन्नं प्रति
तद्व्यक्तिकर्तुः सा फलव्यक्तिर्भवत्वित्येवमाकारिकेच्छात्वेन कारणत्वं
वाच्यम्। तथा चानेककार्यकारणभावकल्पनं कारणतावच्छेदके
गौरवञ्च। किञ्चैतादृशः प्रसादो यदि ब्राह्मणतर्पणाज्जे, तदा
यागानां नष्टत्वादेवोत्पत्त्यनापत्तिः। यदि तु तत्तद्यागेभ्योऽप्यवा-
न्तरप्रसादा आग्नेयव्यक्तिकर्तुस्तद्व्यक्तिजन्यं फलं भवत्वित्याकारका-
इष्यन्ते, तदा देवानाममोघेच्छत्वस्यार्थवादेषु प्रतिपादनाद्देवादर्शी-

• एवमन्याद्रिप्रकाशकमन्त्रेष्वपि स्वतन्त्राग्निप्रकाशनार्थत्वस्यानुपयुक्तत्वात् सामान्यसम्बन्धबोधकप्रमाणाभावाच्च पूर्ववत्तत्कल्पनानुपपत्तेरवश्यमाग्नेयसम्बन्ध्यग्निप्रकाशनार्थत्वस्यैव कल्पनीयत्वादाग्नेयस्वरूपे चासमर्थत्वेन प्रत्यासन्नतया तदुत्पत्त्यपूर्वीयदेवतात्वेनैवाग्न्यादेरुद्देश्यत्वकल्पना । न तु प्रसादाश्रयत्वेन, प्रसादस्य परमापूर्वजन्यत्वेन विप्रकृष्टत्वात्तद्वदेव प्रयोजकत्वानुपपत्तेः । अतएव नाग्नित्वादेरपि उद्देश्यतावच्छेदककोटिप्रवेशो गौरवात् ।

एवं च प्रसादाश्रयत्वस्याप्युद्देश्यतावच्छेदककल्पनेऽपि जडसिद्धिरप्रत्यूहैव । परन्तु प्रसादसामान्याश्रयत्वस्याग्निसोमादावतिप्रसङ्गान्नोद्देश्यतावच्छेदकत्वम् । आग्नेयापूर्वजन्यप्रसादाश्रयत्वापेक्षया तदीयदेवतात्वस्य लघुत्वाच्च । अतश्चाप्यनेन मन्त्रेण प्रतिसम्बन्धबोधद्वारा आग्नेयोत्पत्त्यपूर्वीयदेवतां संस्कुर्यात्,—इति विप्रकृष्टश्रुतिं कल्पयित्वा जडसिद्धिः पूर्ववदुपपादनीया । उपयोगोऽपि निर्वापादिमन्त्रेषु स्मृतिदार्ढ्येन त्यागकाले झटिति देवतास्मृतिद्वारोत्पत्त्यपूर्वानुकूलयोग्यतासम्पादन एवेत्यन्यत्र विस्तरः ॥ ९ ॥ १ ॥ २ ॥

देवतायाः ॥ एवं तावदपूर्वमङ्गीकृत्यैव देवताप्रसादस्य प्रयोजकत्वं निराकृतम् । इह तु तदनङ्गीकृत्य देवताप्रसाद एव प्रयोजकोऽस्त्वित्याशङ्का प्रसङ्गान्निराक्रियते । तत्र देवतायाः सम्प्रदानत्वात्तस्य च कर्मकारकापेक्षयाऽप्यभिप्रेयमाणत्वेन प्रधान्याद्यागस्य पूजारूपस्य तत्संस्कारत्वावगतेस्तस्याश्चोपयोगापेक्षायां स एवैनं भूतिं गमयति, इन्द्र एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयतीत्याद्यर्थवादानुसारात्प्रसन्नायाः फलदातृत्वावगतेर्यागस्यैव फलजनकत्वे प्रमाण-

तेष्वपि न श्रुतिलक्षणातोऽन्या काचिल्लक्षणा। अस्तु वा सा, तथापि विधौ गौरवापत्तेः सा न दोषाय।

न चैवं विध्यनपेक्षितत्वादर्थवादिकमन्त्राद्यर्थकल्पनेऽपि लक्षणया प्राशस्त्यतात्पर्यकस्याप्यर्थवादस्यासति प्रमाणान्तरविरोधे स्वमुख्यार्थेऽपि प्रामाण्याभ्युपगमाद्विग्रहभोगप्रसादादिस्वीकारादपूर्वान्ते एव प्रसादस्वीकरणमस्त्विति वाच्यम्। अन्यतात्पर्यकस्य वाक्यस्यान्यत्र प्रामाण्यायोगात्। अन्यथा शुद्धपुरुषतात्पर्यके यष्टीः प्रवेशयेत्यादौ, परान्नभोजननिवृत्तितात्पर्यके विषं भुंक्ष्वेत्यादौ च प्रमाणान्तराविरोधात्स्वमुख्यार्थेऽपि प्रामाण्यापत्तिः। अतः सकृदुच्चरितस्य शब्दस्यानेकार्थबोधकत्वाभावनियमानुरोधेन शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वानुरोधेन चार्थवादानां स्वमुख्यार्थे प्रामाण्यानुपपत्तेर्न देवताविग्रहादिस्वीकारः। न च तथापि मन्त्रार्थविशिष्टमात्रत्वे एव लक्षणयार्थवादानां तात्पर्यविशेषणांशेऽपि प्रामाण्योपपत्तिः। अन्यतावच्छेदकगौरवापत्तेः। अन्यथा व्रीहित्वादेरपि विवक्षापत्त्या ऊहानापत्तिः। अतः कथमपि न विग्रहादिस्वीकारः। किन्तु शब्दमात्रं देवता, अर्थस्तु प्रातिपदिकानुरोधाच्चेतनोऽचेतनो वा कश्चित्स्वीक्रियते न तु विग्रहादिमान्। उपासनादौ परं ध्यानमात्रमाहार्यमस्त्वस्येति जैमिनिमतनिष्कर्षः। मम त्वेवं वदतोऽपि वाणी दुष्यति। तत्र हरिस्मरणमेव शरणम् ॥८।१।३॥

द्रव्यसङ्ख्या॥ अत्र सूत्रे द्रव्यसङ्ख्याहेतुसमुदायानां यत्र श्रुत्या उद्देश्यता तत्र व्रीहित्वादिनैव न त्वपूर्वसाधनत्वेन, प्रकरणेन श्रुति-

योगिवाक्यप्रतिपादकत्वेनापि चरितार्थत्वाच्च विवक्षा । अतएव तत्त-ज्ञापिकायाः विजातीयापूर्वसाधनताया एव लक्षणेति कौस्तुभे स्पष्टम् । तत्तज्ज्ञापकसाधनतात्वावच्छिन्नसाधनताया एव लक्षणाश्च व्रीहियवनिष्ठकारणताया गुणादिप्रमाणेन भेदेऽपि यवसाधारण्य-लाभोऽपीत्यपि तत्रैव व्यक्तम् । अतश्च व्रीहित्वादेरविवक्षितत्वाद्युक्तो नीवारादिषूहो विहतौ ।

एवं यद्यपि नापूर्वसाधनत्वं व्रीहीनवहन्तीतिवदपूर्वप्रमित-लवाक्य एव तु संस्कारविशिष्टस्य व्रीह्यादेः साधनताविधानं, यथा प्रोक्षिताभ्यामुलूखलमुसलाभ्यामित्यादौ तत्समानजातीयवाक्यान्तरे वा । तथापि प्रोक्षणविशिष्टस्य व्रीहित्वविशिष्टस्य च विधेयक्रिया-विशेषणत्वेन विधौ कृते पश्चादरुणैकहायनीन्यायेन परस्परान्वयात्म-कृतौ तज्जातीयस्य प्रोक्षणेऽपि विहतौ तज्जातीयलोपेऽपि तत्-स्थानापन्नद्रव्यान्तर एव प्रोक्षणलाभात्सिध्यति प्रोक्षणं प्रति विशेषण-विधिवेलायां अपूर्वसाधनत्वस्यैवोद्देश्यतावच्छेदकत्वम् । लक्षणा पर न तत्रास्ति, व्रीहिपदेन व्रीहित्वस्यैवाभिधानात् । अपूर्वसाधनत्वस्य क्तप्रत्ययेनाभिधानात् ।

एवं यद्यपि संस्कारविध्युत्तरं तच्छब्देन संस्कृतस्य विनियोगो यथा तप्ते पयसि इत्यादौ, तथापि संस्कारवाक्ये पयस्त्वसमानाधि-करणधर्मावच्छिन्नोद्देशेनैव दध्यानयनविधिः । न तु पयस्त्वाव-च्छिन्नोद्देशेन । आनर्थक्यात् । स च धर्मः उत्पत्तिवाक्ये दृष्टसामा-न्यमिव सामान्यत एव पयःपदेन प्रथमं प्रतीयते । पश्चाच्च तच्छ-ब्देन पयस्त्वावच्छिन्नस्यापूर्वसाधनत्वे प्रमिते स धर्मोऽपूर्वसाधनत्वरूप-

शङ्कोचायोगादित्याशङ्क्य स्वरूपे आनर्थक्यापत्तेरपूर्वसाधनत्वेनेति सिद्धान्तितम्। तत्र व्रीहीन् प्रोक्षतीति द्रव्योदाहरणस्य चतुर्होत्रा पौर्णमासीमिति समुदायोदाहरणस्य च कथञ्चित्सम्भवेऽपि मञ्जो-दाहरणस्य त्रीन् परिधीनिति मन्त्रस्यागस्य सुवरिति मन्त्रवदपूर्वसाधनीभूतपरिधीयत्ताप्रकाशनार्थत्वस्य सिद्धत्वादनुदाहरणत्वमिति वार्त्तिककारेणैवोक्तम्।

तथा हेतूदाहरणेऽपि। यत्तु शूर्पेण जुहोति तेन ह्यन्नं क्रियत इति अन्नकरणहेतुना तस्य व्याप्यत्वावगमाद्व्याप्यस्य च सर्वत्र प्राधान्यदर्शनादन्नकरणोद्देशेन होमः संस्कारकतया विधीयते इत्याशङ्क्य तृतीयया होमं प्रति शूर्पस्य करणत्वावगतेस्तेन ह्यन्नं क्रियत इत्यस्य चार्थवादत्वाद्धोमोऽप्यन्नाद्युपकारकोऽपूर्वार्थ इति विचारितम्। तद्व्याप्यस्यापि स्रुवादेः क्रतुं प्रति प्राधान्यादर्शनादर्थवादस्य च हेत्वधिकरणे स्थापितत्वादेतद्विचारस्यैवानुपयोगित्वाच्चोपेक्षितम्। किञ्च सर्वस्यैवास्य विचारस्याद्याधिकरणेन गतार्थतेत्यन्यथा वर्ण्यते।

यद्यपि यज्ञकर्मेतिसूत्रेण सन्निपत्योपकारकत्वाभावे अपूर्वसाधनत्वलक्षणा सिद्धा। संस्कारे चेतिसूत्रेण चान्तरालिकानां यागत्वादिकारणतावच्छेदकानामविवक्षा सिद्धा। तथापि श्रुतस्य व्रीहित्वादेः कारणतावच्छेदकस्य त्यागे प्रमाणाभावः। न च युगपद्वृत्तिद्वयविरोधः। अपूर्वसाधनीभूतव्रीहित्वावच्छिन्नस्यैव लक्षणयोद्देश्यत्वाङ्गीकारात्। अतस्तु तादृशस्य नीवारादावसत्त्वान्नोक्षसिद्धिरितिप्राप्ते।

लक्ष्यतावच्छेदके गौरवापत्तेः श्रुतस्य व्रीहित्वस्य च लक्षणोप-

कारेण स्वरशब्दस्यैव विशेषणं यज्ञशब्दः। तथापि प्रकृतत्वाद्भागो-
यज्ञसम्बन्ध्येव।

आवश्यकं चेदं सिद्धान्तिनोऽपि। अग्नीषोमीयावधिकयज्ञप्रा-
ग्भागवर्तिपदार्थत्वस्यैव तन्त्रते उद्देश्यतावच्छेदकत्वात्। तत्र च पदा-
र्थानामनुक्तेर्लाघवाच्चाग्नीषोमीयावधिकयज्ञप्राग्भागत्वमेवोद्देश्यताव-
च्छेदकम्। तदवच्छिन्नोद्देशेनोपांशुत्वविधिः। भागे चोपांशुत्वस्य
साक्षादसम्बन्धात्तदारम्भकपदार्थानुष्ठानां द्वारत्वं योग्यतावश-
लभ्यम्। उद्देश्यस्य च भागस्य स्वरूपे यागपर्यन्ते प्रयुक्ते भागजन्या-
पूर्वसद्भावे प्रमाणाभावाद्दीक्षणीयावाङ्नियमस्यासम्भवेन भाग-
सम्बन्धियज्ञजन्यपरमापूर्वसाधनत्वमेव भागविशेषं लक्ष्यत इति परमा-
पूर्वप्रयुक्तमुपांशुत्वम्। एवं चोपांशुत्वस्य दृष्टार्थत्वं सम्पद्यते। अग्नी-
षोमीयावधि उपांशुकरणे प्रमाणाभावेन सौत्येऽहनि सकलतदर्थपदा-
र्थानामविशेषेण करणात्। एवं च तत्तत्पदार्थधर्मत्वाभावात्तद्भागा-
रम्भके विकृतौ अपूर्वेऽपि पदार्थे दर्विहोमादौ उपांशुत्वस्योहः।
इतरथा तत्तत्पदार्थावान्तरापूर्वप्रयुक्तत्वे अप्राकृतकार्यापन्ने वेदान्तरीये
स्वातिदेशरहिते च तस्मिन्नुपांशुत्वस्य कथमप्यप्राप्तेः।

यत्तु भाष्यकारेण मासाग्निहोत्रे तद्भागारम्भके उपांशुत्वस्योह-
इति प्रयोजनमुक्तं, तथामातिदेशप्रापितस्य विरुद्धस्याविरुद्धस्य वा
स्वरस्य सत्त्वे चोदनालिङ्गातिदेशप्रापितोपांशुत्वप्राप्त्यनुपपत्तेरुपे-
क्षितम्। यदपि वार्त्तिकादौ पुरस्तादुपसदां सौम्येन चरन्तीत्यादौ
उपांशुत्वोह इत्युक्तम्। तदपि सौम्यमात्रपुरस्कारेण कल्पितस्याति-
देशस्य सामान्यविहितोपांशुत्वातिदेशापेक्षया प्राबल्यादुपेक्षितम्।

इति प्रतीयते। तत्र च पयःपदस्य लक्षणेति पश्चादवगम्यत इति न कश्चिद्विरोधः।

वस्तुतस्तु यद्यपि सप्तमीश्रवणात्तापविशिष्टपयोऽधिकरणकदध्यानयनस्य विहितस्य प्रयोजनापेक्षायां उद्देश्यवाचकं पदमनुमीयते, तथापि मन्त्रवर्णानुरोधाद्वक्ष्यमाणविशेषविशिष्टपयोवाच्यामिक्षापदसमभिव्याहृततच्छब्दबलेन पयस एवोद्देश्यत्वावगतेस्तद्विशिष्टविजातीयापूर्वसाधनत्वविधिपदस्यैव कल्पनात् नात्र लक्षणापीति ध्येयम् ॥ ८ ॥ १ ॥ ४ ॥

दैशमङ्गम् ॥ योने, सरा वा एषा यज्ञस्य तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्तीति श्रुतम्। तत्रोपांशुत्वं किं ज्योतिष्टोमसम्बन्धग्नीषोमीयप्राग्भागधर्मः यद्दीयपरमापूर्वप्रयुक्तम्, उताग्नीषोमीयप्राग्भागवर्त्तितत्तत्पदार्थधर्मः सन् तत्तदन्यावान्तरापूर्वप्रयुक्तमिति चिन्तायाम्।

विधेये उपांशुत्वे उद्देश्यसमर्पकत्वावश्यम्भावे इत्यविवादम्। स च पूर्वप्रकृतम् अग्नीषोमीयप्राग्भागमेव परामृशति न तु पदार्थान्। प्राचीनशब्दस्याहत्यधिकरणन्यायेन प्राग्भागमात्रवाचित्वात्। एकवचनप्रयोगेन भागस्यैव तदुक्तस्य तच्छब्देन परामर्शाच्च। अत एवैकेनैव तच्छब्देनोद्देश्यसमर्पणात्पूर्वपक्षे सिद्धान्ते वाऽग्नीषोमीयादिविशेषणत्वेऽपि न विशिष्टोद्देशः। तत्र च भागं प्रति अग्नीषोमीयोऽवधित्वेन विशेषणं, यज्ञश्च प्रयोगद्वारा सम्बन्धित्वेन। अतएव यज्ञपदं न सराशब्दविशेषणम्। अप्रवृत्तिविशेषकरत्वापत्तेः। अस्तु वा तच्छ्रुत्यदेन व्यवधानाधाराय लक्षणानिरित्येवमर्थाग्नी-

प्रणीतादि ॥ इदमधिकरणं सूत्रकारेण पूर्वाधिकरणे ऽन्तर्गर्भितत्वेन कृतमपि व्याख्यासौकर्यार्थं पृथगभिधीयते । दर्शपूर्णमासयोः, यज्ञं तन्वन्तावध्वर्युयजमानौ वाचं यच्छतः यदध्वर्युयजमानौ वाचं यच्छतस्तत्प्रजापतिभूयन्तौ यज्ञं तन्वाते सहाप्रणीताः प्रणेष्यन् वाचं यच्छति ता च हविष्कृता विसृजतीति श्रुतम् ।

तत्र च वाग्यमः प्रणीताप्रणयनाङ्गमेव विधिवाक्यस्थलट्प्रत्ययेन तत्प्राधान्यावगमात् । अतो हविष्कृदाह्वानकालावधिकवाग्यमस्य तत्प्राधान्यावगमात् भागधर्मत्वं न वा तावत्पदार्थधर्मत्वम् । यदि तु प्रणीताः प्रणेष्यन्निति वाक्यस्य वाग्यमोत्पत्तिपरत्वे उत्पत्तिशिष्टकर्तृकत्वानुरोधेन* तत्र यजमानप्राप्त्यभावात् पूर्ववाक्यस्यार्थवादत्वानुपपत्तेर्यजमानमात्रविधानस्य च सुतरामनुपपत्तेरवश्यं यज्ञं तन्वन्ताविति वाक्यस्यैव वाग्यमविधायकत्वमुच्येत, ततोऽस्तु तत्रत्यलट्श्रुत्या यज्ञविस्तारार्थत्वमेव । तदा हि उत्तरवाक्याभ्यां वाग्यमानुवादेन प्रणीताप्रणयनहविष्कृदाह्वानयोः पूर्वोत्तरावधित्वेन विधिः† ।

अत एव तत्रत्यमेकवचनमपि अनुवादगतत्वाद्ग्रहं संमार्ष्टीतिवदविवक्षितम् । अतश्च विधेयसामर्थ्यानुसारादुद्देश्यभूतो यज्ञविस्तारापरनामधेयो यज्ञभागोऽपि तदवधिक एव । यत्तु सूत्रे पूर्वपक्षे यज्ञशब्दस्य विस्तारविशेषणत्वमनङ्गीकृत्य भागधर्मत्वमुक्तम् । तत् यज्ञशब्दस्य विस्तारं विनाऽन्यत्रान्वयस्य दुरुपपादत्वाद्भागवाचकपदाश्रवणाच्चोपेक्षितम् । अतोऽध्वर्युयजमानकर्तृकवाग्यम एव यज्ञ-

---

* कर्तृकत्वावरोधेन इति सो० पुस्तके पाठ ।

† विधि,–इति ख्या० पुस्तके पाठ ।

न चोपांशुत्वातिदेशस्य प्रधानसम्बन्धितया प्राबल्यम्। आधानसामादाविव प्रधानसम्बन्धित्वस्याङ्गेषु दौर्बल्याप्रयोजकत्वात्। इतरथा सामाग्निहोत्रेऽपि तदापत्त्या भाष्यकारमतदूषणानुपपत्तेः। न चैवं प्रकृतावेव दीक्षणीयाद्यङ्गेषु तदनापत्तिः। औपदेशिकत्वेन तयोपांशुत्वस्य प्राबल्यात्। इतरथा प्रकृतावेव सामातिदेशविषये तादृशि उपांशुत्वप्राप्त्यनापत्तेः। अतः पूर्वोक्तविषय एवोपांशुत्वप्राप्तिः प्रयोजनमिति प्राप्ते।

यत्किञ्चिच्छब्दस्य सामान्यधर्मपुरस्कारेणोक्तेषु तत्तद्विशेषधर्मपुरस्कारेणानुक्तेषु सर्वेषु पदार्थेष्वेव प्रयोगान्नपुंसकनिर्देशाच्चाग्नीषोमीयावधिकत्वप्राग्भागवर्त्तिकर्मत्वेनैव तत्तत्पदार्थानामुद्देश्यता। अन्यथा भागस्य पुंलिङ्गत्वान्नपुंसकनिर्देशो यत्प्राचीनमित्येतावतैव सिद्धे यत्किञ्चिच्छब्दस्य वैयर्थ्यं स्यात्। एकवचनं च सामान्याभिप्रायेण सङ्ग्रहणार्थम्। अतश्च तत्तत्पदार्थानामेवोद्देश्यत्वात्तत्स्वरूपे सामर्थ्यप्रयुक्तौ तत्तद्वाक्यान्तरापूर्वसाधनत्वमेव साधनमवसीयते। इतरथा पदार्थसमुदायस्य भागस्य* साक्षाद्यज्ञापूर्वसाधनत्वे प्रमाणाभावात् पदार्थद्वारा तदाश्रयणे सम्बन्धतावच्छेदके गौरवम्। पुनश्चोपांशुत्वस्य भागाङ्गत्वे समन्वयात्पदार्थसम्बन्धो द्वारत्वकल्पनमित्यत्यन्तगौरवम्। अतस्तावत्पदार्थधर्म एवोपांशुत्वम्। अतश्च विकृतौ सङ्ग्रहणाभावे ऽपूर्वे न सन्देहः। इदं चोपांशुत्वं विशेषविहितनिरुक्तप्रवर्ग्याग्न्याधेयाद्याध्वर्यवादिपदार्थातिरिक्तपदार्थविषयमिति भाष्यवार्त्तिककौस्तुभे स्पष्टम् ॥८॥१॥५॥

* भागादेर्भागस्यापूर्वस्य,—इति को॰ पुस्तके पाठः।

रावयवाकर्षणे यत्र वा न सम्भिद्दर्शनं तत्रैव शरीरघटादाववयव्यन्तराभ्युपगमः। न चैकैकेष्टकाकर्षणेनेतरेष्टकाकर्षणम्, सम्भिन्न पुरीषच्छन्नानामपीष्टकानामनुमानेन दृश्यत एव। अतो व्यापकाभावात्सन्ततसंयोगो न द्रव्यान्तरमिति। काम्यपदमात्रावयव्यन्तरे प्रमाणाभावादिष्टकासंस्कारार्थमेव प्रोक्षणम्। अतश्च इष्टकात्वसमानाधिकरणमेवापूर्वसाधनत्वमग्निपदेन लक्ष्यत इति तस्य प्रत्येकवृत्तित्वात्प्रत्येकं प्रोक्षणमित्यपि सिद्धं भवति। न चैवं व्रीहिपात्रप्रोक्षणादावपि प्रत्येकं तदापत्तिः। न्यायतस्तथाप्राप्तावपि अग्नये वो जुष्टं प्रोक्षामि शुन्धध्वमिति मन्त्रे बहुवचनोपादानबलेन समस्तप्रतीतेः। प्रकृते तु तादृशगमकाभावात्प्रत्येकमेवेति प्राप्ते।

एकावयवाकर्षणेनेतरावयवाकर्षणस्य नावयविव्यापकत्वं, नापि सम्भिद्दर्शनस्य। वस्त्रपटादौ व्यभिचारात्। अतो यत्रैकाकारप्रतीतिरबाधिता तत्रैवावयविस्वीकारः। इतरथा इष्टकाया अपि स्वीकारे प्रमाणाभावः। काम्यपीयन्तु वचनं मूलाभावादनादरणीयम्। वनमित्यादौ तु बाधिता एकाकारप्रतीतिः। अतश्चाग्निपदेनावयविन एवोक्तत्वात्तदर्थमेव प्रोक्षणं, तस्य चैकत्वात्सकृदेव प्रोक्षणम्।

न चैवमग्निस्वरूपे* आनर्थक्योऽपूर्वसाधनीभूताग्न्याधारत्वलक्षणायां यत्र चित्वोत्तरेषामपि हिरण्मयकलशप्रोक्षणधर्मापत्तिः। इष्टकादिसम्पादितलौकिकस्थलविशेषे अग्न्यादिपदप्रयोगाभावेनादृष्टविशेषावच्छिन्नस्थलविशेषस्यैवाग्न्युत्तरवेद्यादिशब्दाभिधेयत्वात्तत्र

* न चैवमवयविस्वरूपे,—इति सो॰ पुस्तके पाठः।

विस्तारपदवाच्यभागधर्मत्वेन विधीयते। न तु पदार्थधर्मत्वेन, तद्वाचकपदाभावात्। अतश्च पूर्वाधिकरणपूर्वपक्षवदेव यज्ञापूर्वप्रयुक्तभागधर्मश्च वाग्यम इति प्राप्ते।

यजमानाध्वर्युकर्तृकविशिष्टवाग्यमस्य यज्ञभागार्थत्वे षष्ठविधिप्रकारापत्तेः सन्निपत्योपकारकत्वलाभाय द्वितीयविधिप्रकारसिद्ध्यर्था ध्वर्युयजमानसंस्कारकत्वेनैव वाग्यमविधिः। यथा च नैव सत्युद्देश्यानेकता तथोक्तं षष्ठैकत्वाधिकरणे कौस्तुभे। तस्य च दृष्टार्थत्वात्मन प्रणिधानमेव संस्कारः। सम्भृतयोश्च तयोरुपयोगापेक्षाया तत्क्रममाणककरिष्यमाणकर्मार्थत्वमेव क्लृप्तं न तु भागार्थत्वम्।

न च तयोर्भागोपयोगित्वस्यापि तद्द्वारा कथञ्चित्सत्त्वाद्य तन्निष्पन्नावितिविशेषणसामर्थ्याद्यज्ञविस्तारोपयोग्यध्वर्युयजमानसंस्कारकत्वमेव वाग्यमस्य कल्प्यतामिति वाच्यम्। यज्ञ तन्निष्पन्नावित्यस्योद्देश्यविशेषणत्वेनाविवक्षितत्वात्। अतश्च हविरुभयत्ववच्च तन्निष्पन्नावित्यनुवादो वाग्यमस्तुत्यर्थः। अतो दृष्टार्थत्वलाभाय पूर्वोत्तरावधिकतावत्पदार्थधर्मत्वमेव। न च स्तुत्या प्रणीताप्रणयनमात्रार्थत्वमेव कल्प्यतामिति वाच्यम्। हविष्कृदाह्वानावधेरदृष्टार्थतापत्तिभयेन तस्यापि काकोपलक्षणत्वात्। अत सिद्ध वाग्यमस्यापि तावत्पदार्थधर्मत्वम् ॥९॥१॥६॥

अग्निधर्म ॥ अग्नौ श्रुते हिरण्यशकलसहस्रेणाग्निं प्रोक्षतीत्यादौ किं अग्निशब्देन संस्थानविशेषसाधनीभूता इष्टका एवोच्यते। तदर्थं च प्रोक्षणम्। उतेष्टकारब्धमवयव्यन्तरमेव अग्निशब्देनोच्यते, तदर्थं च प्रोक्षणमिति चिन्त्यते। तत्र, यद्येकावयवाकर्षणेनेत-

सामर्थ्याभावेनापूर्वसाधनत्वलक्षणाया एवाभावात्। अतश्च नाग्न्युत्तरवेदिधर्माणां सांकर्य्यम्। न चैवं उत्तरवेदिधर्माणां अग्नौ अतिदेशकथन सङ्कर्षे विरुध्येतेति वाच्यम्। दैचवदग्नौ अङ्गतरवैशेषिकधर्माणामेव अपेक्षितहविर्धानपूर्वदेशवर्हिरादिकानिपयधर्माणां स्थानापत्त्यतिदेशेनोत्तरवेदितः प्राप्तेरविरोधात्। उत्तरवेद्यां यावदपेक्षितधर्ममात्रस्यापि वैपरीत्याशङ्का।

अतश्च प्रकृतौ तत्प्रोक्षणादिधर्माणामप्युत्तरवेदिमात्रार्थत्वेऽपि यत्र विकृतौ तदुभयकार्य्यार्थ उक्तपरिमाणं स्वतःसिद्धभूमिक मदृष्टिः स्थानभूमिकं स्थण्डिलं अग्न्याधारत्वेन समाम्नातं, तत्र प्रोक्षणादीनामुत्कर्षसिद्धिः। अस्थानविशेषोपधायकक्रियासाधनीभूततदवयवार्थत्वपूर्वपक्षे तु उक्तविकृतौ तदभावात् प्रोक्षणादीति उक्तविचारोपयोगित्वं चाप्यधिकरणस्य। यदि चैवंविधविकृतिर्न समाम्नायते, तदा फलचिन्तया उदाहरणान्तरे वा फलोपयोगोऽनुसन्धेय। प्रासङ्गिकमेतदधिकरणम् ॥९॥१॥७॥

पत्नीसंयाजान्तत्वम्॥ द्वादशाहे पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते अमन्थितो हि तर्हि* यज्ञ इति श्रुतम्। तत्र किं पत्नीसंयाजान्तत्वं द्वादशसुप्यहःसु विधीयते, उत उत्तमवर्ज्जमिति चिन्तायां, अहस्त्वाविशेषात् सर्व्वेषु। न चासस्थायां पत्नीसंयाजान्तत्वे हेतुत्वावगमात्तस्योत्तमवर्ज्जमेव सत्त्वेन तत्रैव पत्नीसंयाजान्तत्वावगतिः। एतस्य, तेन ह्यत्र क्रियत इतिवद्धेत्वर्थवादत्वेनाहेतुत्वात्। न च

* तर्हि,—इति नास्ति ख॰ पुस्तके।

एवं [redacted] निमित्तोपादानबलाद्यथैव द्वादशाहे अन्तिमेऽहनि न पत्नीसंयाजान्तत्वं, तथैव पञ्चदशरात्रादौ द्वादशेऽहनि न पत्नीसंयाजान्तत्वं, द्विरात्रादौ च द्वितीयादिस्वरूपएवान्तिमे न तदित्यूह्योपयोगिता बाधोपयोगितापि। अत एव प्रकृतौ तद्विजातीयापूर्वसाधनत्वस्यैवाहःपदेन लक्षणायामपि विकृतौ निमित्ताभावादेव न पत्नीसंयाजान्तत्वम्, निमित्तोपादानबलेन वा प्रकृतावसंस्थावत्त्वापूर्वसाधनत्वस्यैव लक्षणान्न कोऽपि दोषः ॥९॥१॥८॥

अभ्यासः ॥ दर्शपूर्णमासयोः सामिधेन्यवान्तरप्रकरणे त्रिः प्रथमामन्वाह त्रिरुत्तमामिति श्रुतम्। तत्रानुवचनं तावत्प्रकरणप्राप्तमनूद्यते त्रिरभ्यासमात्रं तु विधीयते प्रथमामिति चोद्देश्यसमर्पकमित्यविवादमेव। तत्र प्रथमामिति विशेष्यनिष्ठं प्राथम्यविशिष्टमभिधत्ते। शुक्लादिपदवत्। तत्र विशेष्य स्त्रीलिङ्गनिर्देशात् सामिधेनीप्रकरणाच्च ऋगेव। प्राथम्यरूपविशेषणयोगाच्च ऋग्विशेषप्रतीतिरार्थिकी। न तु प्रवोवाजादित्वप्रकारिकोपस्थितिः शाब्दी, तद्वाचकपदाभावात्। अत एव प्राथम्यमेवोद्देश्यतावच्छेदकं घटत्वादिवत्। न तु तदुपलक्षितप्रवोवाजादित्वम्, विना कारणं लक्षणायां प्रमाणाभावादित्यविवादमेव।

इदं तु विचार्यते। प्रथमास्वरूपे आनर्थक्ये प्रसक्ते अपूर्वसाधनत्वलक्षणायां अपूर्वसाधनीभूताग्निसमिन्धनप्रकाशकऋक्त्वमात्रलक्षणे अतिप्रसङ्गापत्तेस्तन्निराकरणार्थं किमुद्देश्यतावच्छेदककोटौ ऋक्त्वविशेषणतया प्रवोवाजादित्वस्य विलक्षणमुत प्राथम्यस्यैवेति चिन्तायाम्।

त्वात्तेषु पक्षेपि समापनस्याप्रसक्तेश्च। अतएव शास्त्रदीपिकायान्त-न्तरत्वे च पत्नीसंयाजोत्तरत्वकथनं हार्योगणस्य निर्मूलमेव। अतएवाचक्ष्याहःशब्दस्य हार्योगणान्तप्रयोगवाचकस्य पत्नीसंयाजान्ते प्रयोगैकदेशे लक्षणेति केषाञ्चिदुक्तमपास्तम्। अयमेव पत्नी-संयाजान्तो हार्योगणोत्तरत्वसोमत्वेनैकदेशलक्षणया प्रयुक्ति-सहत्वात्। अतः सर्वाण्येवाहानि पत्नीसंयाजान्तानि कार्याणि। न तु अवभृथादीनि अन्ते मन्त्रेण कार्याणि। पत्नीसंयाजा-न्तत्वविधिना तेषां पर्युदासनात्। पत्नीसंयाजानाञ्च मन्त्रेण प्रसक्ता-नामावृत्तिरूपफलप्रतिपादनादिति भाष्ये।

अवस्थितो हि तर्हि यज्ञ इति येन यज्ञं क्रियते इति यज्ञ हेत्वर्थवादः। तदिदिह हेतुविधित्वे लक्षणाऽभावात्। नच तु होम-कालीनवर्त्तमानाख्यकरणत्वस्य साधितत्वाच्छतो भूतार्थकत्वे विधौ लक्षणापत्तेरगत्या हेत्वर्थवादत्वाङ्गीकरणम्। अतो न प्रचानूयाजान् यद्यन् भवतीनिवदस्य हेतुपरत्वादस्यास्य हेतुरूपपत्नीसंयाजान्तत्व-विशिष्टसमापनभावनाया एवाहरुद्देशेन विधानाद्विधेयसामर्थ्यानु-रोधेनोद्देश्यानामङ्गानां सङ्कोचोपपत्तेः, उत्तमे चावस्थारूपहेत्वभावात् पत्नीसंयाजान्तत्वस्याप्यभावोपपत्तेस्तमवस्य पत्नीसंयाजान्तता।

न च हेत्वभावेऽपि व्यापकव्यभिचारस्यादोषत्वादुत्तमे पत्नी-संयाजान्तत्वेष्टदोषः। विशेषणाभावप्रयुक्तविशिष्टाभावात् साधक-प्रमाणाभावेनैव तत्र तस्यासिद्धेः। अस्तु वा हिशब्दोत्र अव्यया-नामनेकार्थत्वान्निमित्तत्वपरः। तथा चान्तिमे निमित्ताभावान्नैमि-त्तिकाभाव सुलभ एव।

तत्राग्न्यन्वाधानादिरूपे प्रथमपदार्थे याज्ञिकानां दर्शपूर्णमासारम्भत्वप्रसिद्धेरग्न्यन्वाधानमेव तत्त्वेनारम्भपदार्थः। तदर्था चान्वारम्भणीया तत्कार्यप्रयुक्ता। न तु प्रथमपदार्थत्वेन रूपेण प्रथमपदार्थाङ्गम्। येन पूर्ववदग्न्यन्वाधानरहितायां विकृतावारम्भाङ्गतयोत्कर्षेत। न चान्वाधानस्याप्यप्रवृत्तप्रवर्त्तनविषयत्वेनैवारम्भपदवाच्यता नान्वाधानत्वेनेति कथं न पूर्वाधिकरणविषयत्वमिति वाच्यम्। अन्वाधाने दर्शपूर्णमासविषयकाप्रवृत्तप्रवर्त्तनविषयत्वस्य बाधितत्वात्।

तथा हि दर्शपूर्णमासविषयकप्रवृत्तिसामान्याभाववतः पुरुषस्य या दर्शपूर्णमासविषयिणी प्रवृत्तिस्तद्विषयत्वं तत्। न तु नियतपुरुषस्य यत्किञ्चिद्विषयप्रवर्त्तनविषयत्वम्। तस्याधानभोजनादावपि सत्त्वेनातिप्रसक्तत्वात्। अतश्च नियतपुरुषनिष्ठदर्शपूर्णमासविषयककृतिविषयत्वं दर्शपूर्णमासयोरेव नान्वाधाने। अङ्गप्रधानभेदेन तत्तद्विषयकत्वयोर्भेदात्। न चात्र दर्शपूर्णमासकरणिका भावना श्रुता। ता उपांशु कर्त्तव्या इति वद्द्वितीयानिर्देशेन दर्शपूर्णमासकर्मककृतेरेवारम्भपदार्थघटकत्वस्य त्वया वाच्यत्वात्। अन्वाधाने तस्य याधाद्याज्ञिकप्रसिद्ध्या रूढिरेव तत्रारम्भपदस्य। द्वितीया च षष्ठ्यर्थे सती अनुवादः। ततश्च तदर्थान्वारम्भणीया न तद्रहितायां विकृतावुत्कर्ष्या। अतोऽन्वाधानस्य प्रतिदर्शपूर्णमासप्रयोगमावृत्तेरावर्त्तनीया चेति प्राप्ते।

वृत्तिकारेण तावदेवं सिद्धान्तितम्। नान्वाधानमारम्भपदार्थः तदभावेऽपि देवतायै यज्ञमारभत इति ज्योतिष्टोमे आरम्भशब्दप्रयोगात्। किन्तु इदं मया कर्त्तव्यमिति सङ्कल्पापरपर्यायो-

प्राथम्यरूपस्य श्रुतस्योद्देश्यतावच्छेदकस्य व्रीहित्वादिवदपूर्वसाधनत्वलक्षणोपयोगिग्रहणोपस्थितानुपक्षीणत्वेन निरूक्तापूर्वसाधनत्वरूपोद्देश्यतावच्छेदककोटिप्रवेशे प्रमाणाभावात्प्रयोवाजत्वमेवक्रमविशेषणम् । अतश्च विकृतौ यथतथा प्रयोवाजैव चिरभ्यसितव्या न प्रथमस्थानपतितं ऋगन्तरमिति प्राप्ते ।

अतिप्रसङ्गपरिहारार्थमवश्यकल्प्ये केनचित्तद्व्यापारकसाधनत्वातिरिक्तेन विशेषणे उपस्थितत्वादुपक्षीणेनापि प्राथम्येनैव विशेषणम्, न त्वनुपस्थितेन प्रयोवाजत्वेन । अवघातादौ तु तन्दुलनिष्पत्तिव्यापारकसाधनतामात्रेणैवोद्देश्यत्वपर्यवसानाद्यवानां धर्माकाङ्क्षाबलेन यवसाधारण्यकल्पनेऽपि च वाक्यवैयर्थ्याभावात्नातिप्रसङ्गपरिहारार्थं व्रीहित्वप्रवेशः । प्रकृते तु अतिप्रसङ्गाङ्गीकारे प्रथमोत्तमापदघटितवाक्यद्वयवैयर्थ्यापत्तेस्तास्तु पञ्चदश सम्पद्यन्त इत्यर्थवादानुपपत्तेश्च विशेषणविवक्षा आवश्यकी । अतश्च या काचित् प्रथमोत्तमा चिरभ्यसितव्येत्युक्तोपयोगोऽपि ॥८॥१॥८॥

इच्छावृत्तौ ॥ दर्शपूर्णमासयोर्दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयामिष्टिं निर्वपेदिति श्रुतम् । तत्र न तावदियं प्रकरणात्प्रयाजादिवत्साक्षात् तदर्था । दर्शपूर्णमासावारप्स्यमान इति पदद्वयवैयर्थ्यापत्तेः । नापि वक्ष्यमाणे आरम्भे निमित्ते भेदनहोमादिवन्नैमित्तिकी । क्रियार्थाया क्रियायामुपपदे विहितेन लृट्प्रत्ययेनास्या आरम्भार्थत्वप्रतीतेरिति तावदविवादम् । आरम्भशब्दार्थश्चोद्देश्यकोटिप्रविष्टः क इति चिन्त्यते । प्रतिप्रयोगमावृत्त्यनावृत्तौ तु सूत्रकारायुक्ते अपि फलमिति नेहाधिकरणशरीरम् । एकादशोपयुक्तत्वेनोक्तानुपयुक्तत्वात् ।

तथाहि उक्तविधप्रवर्त्तनविषयत्वं दर्शपूर्णमासोद्देश्यकप्रवृत्तिध्वंससमानकालीनतदुद्देश्यकप्रवृत्तिविषयत्वम्। तच्च न दर्शपूर्णमासीयप्रथमप्रयोगाद्यपदार्थभिन्ने सम्भवति। तदितरस्य सर्व्वस्य तदुद्देश्यकस्य तादृशध्वंससमानकालीनत्वात्। अतश्च दर्शपूर्णमासपदे अपूर्वसाधनत्वलक्षणायां तत्पदार्थरहितायां तादृशप्रथमप्रयोगीयाद्यपदार्थान्तरवत्यां विकृतावुक्तित्यैवान्वारम्भणीया। स्टद्युत्या च तादृशप्रथमपदार्थप्रागभावविधानात्प्रयोगवहिर्भावसिद्धिः। द्वितीयादिप्रयोगे चोक्तविधधर्मावच्छिन्नपदार्थाभावादकरणम्।

अत्र हि दर्शपूर्णमासयोर्न तत्तद्व्यक्तित्वेन प्रवृत्तिं प्रत्युद्देश्यता। येन व्यक्तित्वावच्छिन्नोद्देश्यकप्रवृत्तिध्वंससमानकालीनतद्व्यक्त्युद्देश्यकप्रवृत्तिविषयत्वाद्द्वितीयप्रयोगीयाद्यपदार्थाङ्गत्वेनापि सा स्यात्। दर्शपूर्णमासाविति श्रवणात्तु दर्शपूर्णमासत्वमेवोद्देश्यतावच्छेदकम्। आवश्यकी चोभयत्रापि प्रवृत्तिनिरूपितोद्देश्यतावच्छेदकविवक्षा। इतरथा सामान्यतो विहितक्रिया मे जायतामित्याकारकोद्देश्यतया गङ्गास्नानप्रवृत्तावपि दर्शपूर्णमासोद्देश्यकप्रवृत्तित्वात्तत्राप्यारम्भणीयापत्तेः।

अतोदर्शपूर्णमासत्वावच्छिन्नोद्देश्यताकप्रवृत्तिध्वंससमानकालीनतदवच्छिन्नोद्देश्यताकप्रवृत्तिविषयत्वेनैव प्रथमपदार्थस्य उद्देश्यता। अत्र सामान्याकारकेच्छया गङ्गास्नानानुष्ठानोत्तरमाद्यदर्शपूर्णमासप्रयोगेऽप्यन्वारम्भणीया न स्यात्। अतः प्रथमावच्छेदकविवक्षा। दर्शपूर्णमासाकरणेऽप्युक्तविधेच्छया गङ्गास्नानकरणे तदापत्तेर्द्वितीयावच्छेदकविवक्षा। वस्तुतस्तु दर्शपूर्णमासौ मे जायेतामित्याकार-

ध्यवसायविशेषः। तदर्थान्वारम्भणीयाध्याधानरहितायामपि विकृतौ स्वात्कर्तव्यैव। प्रकृतौ चाध्याधानोत्तरं सर्वयावज्जीविकप्रयोगाणां सकृदेव सङ्कल्पकरणात् सकृदेवान्वारम्भणीयेति।

तच, तत्तत्कालावस्थिततत्तज्जीवनाख्यनिमित्तवशेन तत्तन्नैमित्तिकप्रयोगाणां तत्तत्काल एवोपस्थितत्वेनाध्यवसायापत्तौ सर्वसाधारणाध्यवसाये प्रमाणाभावात्। तच यथैवैकस्मिन् पुत्रे जाते वैश्वानरीं निरूप्य पुत्रान्तरजन्मनि पुनर्निर्वापे नाध्यवसायैक्यं, तद्दिहाप्यध्यवसायभेदात् सकृत्करणानापत्तिः।

तस्मादेवं भाष्यकारादिभिः सिद्धान्तितम्। नाध्यवसायवाच्यारम्भशब्दः। तथाप्यप्रवृत्तप्रवर्तनविषयत्वेनैवारम्भशब्दप्रयोगात्। अतोऽप्रवृत्तप्रवर्तनमेवारम्भः तद्विषयत्वात् तु पदार्थेष्वारम्भशब्दप्रयोगः। अतस्तदर्थाऽन्वारम्भणीया। सापि न साक्षादपि तु भावना कर्तृत्वपात्तत्वात् लभ्यमानवत् कर्तारमारभयोग्य करोतीति तद्द्वारा आरम्भार्था।

यद्यपि च दर्शपूर्णमासाविति द्वितीयायाविषयत्वार्थकत्वाद्दर्शपूर्णमासविषयकाप्रवृत्तप्रवर्तनविषयत्वस्य च दर्शपूर्णमासाख्यप्रधानस्यैव सम्भवात् ततः पूर्वं प्रयोगमध्ये एवारम्भणीयानुष्ठेयेत्यर्थो दर्शपूर्णमासावारप्स्यमान इत्यस्य प्राप्नोति, तथापि उक्तार्थस्य पाठादेव प्राप्तेः पदद्वयवैयर्थ्यप्रसङ्गेन द्वितीयोद्देश्यत्वपरा*। तेनाङ्गविषयप्रवृत्तेरपि प्रधानोद्देश्यकत्वाविघाताद्दर्शपूर्णमासोद्देश्यकाप्रवृत्तप्रवर्तनविषयत्वं तत्प्रथमप्रयोगीयाद्यपदार्थ एवेति तदङ्गमारम्भणीया।

* द्वितीयोद्देश्यपरा,— इति सो॰ पुस्तके पाठ।